श्रीः ।

भर्तृहरिविरचितं

# शतकत्रयम् ।

कोरिडोपण्डितवर्यस्य तनूजेन गङ्गाम्बिकागर्भरत्ना-
करसुधाकरेण रामचन्द्रबुधेन्द्रेण विरचितया

सहृदयानन्दिन्याख्यया व्याख्यया,

महामहोपाध्यायपण्डितमिहिरचन्द्रकृत-
भाषाटीकया चोपेतम् ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम् प्रेस,

कल्याण-बंबई.

संवत् १९८९, शके १८५४.



मुद्रक और प्रकाशक–

गंगाविष्णु श्रीकृष्णदास,

मालिक–"लक्ष्मीवेङ्कटेश्वर" स्टीम्–प्रेस, कल्याण–बंबई.







# प्रस्तावना ।

अयि सहृदयाः! श्रीमत्कविकुलतिलकायमानश्रीभर्तृहरिविरचितं नीतिश्रृंगारवैराग्यशतकत्रयाख्यं काव्यं विदितचरमेव तत्रभवद्भिः श्रीमद्भिः । तदेतत् कविवरभर्तृहरिविरचितमनुपमं काव्यं सुव्याख्याया अलाभात् मेघच्छन्नचन्द्रिकेवास्पष्टप्रकाशमभवत्।यद्यप्यस्य काव्यस्य सन्त्यन्यानि व्याख्यानान्यन्यत्रात्र च मुद्रितानि । परन्तु तानि अल्पास्फुटार्थद्योतकत्वात् न प्रीणयन्त्यध्येतृजनचेतांस्यतो नार्हाणि तान्येतत्काव्यस्येति निश्चित्यास्माभिर्लब्धं महता प्रयत्नेन रामचन्द्रबुधेन्द्रविरचितं सहृदयानन्दिन्याख्यं व्याख्यानम् । एतद्व्याख्यानं स्फुटत्वात् विस्तृतत्वाच्छास्त्रप्रमाणितयुक्तिमत्त्वाच्छ्रीभर्तृहरिकवीशहृदयस्य सर्वतः प्रकाशनेऽलभत एतदेव उक्तकविकृतशतकत्रयेण साकं मुद्रितम् । एतद्व्याख्यानमान्ध्रलिपितोऽस्माभिर्देवनागराक्षरैर्विपरिवर्त्य मुद्रितम् । एभी रामचन्द्रबुधेन्द्रैः शतकत्रयस्य पद्धत्यादिप्रदर्शनेन व्यवस्था कृतास्ति । सा चानुक्रमण्याद्यवलोकनेन स्फुटीभविष्यति । अस्मिन् शतकत्रये रामचन्द्रबुधेन्द्रादृता एव पाठा मूले स्थापिताः।पाठान्तराणि च तत्र तत्र टिप्पणीरूपेण स्थापितानि । अस्मिन् शतकत्रये शतसंख्याबहिर्भूतत्वात् रामचन्द्रबुधेन्द्रस्य येषु श्लोकेषु व्याख्यानं नास्ति तेषु श्लोकेषु पूर्वतनं व्याख्यानं स्थापितम् । किं च हिन्दीभाषाभिज्ञजनसौकर्याय हिन्दीभाषाव्याख्यानमप्यनेन साकं मुद्रितम् । तदेतदनुपमं पुस्तकं संपाद्य शतकत्रयरसपिपासवो लभन्तामनवरतानन्दमिति शम् ॥

सविनयं निवेदयिता—श्रीकृष्णदासात्मजो क्षेमराजः।

श्रीवेंकटेश्वरमुद्रालयाध्यक्षः ।

अथ

# शतकत्रयस्थविषयानुक्रमणिका ।





इति विषयानुक्रमणिका समाप्ता ।



अथ

# भर्तृहरिशतकत्रयस्थश्लोकानामकारादिवर्णक्रमेणानुक्रमणिका।





× एतच्चिह्नाङ्किताः श्लोका रामचन्द्रबुधेन्द्रेण न व्याख्याताः।

इति श्लोकानुक्रमणिका समाप्ता ।



श्रीगणेशाय नमः ।

संस्कृतटीका-भाषाटीकासहितं

भर्तृहरिकृतं

# शतकत्रयम् ।

## नीतिशतकम् १ ।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥

संस्कृतव्याख्या ।

वन्देऽहं रघुनन्दनांघ्रिसरसीजातद्वयमिद्धया-
मन्दानन्दमरन्दबिन्दुलहरीसन्दोहनिष्यन्दिनीम् ।
यत्रेन्दिन्दिरजातवन्मुनिमनोवृन्दकृतस्वाश्रयं
काञ्चित्तुन्दिलतामविन्दत परानन्दावबोधोदयात् ॥ १ ॥
श्रीमांस्त्रैलिङ्गदेशे स जयति विबुधश्रेणिकोटीरकोटी-
कोटीमाणिक्यभूतागणितगुणगणोऽखण्डपाण्डित्यशौण्डः ।
धीरः शाण्डिल्यगोत्रः सकलकविकुलाह्लादिसूक्तिप्रवीणो
वीणोदाहार्यविद्याविवरणनिपुणो रामचन्द्रो बुधेन्द्रः ॥ २ ॥
वेदान्तोदन्तचिन्तामतनुत चतुरेणान्तरेणाकृतर्के
तर्के चातर्कयद्यः फणिपतिवचसां सारमाधत्त योगे ।
योगे यः सांख्यसंख्यागमसमयविधावप्यलं तन्त्रविद्या
विद्यायामिन्यधीशः स्फुरति निरुपमो वध्ववंशाम्बुराशौ ॥ ३ ॥
विप्रेणाभूतपूर्वं फलमखिलपसालम्भि सूर्यप्रसादा-
ल्लब्ध्वा तस्मात्स्वयं तत्प्रचुरतरजरापभ्रताकुब्जानाढ्यम् ।

---

१ आनन्द इति पाठान्तरम् । २ वाराय इति पाठान्तरम् ।

हित्वा मोहं स्वकान्तास्वतिविमलधिया तं निषेव्याप्तभव्यो
योगीन्द्रो भर्तृहर्याह्वय इह कुरुतेऽद्यापि विद्याविलासम् ॥ ४ ॥
सोऽहमेतत्प्रणीतायाः सुभाषितकृतेः कृतौ ।
कुर्वे सहृदयानन्दिन्याख्यां व्याख्यां सतां मुदे ॥ ५ ॥
व्याकुर्वन्ति निबद्धगौरवभयान्नैव स्फुटं युक्तिभि-
र्ये तेऽप्येतृजनप्रतारणपराः का नैपुणी वा ततः ।
वैखर्या वचसां कवीशहृदयं प्रख्यापयन्नन्वय-
द्वारेवाहमिहाखिलं प्रविवृणोम्युक्तिव्रजोज्जृम्भितम् ॥ ६ ॥

इह खलु तत्र भवानशेषविशेषसारपारदृश्वा विश्वातिशायी गुणगरिमावतारो भर्तृहरिनामा महायोगीश्वरो निजयोगमाहिमानुसारेण करतलामलकीकृताखिलविरिञ्चिप्रपञ्चस्तृणकणमिव जगज्जालमालोकयन्परमकारुणिको लोकव्यवहारपरिज्ञानखिन्नान्तःकरणो लोकानुजिघृक्षया नीतिशृङ्गारवैराग्यवर्णनप्रख्यं सुभाषितत्रिशत्याख्यं कञ्चिद्ग्रन्थं प्रारभमाणस्तत्परिपंथिनिर्मथनद्वारा परिसमाप्तिप्रचयगमनलक्षणफलमाशासानः शिष्टाचारपरिप्राप्तविशिष्टपरंज्योतीरूपेष्टदेवतानमस्काराकारं मङ्गलमादौ निबध्नाति—

दिगिति ॥ दिशः प्राच्यादिदिक्प्रदेशाः । कालाः भूतभविष्यद्वर्तमानरूपाः । आदिशब्दसंगृहीतानि वस्तूनि । तथा च दिक्काला आदयो येषां तानि दिक्कालादीनि । तद्गुणसंविज्ञानबहुव्रीहिः । अन्यथा तेषामप्राधान्ये विनाभावे शास्त्रविरोधः स्यात् । तैरनवच्छिन्ना अपरिकल्प्ता । विभुत्वान्नित्यत्वादेकत्वाच्च देशतः कालतो वस्तुतश्चापरिच्छिन्नेत्यर्थः । अत एवानन्तापरिमिता त्रिविधपरिच्छेदशून्यत्वादखण्डदण्डायमानेत्यर्थः । एतेन सजातीयविजातीयस्वगतभेदत्रयराहित्यमर्थात्सूचितमिति विज्ञेयम् । आनन्देति पाठे आनंदचिच्छब्दयोर्द्वन्द्वान्ते श्रूयमाणे मात्रशब्दः प्रत्येकं संबध्यते । तथा चानन्दमात्रा आनन्दमयी चिन्मात्रज्ञानघना च । चिदेकरसेति यावत् । तादृशी मूर्तिस्तस्यै तद्रूपायै इत्यर्थः।"सत्यं ज्ञानमनन्तं ब्रह्म, एकमेवाद्वितीयं ब्रह्म, विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानात्, आनन्दमयोऽभ्यासात्, सत्यं ज्ञानमनन्तं यत्सानन्दं ब्रह्म केवलम्" इत्यादिश्रुतिस्मृतिकदम्बकमत्र प्रमाणमिति भावः । नात्र बहुव्रीहिराश्रयणीयः । अन्यथा "इकोऽचि विभक्तौ" इति नुमि 'मूर्तिने' इति स्यात् । न च "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" इति न पुंवद्भाव इति वाच्यम् । मूर्तिशब्दस्य नियतस्त्रीलिंगत्वेनाभाषितपुंस्कत्वात् । तस्माद्यथाश्रुतमेव साधु मन्तव्यम् । भाषितपुंस्कत्वस्यानित्यत्वविवक्षायां तु बहुव्रीहिविहिते तदा

न काप्यनुपपत्तिरिति सर्वं सुस्थम् । तथा स्वानुभूतिरात्मानुभव एव एकं मुख्यमद्वितीयं वा मानं स्वप्रकाशसाधनं यस्य तस्मै स्वयंप्रकाशसंविद्रूपत्वादस्य प्रदीपवत्स्वपरप्रकाशकतया स्वसाक्षात्कारे स्वानुभव एव प्रमाणं नतु घटादेरिव चक्षुरादि प्रामाणिकत्वमिति भावः । एतेन वृत्तिविषयत्वमेव न तु फलविषयत्वमित्यवधेयम् । तदुक्तमाचार्यैः–"स्वबोधे नान्यबोधेच्छा बोधरूपतयात्मनः । न दीपस्यान्यदीपेच्छा यथा स्वात्मप्रकाशने ॥ " इति । तथा शान्ताय अविज्ञातत्कार्यसंबन्धशून्यत्वात्प्रसन्नाय । "निष्कलं निष्क्रियं शन्ताम्" इति श्रुतेः । तेजसे ज्योतीरूपाय ब्रह्मणे नमः प्रह्वीभावः । " नमः स्वस्ति० " इत्यादिना चतुर्थी । अत्र " मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते । वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्ति । अध्येतारश्च प्रवक्तारो भवन्ति । " इति भगवद्भाष्यकारवचनप्रामाण्यात् । " आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् । " इत्यादिदण्डिवचनाच्चादौ नमस्काररूपमन्ते परब्रह्मस्मरणलक्षणं च मध्ये तदुभयात्मकं च मङ्गलमाचरितमित्यवगन्तव्यम् । " अथ शब्दानुशासनम्" इत्यादौ सर्वत्र शास्त्रारम्भे मङ्गलार्थत्वेनाथशब्दप्रयोगदर्शनात् तस्य तदर्थकत्वं च । " मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ " इत्यभिधानात् । " ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥" इति स्मरणाच्च । तच्च निर्विघ्नं प्रारीप्सितपरिसमाप्तिकामेनावश्यं कर्तव्यम् । " परिसमाप्तिकामो मङ्गलमाचरेत् " इत्यनुमितिश्रुतिबोधितकर्तव्यताकत्वात् । अनुमानं च मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वात् । दर्शाद्याचारवदित्यन्वयव्यतिरेकाभ्यां तस्य कारणत्वानिश्चयात् । कथमवश्यकर्तव्यताकत्वम् । तथाहि शाबरभाष्यादौ कृतेऽपि मङ्गले समाप्तेरजातत्वात् किरणावल्यादावकृतेऽपि जातत्वादिति चेत् सत्यम् । क्वचिद्विघ्नबाहुल्येन तत्समसंख्याकमङ्गलाभावात् । क्वचित्प्राचीनमङ्गलबाहुल्याच्च व्यत्यय इत्यलमतिप्रसङ्गेन । अत्र चारुत्वेन यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्"इति लक्षणात् । श्लोकास्यमेतदानुष्टुभं वृत्तम् । " पंचमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः । गुरुषष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥ " इति वचनात् ॥ १ ॥

भाषा टीका–दिशा और काल जिसकी मूर्तिका संकोच नहीं कर सकते और जो अंतरहित और चेतनरूप है और जो अपनेही अनुभवसे जाना जाता है ऐसे शांत और तेजोरूप ब्रह्मको नमस्कार है ॥ १ ॥

" प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । " एवं नीतिर्वर्तते, तर्हि केन कारणेन ग्रन्थः कृतस्तत्कारणं येन वैराग्योत्पत्तिस्तल्लिखति--

यां चिन्तयामि सततं मयि सा विरक्ता
साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥ २ ॥

यामिति ॥ धिग्योगे द्वितीया भवति अतो द्वितीया विभक्तिरुक्ता । राज्ञा विक्रमशकेन स्वलब्धं फलं कस्मैचिद्ब्राह्मणाय दत्तम् । तस्य फलस्य महिमा येन भक्षितं सोऽमरो भवति मरणं नास्ति तत्फलं ब्राह्मणेन मनसि विचार्य बहूनां पालको राजा भर्तृहरिस्तस्मै दत्तं तेन भर्तृहरिणा स्वपत्नी प्रियतमा तस्यै दत्तं तयापि कश्चन जारस्तस्मै दत्तं जारेणापि स्वस्य प्रिया काचन पुंश्चली तस्यै दत्तं तत्फलम् एकस्मिन्दिने पुंश्चलीसमीपे राज्ञा दृष्टं पश्चाच्छोधः कृतः । तावत्पूर्वोपरं ज्ञात्वा पश्चाद्वैराग्येण निन्दति । अहं यां स्वस्त्रियं चिन्तयामि प्राणादधिकां मन्ये सा स्त्री मयि विरक्ता अन्यजारं प्रियतममिच्छति । सोऽपि अन्यां पुंश्चलीं प्रियत्वेनेच्छति एवं मदर्थेऽपि काचन स्त्री मया सह संगो भवितव्य इति मनसि संतोषं प्राप्नोति एवं न कश्चित्कस्यचित्प्रियः अतो निंदति । सा पुंश्चली तां धिक् स जारः तं धिक् इयं मदीया स्त्री इमां च धिक् अहमपि एताद्दशो मूर्खो मां च धिक् । इदं सर्वं मदनकृतं जातमतो मदनं च धिक् ॥ २ ॥

जिसकी मैं निरन्तर चिन्ता करता हूं सो मुझसे विरक्त होकर दूसरे जनकी इच्छा करती है और वह जन अन्य स्त्रीपर आसक्त है और वह अन्य स्त्री हमसे प्रसन्न है इसलिये मेरी प्रिया ( जो दूसरे जनकी चाहती है ) को और दूसरे जन ( जो अन्यस्त्रीको चाहता है)को और इस अन्य स्त्री ( जो फिर मुझसे प्रसन्न है ) को और मुझे ( जो इससे फँसाहूँ ) और कामदेवको भी धिक्कार है कि जिसकी यह प्रेरणा है॥२॥

प्रबन्धस्यास्य विविधस्वरूपपरिज्ञानार्थं तत्तत्पद्धतिनिबन्धनतया चिकीर्षितत्वात्तत्र मूर्खविद्वत्पद्धत्योर्व्यावर्तकभावतयावशिष्टत्वेनोभयनिरूपणे संप्राप्ते प्राथम्ये मुख्यमसंगसंगत्योरन्यतरस्याभावादशोकवनिकान्यायप्रायत्वाचादौ मूर्खपद्धतिं वर्णयितुमारभते । तत्र प्रथमं सहृदयाभावात्सुभाषितस्य वक्तुमनवकाश इत्याह-

**बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः।**
**अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ ३ ॥**

बोद्धार इति। बोद्धारः परिज्ञातारः "बुध अवगमने" इत्यस्माद्धातोस्तृच्। मत्सरेणासूयया परोत्कर्षासहनेन ग्रस्ताः समाक्रान्ताः न ते हृदयालवः अतो नानुमोदन्ते इति भावः। प्रभवो राजानः। स्मयदूषिताः गर्वदुर्विनीताः नतु विनयप्रह्वाः। अतो न शृण्वन्तीति भावः। अन्ये उक्तोभयव्यतिरिक्तजनाः अबोधेनाज्ञानेनोपहता नष्टात्मानस्ते न त्वाधिकारिणः। अतस्तेषामाकर्णनयोग्यतापि नास्तीति भावः। तस्मात्सुभाषितं साधुभाषणं प्रियवचनमिति यावत्। नपुंसके भावे क्तः। अंगे अन्तरंगे जीर्णमन्तार्हितम्। न त्वद्यापि बहिः प्रवृत्तम्। तथापि वक्ष्यामीति वाक्यशेषः। वृत्तं पूर्ववत् ॥ ३ ॥

विद्याभिमानी लोग तो अपने मत्सरहीसे ग्रसित हैं और धनवान् लोग अपने द्रव्यके गर्वसे किसी गुणीका आदरही नहीं करते और जो हैं सो साधारण अल्पज्ञ हैं इसलिये उनसे कहनेकोभी जी नहीं चाहता इन कारणोंसे सुभाषित ( उत्तम काव्य ) शरीरहीमें जीर्ण हो जाता है अर्थात् कदाचित् संसारमें प्रगट नहीं होता ॥ ३ ॥

ननु कीदृशो मूर्खो यतस्तत्स्वरूपं निरूप्यते तत्राह–

**अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।**
**ज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रंजयति ॥ ४ ॥**

अज्ञ इति ॥ न जानातीत्यज्ञः अकिंचिज्ज्ञः मूढ इति यावत्। सुखमक्लेशेनाराध्यः समाधेयः। तस्योपदेशमात्रेणैव विस्रम्भसम्भवादिति भावः। विशेषं जानातीति विशेषज्ञः तत्त्ववेत्ता सुखतरमत्यन्तमनायासेनेत्यर्थः। "द्विवचनविभज्य०" इत्यादिना तरप्प्रत्ययः। आराध्यते समाधीयते। तद्बुद्धेः सर्वदा विशेषग्रहणमात्रपर्यवसानादिति भावः। किन्तु ज्ञानं शास्त्रजन्यसंवित् तस्य लवेन दुर्विदग्धं पण्डितमानिनं नरं मूर्खजनमित्यर्थः। ब्रह्मापि कर्तुमकर्तुमन्यथाकर्तुं समर्थश्चतुर्मुखोऽपि किमुतान्य इति भावः। न रञ्जयति रञ्जयितुं न शक्नोति। तन्मनः सूक्तिसहस्रैरपि समाधानासंभवादिति भावः। उक्तोभयमध्यस्थो मूर्ख इति फलितार्थः। रंजनसंबन्धेप्यासंबन्धाभिधानातिशयोक्तिर्भेदः। अज्ञो विशेषज्ञ इत्यत्र च "आतोऽनुपसर्गे कः" इति कप्रत्ययो न तु "इगु-

पघज्ञा० ” इत्यादिना कप्रत्ययः। अत एवाह भगवान् कात्यायनः अकारादनुपसर्गात्कर्मोपपदो न भवतीति प्रतिषेधेनेति वार्तिकव्याख्याने भाष्यकारेणार्थज्ञशब्दमुदाहृत्याप्यर्थत्वस्य समर्थनात् । एतच्चासकृदुक्तं मदीयशृंगारशृंगाटकेऽपि 'रुक्मिणीरसमयं समयज्ञः ' इत्यादिषु । एवमुत्तरत्रापि द्रष्टव्यम् । आर्यावृत्तभेदोऽयमुन्नेयः । उत्तरत्रापि भेदान्तराण्युन्नेयानि ॥ ४ ॥

अज्ञानी सुखसे साधा जा सकता है और ज्ञानी अतिसुखसे परन्तु अल्पज्ञ नरको ब्रह्माभी नहीं साध सकता है ॥ ४ ॥

अथ द्वाभ्यां मूर्खजनचित्तस्य दुराराध्यतामाह—

प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्रान्तरात्
समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ५ ॥

प्रसह्येति। मकरः शिशुमाराख्यो जलग्राहविशेषः । तस्य वक्त्रे वदनगह्वरे । दंष्ट्राणां निशिताग्रदशनविशेषाणाम् अन्तरात् अन्तरालात्। अतिसंकटादित्यर्थः। प्रसह्य बलात्कारेण । मणिं रत्नं दुर्धरमपीति भावः । उद्धरेत् उद्धर्तुं शक्नुयात्। जन इति शेषः । केनाचिदवधानेनानयेदित्यर्थः । तथा प्रचलन्तो लोलायमानाः ये ऊर्मयस्तेषां मालाभिः परम्पराभिराकुलं संकुलम् । उल्लोलकल्लोलोज्जृम्भितमित्यर्थः । समुद्रमपि दुस्तरमपीति भावः । संतरेत् सम्यक् तरितुं शक्नुयात् । केनचित्प्लवनसाधनेनेति भावः । लंघयेदिति पाठे हनुमानिव केनचिच्छक्तिविशेषेण लंघितुं शक्नुयादित्यर्थः । तथा कोपितं संजातकोपं कोपवशात्सफूत्कारं। जिह्वया सृक्किप्रान्तौ लेलिह्यानमित्यर्थः ।“तदस्य संजातं तारकादिभ्य इतच् ” इतीतच्प्रत्ययः । तारकादिराकृतिगणः । भुजंगं सर्पमपि दुर्द्धरमपीति भावः । शिरसि केशपाशे पुष्पेण तुल्यं पुष्पवत् । पुष्पस्रजमिवेत्यर्थः । “ तेन तुल्यं क्रिया चेद्वतिः ” इति वतिप्रत्ययः। धारयेत् धारयितुं शक्नुयात् । मणिमन्त्रादिसाधनेनेति भावः। किंतु प्रतिनिविष्टमभिनिवेशाक्रान्तम् । दुराग्रहाविष्टमिति यावत् । मूर्खजनस्य दुर्विदग्धस्य चित्तं नाराधयेत् आराधयितुं समाधातुं न

१ अंकुशादिति पाठान्तरम् । २ लंघयेत् इति पाठांतरम् ।

शक्नुयात्। उपायालाभादिति भावः। मकरदंष्ट्रान्तस्थमण्युद्धरणादिप्रायं मूर्खजनचित्तसमाराधनमिति श्लोकार्थः॥ ५॥

बलात्कारसे मगरके मुखके दाढोंकी जडमेंसे मणिको मनुष्य निकाल सकता है और चंचलतरंगोंवाले भरे हुए समुद्रको तैरके पार हो सकता है और क्रोधित सर्पको फूलकी समान मनुष्य शिर पर धर सकता है परन्तु मूर्खका चित्त जो असत् वस्तुमें धसा हुआ है उसें कोई नहीं विलगा सकता है॥ ५॥

एवं दुर्लभवस्तुसाधने दुष्करकार्यकरणे च सम्भावनया शक्तिरुक्ता, न मूर्खचित्तप्रसाधने। इदानीमत्यन्तदुर्लभवस्त्वपि प्रसाधयेन्न तु तच्चित्तमित्याह–

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः।
कदाचिदपि पर्यटञ्छशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत्॥ ६॥

लभेतेति॥ यत्नतः कृताश्रितप्रयत्नात्। "पञ्चम्यास्तसिल्" पीडयन् केनचिद्यन्त्रेण संमर्दयन् सिकतासु वालुकास्वपि कालत्रयेऽप्यन्तःस्नेहाद्यधिकरणभूतास्वपीति भावः। तैलं स्नेहं लभेत लब्धुं शक्नुयात्। स्नेहने तैलमित्यनुशासनान्नात्र तिलसम्बन्धित्वाशंकाकलंकावतार इति द्रष्टव्यम्। तथा पातुमिच्छा पिपासा। "पा पाने" इत्यस्माद्धातोः सन्नन्तात् स्त्रियामप्रत्यये टाप्। तया आर्दितः पीडितः तृष्णातुरः सन्नित्यर्थः। मृगतृष्णिकासु च मरुमरीचिकास्वपि वा। जलभ्रममात्रदायिनीष्वपीति भावः। मृगतृष्णाशब्दात्स्वार्थे कप्रत्यये "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" इतीकारः। सलिलं जलं पिबेत्पातुं शक्नुयात्। "पाघ्राध्मा०" इत्यादिना पिबतेः पिबादेशः। तथा पर्यटन् तत्र तत्र वनान्तरे सञ्चरन्। कदाचित् कस्मिंश्चित् समये शशस्य मृगविशेषस्य विषाणं शृङ्गमपि वाङ्मात्रगोचरमपीति भावः। आसादयेदधिगन्तुं शक्नुयात्। नतु प्रतिनिविष्टेत्यादि पूर्ववत्। सिकतातैलालाभादिवदत्यन्तदुर्घटं मूर्खचित्तसमाधानमिति भावः। मृगतृष्णिकाजलशशविषाणयोर्गगनारविन्दवन्ध्यापुत्रवदत्यन्तासङ्गतत्वमुक्तं सुरेश्वरवार्तिके। "मृगतृष्णाम्भासि स्नातः खपुष्पकृतशेखरः। एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः॥" इति। पद्यद्वयेऽप्यस्मिन् मणिमुद्धरेदि-

स्यादौ अधिशाकि लिम्पति शक्यार्थे विधिलिङ् । तथा अपिशब्दः समुच्चये । सम्भावनायां चैतदनुवाद इति विवेकः । उभयथाप्यनुशासनसम्भवात् प्रकृतार्थोपपत्तेश्च । यथाहामरसिंहः । " गर्हासमुच्चयप्रश्नशंकासम्भावनास्वपि । " इति । अत्र समुद्रं लंघयेदित्युदाजहार स्वामी । अत्र मण्युद्धरणाद्यसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः । श्लोकद्वयमेतत्पृथ्वीवृत्तम् । तदुक्तं केदारेण वृत्तरत्नाकरे । " जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः । " इति । अत एव सिकतासु तैलमित्यत्र, मृगतृष्णिकासु सलिलमित्यत्र, मूर्खजनचित्तमित्यत्र च अष्टमवर्णे विहितस्य विच्छेदस्याभावाद्यतिभ्रष्टं नाम दोषः । इममेव केचिदपदस्थयतिं वदन्ति । तदुक्तं विद्यानाथेन । " यत्र स्थाने यतिभ्रंशस्तद्यतिभ्रष्टमुच्यते । " इति । " कुत्रचित्पदमध्ये तु यतिमिच्छन्ति सूरयः । यत्र पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥" इति दंतिलवचनमपि समाधातुं न शक्नोति पूर्वापरभागयोरेकवर्णनगदत्वात् ' निरंकुशाः खलु कवयो भवन्ति सर्वपथीनाः' इत्यलमतिप्रपञ्चेन ॥ ६ ॥

यदि यत्नसे पेरै तो बालूमेंभी तेल पावे और मृगतृष्णामें प्यासा कदाचित् जलभी पीवे और ढूँढनेसे शशका सींगभी मिलसके परन्तु मूर्खका चित्त जो असत्वस्तुमें धसा है उसे कोई नहीं भिन्न कर सम्भाल सकता है ॥ ६ ॥

अथ मूर्खानुनयेच्छोरत्यन्ताऽविवेकितामाह–

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं[1] समुज्जृम्भते
भेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति ।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
मूर्खान्यः प्रतिनेतुमिच्छति बलात्सूक्तैः[2] सुधास्यंदिभिः॥ ७॥

व्यालमिति ॥ असौ पुमान् व्यालं दुष्टगजं न तु साधारणजन्तुमित्यर्थः । " व्यालो दुष्टगजे सर्पे " इति विश्वः । बालमृणालतन्तुभिः कोमलबिसकिसलयसूत्रैः ईषन्निरोधस्याप्यनुपयुक्तैरिति भावः । रोद्धुं नियन्तुम् । समुज्जृम्भते कृतप्रयत्नो भवतीत्यर्थः । तथा वज्रमणिं हीराख्यमणिविशेषम् । आरोहलभ्य-

१ छेत्तुमिति पाठान्तरम् । २ नेतुं वाञ्छति यः खलान्पथि सतां इति पाठान्तरम् ।

मपीति भावः। "हीरो वज्रश्च कथ्यते" इति हलायुधः। शिरीषकुसुमस्यातिकोमलपुष्पविशेषस्य प्रान्तेनांचलेन भेत्तुं विदारयितुं सन्नह्यति। उद्युक्त इत्यर्थः। तथा क्षाराम्बुधेः लवणार्णवस्य। न तु स्वल्पजलाशयस्य। मधुबिन्दुना क्षौद्रविप्रुषा। न त्वविच्छिन्नमधुधारासम्पातेनेत्यर्थः। माधुर्यं मधुरगुणं रचयितुं सम्पादयितुमीहते कांक्षति। कोऽसावित्यत आह। यः पुमान् बलाद्वाक्पाटवात् सुधास्यन्दिभिरमृतस्वादुभिरतिमधुरैरित्यर्थः। सूक्तैः प्रियोक्तिभिः। "नपुंसके भावे क्तः" मूर्खान् प्रतिनेतुं समाधातुमिच्छति सोऽसाविति सम्बन्धः। मृणालतन्तुभिर्व्यालनिरोधनादित्तत्पर इव मूर्खानुनयपरोऽप्यत्यन्ताविवेकीति भावः। अत्यन्तदुष्करं मूर्खप्रसादनमिति फलितार्थः। यत्र यः प्रतिनेतुमिच्छति वाञ्छति असौ समुज्जृम्भत इत्यादि विशिष्टानुनयेच्छाविजृम्भणादिर्वाक्यार्थयोर्निर्दिष्टैकत्वासम्भवात्सादृश्यलक्षणायामसंभवाद्वस्तुसम्बन्धो वाक्यार्थवृत्तिनिदर्शनाभेदः। न चायं दृष्टान्तः वाक्यभेदेन प्रतिबिंबकरणाक्षेपे तस्योत्थानात् अत्र तु वाक्यार्थे वाक्यासमारोपाद्वाक्यैकवाक्यतायां तदभाव इत्यलंकारसर्वस्वकारः। शार्दूलविक्रीडितम्। "सूर्याश्वैर्मसजास्ततताः सगुरवः शार्दूलविक्रीडितम्।" इति लक्षणात्॥ ७॥

वह मनुष्य कोमल कमलकी डंडीके सूतसे हाथीको बांधा चाहता है और शिरसके फूलकी पांखुरीसे हीरेको वेधा चाहता है और खारे समुद्रको एक बूंद मधुररससे मीठा किया चाहता है जो मूर्खोंका समाधान अपने अमृत समान उपदेशसे करनेकी इच्छा करता है॥७॥

अथैषां गतिमाह—

स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं छादनमज्ञतायाः।
विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम्॥ ८॥

स्वायत्तमिति॥ विधात्रा ब्रह्मणा कर्त्रा। स्वायत्तमात्माधीनं, न तु परोपदेशसापेक्षम्। "अधीनो निघ्न आयत्तः" इत्यमरः। एकान्तहितमत्यन्तहित-

१ गुणं इति पाठान्तरम्, क्षतं इति पाठान्तरम्।

कारि । स्वानुगुणाच्छादकत्वादिति भावः । तथा विशेषाकारेण सार्वविभक्तिकस्तसिः । सर्वविदां समाजे सर्वज्ञसभायाञ्च। विभूषणमुपस्कारहेतुभूतत्वाद्भूषणप्रायकमौनं तूष्णींभावः कर्म वा । "इगन्ताच्च लघुपूर्वात् " इत्यण् । अपण्डितानामविदुषां सम्बन्धिन्याः अज्ञतायाः मौढ्यस्य छादनमाच्छादकं सद्भिर्निर्मितं रचितम् । अतोऽपण्डितैर्निजमौढ्यसङ्गोपनार्थं मौनेनैव वर्तितव्यमिदमेवैतेषां गतिः अन्यथा हास्यास्पदता स्यादिति भावः। एकान्तकृतमिति पाठे तु कृतं कर्म। भावे क्तः । एकान्तकृतं रहस्यनुष्ठितं कर्म अज्ञतायाः छादनं सद्भिर्निर्मितमपंडितानां मौनम् । भूषणं सद्भिर्निर्मितमिति प्रत्येकमन्वयो द्रष्टव्यः । अज्ञताच्छादनार्थमेकान्त एव कर्म कर्तव्यमपंडितैर्मौनिभिरेव स्थातव्यम् । अन्यथा स्वरूपप्रकाशनेनापहास्यास्पदता स्यादिति भावः । उपजातिवृत्तम् । इन्द्रोपेन्द्रवज्रमिति लक्षणात् । तौ द्वौ कीदृग्विधौ । "स्यादिन्द्रवज्रा यदि तौ जगौ गः उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः ।" इति वृत्तरत्नाकरे उक्तत्वात् ॥ ८ ॥

मौन अर्थात् चुप रहना एक तो अपने अधीन है और भी इसमें अत्यंत हित है विधाताने इसको अज्ञानताका ढकना बनाया है और विशेषकरके सर्वज्ञोंकी सभामें मूर्खोंका मौनही भूषण है ॥ ८ ॥

अथ कस्यचिदनुभाविनः परान् प्रति स्वानुभवप्रकारमाह—

यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद्बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ९ ॥

यदेति ॥ अकिंचिज्ज्ञः अल्पज्ञः सन् यदा यस्मिन् समये गज इव मदेन दर्पेणान्धः कर्तव्याकर्तव्यविवेकशून्यः समभवं जातोऽस्मि तदा तस्मिन् समये सर्वज्ञः अशेषज्ञोऽस्मीति मम मनोऽवलिप्तं गर्वितमभवन् । " अल्पविद्यो महागर्वी " इति न्यायादल्पज्ञस्यैव गर्वहेतुत्वादिति भावः " अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च । " इति विश्वप्रकाशः । तदा यदा बुधजनसकाशाद्विद्वज्जनमुखादित्यर्थः । " आख्यातोपयोगे " इत्यपादानात्पञ्चमी । किंचित्किंचिन स्वल्पं स्वल्पम् ।

द्विप इति पाठान्तरम् ।

शास्त्रबोधिताचारादिकमिति शेषः। अवगतं ज्ञातं तदा मूर्खो मूढोऽस्मीति मे मम मदो ज्वर इव व्यपगतो निर्गतः अभूदिति शेषः। ज्वरवद्विकारकारित्वान्मदस्यैतत्साम्यमित्यवगन्तव्यम्। "आचार्यवान्पुरुषो वेद" इति श्रवणादाचार्यादवगतविद्यस्यैव विवेकसम्भवादिति भावः। अल्पज्ञोऽपि सन् यः सर्वज्ञमात्मानि मनुते स एव मूर्खः। यस्तु सर्वज्ञोऽपि मूढमौनी भवति स एव विद्वानिति विवेकः। मदो गर्वहेतुर्गुरुशुश्रूषादिर्विनयहेतुरिति फलितार्थः। यद्वा एतावन्तं कालं मदवशान्मूर्खोऽस्मि इदानीं गुरुशिक्षावशाद्विवेकावगतीरिति वा योजनीयम्। शिखरिणीवृत्तम्। "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात्॥ ९॥

जब मैं अज्ञ रहा हाथीके समान मदांध था तब मेरे मनमें ऐसा गर्व हुआ कि, मैं सर्वज्ञ हूं और जब मुझे कुछ कुछ पण्डितोंसे ज्ञान प्राप्त हुआ तब मैंने अपनेको मूर्ख जाना और मेरा वह मद ज्वरके समान उतर गया॥ ९॥

मूर्खस्यातिनैच्यं दृष्टान्तमुखेनाह–

कृमिकुलचितं लालाक्लिन्नं विगन्धि[1] जुगुप्सितं
निरुपमरसप्रीत्या खादन्खरास्थि[2] निरामिषम्।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम्॥ १०॥

कृमिकुलचितमिति॥ श्वा शुनकः कृमिकुलैरमेध्यमध्योत्पत्तिमदपानजन्तुसन्ततिभिश्चितं व्याप्तम्। लालाक्लिन्नं वसापूरार्द्रम्। यद्वा लाला सृणिका दन्तान्तजलमिति यावत्। "सृणिका स्यन्दिनी लाला" इत्यमरः। तया क्लिन्नं खादनसमये तस्यास्तत्र स्रवणादिति भावः। विगन्धि दुर्गंधि। अत्र विशब्दस्य पूतिपर्यायत्वविवक्षायां "गन्धस्ये०" इत्यादिना समासान्त इकारान्तादेशः। यद्वा विगन्ध आमगन्धोऽस्यास्तीति विगंधि। अत एव जुगुप्सितं तदपि हेयं निरामिषं मांसलेशशून्यं तदपि खरास्थि रासभकीकसम्। निरुपमः उपमानरहितो यो रसः स्वादः तत्र या प्रीतिः प्रेम तया खादन् भक्षयन् पार्श्वस्थमन्तिकस्थम्। "सुपि स्थः" इति कप्र-

१ विगाहि इति पाठान्तरम्। २ नरास्थि इति पाठान्तरम्।

स्यच:। सुरपतिमिन्द्रमपि किमुतान्यमिति भाव:।विलोक्य न शंकते न लज्जते। तथाहि क्षुद्रो जन्तुः नीचजन्तुः । परिग्रहे स्वीकृतवस्तुनि फल्गुतां तुच्छत्वं न गणयति न मनुते इत्यर्थः । जुगुप्सितकर्माचरणतत्परो मूर्खोऽप्येवं न महद्भिगर्हणाद्बिभेतीति भावः । " पत्नीपरिजनादानमूलशापाः परिग्रहाः । फल्गु तुच्छमसारं च " इत्यमरः । " फल्गु तुच्छमसारं च " इति यादवश्च । अत्राप्रस्तुतवृत्तान्तकथनात्प्रस्तुतमूर्खजनप्रतीतेरप्रस्तुतप्रशंसालंकारः । " अप्रस्तुतस्य कथनात्प्रस्तुतं यत्र गम्यते । अप्रस्तुतप्रशंसेयं सारूप्यादिनियन्त्रिता ॥ " इति लक्षणात् । इयं चोक्तार्थानुप्राणितेति संकरः।हरिणीवृत्तम् । "भवति हरिणी न्सौ म्रौ स्लौ गौ रसाम्बुधिविष्टपैः " इति लक्षणात् ॥ १० ॥

कीडोंके समूहसे भरा, लारसे भीगा, दुर्गंधसे भरा हुआ निंदित नीरस और निर्मांस, खरके हाडको निर्लज्ज श्वान प्रीतिपूर्वक खाते समय इंद्रकोभी अपने पास खडे हुए देखकर शंका नहीं करता है इससे यह सिद्ध हुआ कि, क्षुद्रजीव जिस वस्तुको करता है उसकी स्वच्छता पर ध्यान नहीं करता ॥ १० ॥

अथाविवेकस्यानर्थादिकथनद्वारा विवेकस्यावश्यकत्वं प्रदर्शयति–

शिरः शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिधरं
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ।
अथो गङ्गा सेयं पदमुपगता स्तोकमथवा
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ११ ॥

शिर इति ॥ अत्रोत्तरवाक्ये तच्छब्दस्य विद्यमानत्वाद्यच्छब्दोऽध्याहर्तव्यः यत्तदोर्नित्यसंबन्धात् । उत्तरवाक्यस्थयच्छब्दस्यैवं पूर्ववाक्यतच्छब्दानपेक्षितत्वानियमात् । तथा च या गङ्गा स्वर्लोकात् शर्वस्येदं शार्वमैश्वरम् । "ईश्वरः शर्व ईशानः" इत्यमरः । "तस्येदम् " इत्यण्प्रत्ययः । शिरः शीर्षमुपगतेति सर्वत्रानुषज्यते प्रथमविशेषः । तदनु पशुपतेः शर्वस्य शिरस्तः शीर्षात् ।" पञ्चम्यास्तसिल् " धरतीति धरः । पचाद्यच् । क्षित्याः धरः क्षितिधरः तं हिम-

१ पतति शिरसस्तत इति पाठांतरम् ।

वन्तम् उपगता। महीं धरतीति महीध्रः मूलविभुजादित्वात्कप्रत्ययः। यदाह वामनः। 'महीध्रादयो मूलविभुजादिदर्शनात्' इति। अत एव "महीध्रः शिखरी क्ष्माभृत्" इत्यमरः। उत्तुङ्गादुन्नतान्महीध्राद्धिमवदाख्यक्षितिधरादवनिं भुवमुपगता। अवनेश्चापि जलधिं समुद्रमुपगता। "नदीनां सागरो गतिः" इति। 'गंगासागरपूरेणा इति वचनादिति भावः। अथो अनन्तरम्। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। सेयं परिदृश्यमाना गङ्गा मन्दाकिनी स्तोकमल्पं परिमितमिति यावत्। पदं स्थानमुपगता प्राप्ता। यद्वा अधः उक्तप्रकारेणाधःप्रदेशे पाताले वा पदमिति योजना। अथवा तथाहीत्यर्थः। पक्षान्तरे वा। विवेकभ्रष्टानां विवेकशून्यानां स्थानभ्रष्टानां च शतमुखो बहुप्रकारः विनिपातो भङ्ग अथोऽधःपतनं च भवति। विवेकयुक्तानां तु नैवमतो विवेकान्न भ्रंशितव्यमिति भावः।यतः सकललोकमहिताया अपि गङ्गाया भ्रंशवशादीदृगवस्थापत्तिः किमुतान्येषामिति विवेकस्यात्यन्तावश्यकत्वमित्यवगन्तव्यम्। पुरा किल तत्र भगवान् भगीरथो अश्वमेधीयाश्वान्वेषणतत्परतया पातालमुपगतानां कपिलविलोचनानलभस्मीकृतानां सगरकुमाराणामूर्ध्वलोकप्राप्त्यर्थं स्वर्लोकात्सुरसरितमवतारयामासेति पौराणिकी कथात्रानुसन्धेया। अत्रानेकस्मिन्नाधारे क्रमेणैकस्याधेयभूतायाः गङ्गायाः स्थितिकथनात्पर्यायाख्योऽलंकारः। यदुक्तं विद्यानाथेन–"क्रमेणैकमनेकस्मिन्नाधारे वर्तते यदि। एकस्मिन्नथवानेके पर्यायालंकृतिर्मता॥" इति। शिखरिणीवृत्तं लक्षणं तूक्तम्॥ ११॥

यह गंगा पहिले स्वर्गसे शिवजीके मस्तकपर गिरी फिर वहाँसे ऊँचे पर्वतपर और पर्वतसे पृथ्वीपर पृथ्वीसे समुद्रमें इस क्रमसे नीचें नीचेंही गिरती गई और स्वल्प भी होती गई तैसेही विवेकभ्रष्ट लोग भी सर्वदा सौ २ प्रकारसे गिरतेही जाते हैं॥ ११॥

अथाग्न्यादीनां निवारणे शास्त्रप्रतिपादितजलादिरूपहेतून् प्रतिपाद्य मौर्ख्यस्य निवारणे शास्त्राभावं हेत्वभावं च स्फुटीकुर्वन्नाह–

शक्यो वारयितुं जलेन हुतभुक् शूर्पेण[1] सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोर्गर्दभः।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रैः प्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥ १२॥

१ छत्रेण इति पाठांतरम्।

शक्य इति ॥ हुतभुक् हुतं होमद्रव्यं हविः पुरोडाशवपादि भुनक्तीति हुतभुक् वैदिकाग्निः । अत्र तु गृहादिदाहकृत् लौकिकोऽग्निरिति मन्तव्यम् । जलेन उदकेन वारयितुं निवारयितुं शक्यः । एवंरीत्या सूर्यातपः रवेरातपः शूर्पेण वारयितुं शक्य इति पदद्वयस्योत्तरत्राप्यनुषङ्ग इति मन्तव्यम् । समदः मदसहितः नागेन्द्रो गजश्रेष्ठः निशितांकुशेन तीक्ष्णांकुशेन । गौः वृषभः गर्दभः रासभश्च दण्डेन । व्याधिः कुष्ठादिरोगः भेषजसंग्रहैः औषधिसंग्रहणैश्च । अत्र चकारात् महामन्त्रजपहोमसुरार्चनदानादिकमपि गृह्यते । "तच्छान्तिरौषधैर्दानैर्जपहोमसुरार्चनैः ।" इति स्मरणात् । विषं कालकूटादि । विविधैर्नानाविधैः मन्त्रैः मन्तारं त्रायन्ते रक्षन्तीति मन्त्राः तैर्मन्त्रैः प्रणवादिभिः विविधैः प्रयोगैश्च निवारयितुं शक्यमित्यर्थः । तस्मात् सर्वस्य प्राणिहिंसाकारणीभूतदुष्टजन्तुजातस्य शास्त्रविहितं शास्त्रविधिचोदितमौषधं जलादिरूपभेषजमस्ति । मूर्खस्य तु औषधं मूर्खतानिवारणसमर्थं सुभाषितादिरूपं नास्ति शास्त्रविहितं न वर्तते १२॥

जलसे अग्निका, छातेसे धूपका, पैने अंकुशसे उन्मत्त हाथीका, दंडसे दुष्ट बैल और गदहेका, नानाप्रकारकी औषधियोंसे व्याधिका और मन्त्रप्रयोगसे विषका निवारण होसकता है । ऐसे शास्त्रकी विधिसे सबकी औषधी है परन्तु मूर्खकी औषधी नहीं होसकती ॥ १२ ॥

साहित्यसंगीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः ।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम् ॥ १३ ॥

साहित्येति ॥ साहित्ये संगीतस्य कलानामनभिज्ञः ज्ञानं नास्ति एवंभूतो यो नरः स पुच्छविषाणरहितः साक्षात्पशुरेव । तर्हि यदा पशुस्तदा तेन तृणं भक्षणीयं तत्तु न खादति जीवत्यपि । इदं तु इतरपशूनां परममुत्कृष्टं भागधेयमदृष्टम् ॥ १३ ॥

साहित्य और संगीतशास्त्रकी कलासे जो मनुष्य हीन है वह पूंछ और सींगरहित साक्षात् पशु है तृण नहीं खाता और जीता है यह उन पशुओंका परम उत्तम भाग है ॥ १३ ॥

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ १४ ॥

येषामिति ॥ येषां विद्या न तपो न दानं न शीलं सद्वृत्तं तदीयं च न गुणः सत्त्वो गुणो न धर्म एवंभूता ये मनुष्यास्तेऽस्मिन्मर्त्यलोके भुवि भारभूताः सन्तो मनुष्यरूपेण मृगा एव विचरंति ॥ १४ ॥

जिनको विद्या, तप, दान, ज्ञान, शील, गुण और धर्म नहीं वे मृत्युलोकमें पृथ्वीपर भाररूप साक्षात् पशु हैं और मनुष्यके स्वरूपसे विचरते हैं ॥ १४ ॥

वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।
न मूर्खजनसम्पर्कः सुरेन्द्रभवनेष्वपि ॥ १५ ॥

वरमिति ॥ पर्वतदुर्गेषु वनचरैर्व्याघ्रादिभिः सह भ्रमणं वरमुत्कृष्टम् परंतु मूर्खजनसंबन्ध इन्द्रभवनेष्वपि मास्त्विति ॥ १५ ॥

पर्वत और वनमें वनचरोंके संग भ्रमण करना अच्छा परंतु मूर्ख-जनका संसर्ग इन्द्र भवनमें भी बुरा है ॥ १५ ॥

अथ मूर्खपद्धतिवैलक्षण्येन विद्वत्पद्धतिं वर्णयति । यद्वा यदुक्तं विवेकस्यात्यन्तावश्यकत्वं तस्य शास्त्रपरिज्ञानसाध्यत्वात्तस्य च विद्वदधीनत्वात्तत्पद्धतिवर्णनमिदानीमारभते—

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमाः
विख्याताः कवयो वसंति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य सुधियस्त्वर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षकैर्न मणयो यैरर्घतः पातिताः॥१६॥

१ कवयो यत्र इति पाठान्तरम् । २ कुत्स्या इति पाठान्तरम् ।

शास्त्रेति ॥ शास्त्रैः काणादगौतमीयादिभिरुपस्कृताः अलंकृतास्तथा शब्देन सुन्दराः मनोहराः गिरो वाचो येषां ते तथोक्ताः । अत्र यद्यपि शास्त्रपदग्रहणे-नैव सर्वेषां शास्त्राणां संग्रहात्पार्थक्येन शब्दशास्त्रग्रहणे पौनरुक्त्यदूषणं स्यात्तथापि गोबलीवर्दन्यायेन समाधेयम् । तथा शिष्येभ्योऽन्तेवासिभ्यः प्रदेया व्याख्यान-रूपेण प्रदातुं योग्या आगमाः सर्वशास्त्राणि येषां ते तथोक्ताः । सम्यक् शिक्षा-पाटवात् प्रबुद्धाखिलशास्त्रसिद्धान्तत्वेन शिष्यद्वारा व्याख्यातनिखिलागमा इत्यर्थः । यद्वा शिष्येभ्यः प्रदेया विनियोगार्हा न तु कुहकतया गर्भ एव विजी-र्णीकृता इत्यर्थः । तथाभूता आगमा येषां ते तथोक्ताः । " आगमः शास्त्र आयत्तौ " इति विश्वः । अत एव विख्याताः सर्वत्र प्रसिद्धाः कवयो विद्वांसः । निर्धनाः धनहीनाः सन्तः यस्य प्रभोः राज्ञो विषये देशे सन्निधौ वा सन्ति तिष्ठन्ति । तन्निरर्थत्वेनावस्थानं तस्य वसुधाधिपस्य प्रभोरेव जाड्यं मान्द्यं दैन्य-मिति यावत् । " गुणवचनब्राह्मणादिभ्यः कर्मणि च " इति ष्यञ् प्रत्ययः । सुधियो विद्वांसस्तु अर्थं धनं विनापि । पृथग्विनेत्यादिना समुच्चयः । ईश्वराः समर्थाः पूज्या इत्यर्थः। विद्याया एव तेषां महाधनत्वादिति भावः । किन्तु यैः कुपरीक्षकैः रत्नशास्त्रपरिज्ञानाभावात्कुत्सितपरिज्ञानिभिः मणयः अमूल्या अपीति भावः । अर्घतो मूल्यतः पातिताः । बहुमूल्याः मणयोऽल्पमूल्याः कृताः इत्यर्थः । कुत्स्याः स्युः किम् । न स्युरेवेत्यर्थः । अयमर्थः—विद्वद्भिः प्रभुसमाश्र-येणैव स्थातव्यम् । " सदाश्रयेण शोभन्ते पण्डिता वनिता लता । " इति न्यायात् । तत्र न ते यदि विद्वन्मनोरथं पूरयेयुस्तत्तेषामेव कुत्सितत्वम् । विद्वां-सस्तु कुपरीक्षकोपहतमणय इव न कुत्स्या इति । अतः श्रेयस्कामैः प्रभुभिस्तन्म-नोरथपूरकैरेव भवितव्यमिति तात्पर्यम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ १६ ॥

शास्त्रोक्त शब्दोंसे जिनकी सुन्दर है और शिष्योंके पढाने योग्य जिनकी विद्या है और वे आपभी प्रसिद्ध हैं ऐसे विद्वान् जिस राजाके देशमें निर्धन रहते हैं उसमें जडता राजाहीकी है और कवि लोग तो विना द्रव्यके भी श्रेष्ठ ही हैं जिन्होंने मणियोंका मोल घटाया वे परीक्षा करनेवालेही खोटे हैं मणि नहीं ॥ १६ ॥

अथ विद्याधनस्य प्रसिद्धधनवैलक्षण्यवर्णनद्वारा विदुषामुत्कर्षमापादयन्ते तेषु गौरवेण विश्वासोत्पादनार्थं नृपान् संबोधयति—

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत्सर्वदाऽ-
प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान्प्रति मानमुज्झत नृपाः कस्तैः सह स्पर्धते ॥ १७॥

हर्तुरिति ॥ यद्विद्याख्यं धनं हर्तुश्चोरादेः । हर्तुमिति तुमुनन्त पाठे अपहर्तु-मित्यर्थः।गोचरं न याति विषयतां न प्राप्नोतीति भावप्रधानो निर्देशः । तस्या-त्यन्तदुर्ग्रहत्वादिति भावः। तथा सर्वदा कालत्रयेऽपि किमप्यनिर्वाच्यं शं सुखं पुष्णाति प्रवर्धयति । " अर्थानामर्जने दुःखम् " इति स्मरणात्प्रसिद्धं तु नैव-मिति भावः । अनिशं सर्वदा अर्थिभ्यो विद्यार्थिभ्यः याचकेभ्यश्च प्रतिपाद्यमानं व्याख्यायमानं परामुत्कृष्टां वृद्धिमभ्युच्छ्रयं प्राप्नोति । विद्याया व्याख्यानेनाभि-वृद्धिसंबन्धादिति भावः । तथा कल्पान्तेषु प्रलयेष्वपि निधनं नाशं न प्रयाति न नश्यतीत्यर्थः । कल्पान्तेष्वपीति बहुवचनग्रहणं विद्याधनस्यात्यन्तविनाशाभाव-प्रकाशनार्थम् । प्रसिद्धं तूक्तविपरीतमिति भावः । तदुक्तम्–" न भोगहार्या न च बन्धुहार्या न भ्रातृहार्या न च राजहार्या । स्वदेशमित्रं परदेशबन्धुर्विद्या-सुधां ये पुरुषाः पिबन्ति ॥ " इति तद्विद्याख्यं विद्याभिधानम् । यत्तदोर्नित्य-सम्बन्धात्तच्छब्दस्याध्याहारः । अन्तर्धनमभ्यन्तरस्थवित्तं येषां पुरुषाणामस्तीति शेषः । अतस्तान्विद्याधनान् प्रति हे नृपाः राजानः । मानं कोपं दुराग्रहमिति यावत् । उज्झत त्यजत । तैर्विद्वद्भिः सह कः पुमान् स्पर्धते निगृह्णाति । न कोऽपीत्यर्थः । ततस्ते सदा सर्वदा गौरवेण बहुमाननीया इति भावः । अत्रो-पमानाप्रसिद्धधनादुपमेयस्य विद्याधनस्याधिक्यकथनाद्व्यतिरेकालंकारः । " उप-मानाद्यदन्यस्य व्यतिरेकः स एव सः । " इति काव्यप्रकाशकारलक्षणात् । वृत्तं पूर्ववत् ॥ १७ ॥

चुरानेवालेको नहीं देख पडता और सदा सुखकी वृद्धि करता है और निरन्तर याचकोंको दिया जाय तो परम वृद्धिको प्राप्त होता है और कल्पान्तमें भी जिसका नाश नहीं ऐसा विद्यारूपी अन्तर्धन जिसके पास है तिनसे हे राजा लोगो ! अभिमान छोडदो क्योंकि उनके समान जगत्में दूसरा कौन है ? ॥ १७ ॥

---

१ अर्थिभ्यः इति पाठान्तरम् ।

अथ त्वदीयलक्ष्मीर्न तेषां प्रतिबन्धिका अतस्तेषु बहुमानाचरणतत्परेणैव भवितव्यमिति सदृष्टान्तं राजानं संबोधयति—

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान्संरुणद्धि ।
अभिनवमदरेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १८ ॥

अधीति॥हे नृप!अधिगतपरमार्थान् विज्ञाततत्त्वार्थान् सर्वे गत्यर्था ज्ञानार्थाः इति न्यायात् । अथवा प्राप्तपुरुषार्थान् । पण्डितान् विदुषो मावमंस्थाः माव-मानय । मन्यतेरवपूर्वाल्लुङि थास् । "नमाङ्योगे" इत्यट्प्रतिषेधः । कुत-स्तृणमिव लघु लभ्या निःसारा लक्ष्मीस्त्वदीयसम्पत्तिः । "शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिति गीयते ।" इति विश्वः । तान् पण्डितान् नैव संरुणद्धि । ईप-दपि संरोद्धुं न शक्नोतीत्यर्थः । तत्र दृष्टान्तः। अभिनवमदरेखाभिः दानधाराभिः श्यामानि गण्डस्थलानि येषां वारणानां मत्तेभानां बिसतन्तुः मृणालसूत्रं वारणं प्रतिबन्धकभूतं न भवति । अतः पण्डितेषु बहुमानाचरणतत्परत्वेनैव वर्तितव्य-मित्यर्थः । अत्र दृष्टांतालंकारः। "यत्र वाक्यद्वय बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मो वाक्यज्ञैः स दृष्टान्तो निगद्यते ॥" इति लक्षणात् ॥ स चोक्तो-पमेयाङ्गेन संकीर्त्यते । मालिनीवृत्तम् । "ननमयययुतेयं मालिनी भोगिलोकैः।" इति लक्षणात् ॥ १८ ॥

जिनको परमार्थ अर्थात् मोक्ष पर्यंतका साधन प्राप्त है ऐसे पण्डि-तोंका अपमान मत करो क्योंकि उनको गुणकी तुल्य तुम्हारी लक्ष्मी न रोकसकेगी जैसे नवीन मदकी धारासे शोभित श्याममस्तकवाले हाथीको कमलकी दण्डीका सूत नहीं रोक सकता ॥ १८ ॥

किं बहुना ब्रह्मापि तदीयवैदग्ध्यापहरणे न शक्त इति दृष्टान्तमुखेनाह—

अम्भोजिनीवनविहारविलासमेवं
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां

१ निवास इति पाठान्तरम् । २ एकम् इति पाठान्तरम् ।

वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १९ ॥

अम्भोजिनीति॥विधाता ब्रह्मा कुपितः केनचिद्धेतुना क्रुद्धः सन् हंसस्य निजयानमरालस्य अम्भोजिनीवने पद्मिवने यो विहारः क्रीडा स एव विलासः लीला तमेव न त्वन्यन् नितरामतिशयेन हन्ति नाशयति । अपहर्तुं विलासमेकमिति पाठे एकं केवलं विलासमित्यन्वयः।अम्भोजाकरसंशोषणे तत्र विहारभङ्गमात्रमेव कर्तुं शक्नोतीत्यर्थः। किन्त्वसौ विधाता हंसस्य दुग्धजलयोः क्षीरनीरयोर्भेदविधौ विभागकरणे विषये प्रसिद्धां विख्यातां वैदग्ध्यकीर्तिं वैदग्ध्येन "कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते" इत्युक्तलक्षणनैपुण्येन प्रयुक्ता या कीर्तिस्तामपहर्तुं न शक्नोति । हंसो हि क्षीरमिश्रिते नीरे नीरं विहाय क्षीरं गृह्णातीति प्रसिद्धिः । एवं कुपितः राजा स्वविषयवासादिभङ्गमात्रमेव कर्तुं शक्नोति न तु तेषामशेषविद्यापरिशीलनजनितचातुर्यभङ्गमतो निष्कोपेन भवितव्यं विद्वत्सु राज्ञेति तात्पर्यम्। अत्राप्रकृतविधातृवृत्तान्तकथनात् प्रस्तुतराजविद्वज्जनप्रतीतेरप्रस्तुतप्रशंसालंकारः।लक्षणं तूक्तम् । वसन्ततिलकावृत्तम् । " उक्ता वसन्ततिलका तभजा जगौ गः " इति लक्षणात् ॥ १९ ॥

हंसपर यदि विधाता कोप करे तो उसका कमलवनमें विहाररूप विलास नष्ट कर सकता है परंतु उसके दूध और जल बिलगानेकी प्रसिद्ध पंडिताई(चतुराई) की कीर्तिको विधाताभी नहीं नाश कर सकता ॥१९॥

अथ विदुषां तावद्विद्यैव भूषणरूपसम्पत्तिरित्याह द्वाभ्याम्–

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्द्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्तेऽखिलभूषणानि सततं वाग्भूषणं भूषणम् ॥२०॥

केयूराणीति॥केयूराण्यङ्गदानि। यद्यपि केयूरयोर्निजभुजाशिरोभूषणत्वेन द्वित्वमेव वक्तव्यं तथापि तद्विशेषविवक्षायां बहुवचनप्रयोग इति मन्तव्यम् । पुरुषं जनं न भूषयन्ति नालंकुर्वन्तीति यथायोगं सम्बध्यते । चन्द्रवदुज्ज्वला धवलतराः हारा मुक्ताहाराश्च न भूषयन्ति स्नानमभिषेकोऽपि न भूषयति विलेपनं

---

१ केयूरा न विभूषयन्ति इति पाठान्तरम् । खलु इति पाठान्तरम् ।

घनसारकस्तूरीगन्धसारचर्चापि न भूषयति । कुसुमं मल्लिकामालतीचम्पकादि पुष्पमपि । जातावेकवचनम् । न भूषयति । अलंकृता अभ्यङ्गपुष्पमाल्यादिना सम्यक्प्रसाधिता मूर्धजाः शिरोरुहा अपि न भूषयन्ति।पुरुषमिति सर्वत्रानुषङ्गः। किन्तु एका केवला वाणी पुरुषं समलंकरोति सम्यग्भूषयति। केयं वाणीत्यत आह।या संस्कृता व्याकरणादिपरिशुद्धा धार्यते स्वायत्तीक्रियते।सेत्यध्याहृततच्छब्देन सम्बन्धः।ननु केयूरादीनां विभूषणत्वेन प्रसिद्धत्वात्तन्निषेधे प्रत्यक्षापलापः स्यादित्याशंक्य तेषां क्षयिष्णुत्वान्न तथात्वमित्याह । अखिलभूषणानि केयूराद्युक्ताशेषभूषणानि क्षीयन्ते कालक्रमेण नश्यन्ति । क्षीयन्ते खल्विति पाठे खलुशब्दो वाक्यालंकारे । वाग्भूषणं संस्कृतवाग्रूपभूषणं तु सततं भूषणं नित्यभूषणं कदापि नश्यतीत्यर्थः । व्यतिरेकालंकारं तूक्तम् । एतदादिश्लोकचतुष्टयं शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

विजायट कंकण और चन्द्रमाके समान उज्ज्वल मोतियोंके हार स्नान चंदन लेपन फूलोंका शृंगार और सुधरे हुए केशादि पुरुषोंको भूषित नहीं कर सकते केवल वह वाणी जो संस्कारयुक्त धारण की गई हो सो पुरुषको भूषित कर सकती है और भूषण अवश्य क्षय हो जाते हैं परन्तु केवल वाणीहीका भूषण भूषणकी ठौर रह जाता है ॥ २० ॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं[1] दैवता
विद्या राजसु पूज्यते[2] न हि धनं विद्याविहीनः पशुः॥२१॥

विद्या नामेति ॥ रूपं नाम कुण्डलहारनूपुराङ्गदादिचतुर्विधभूषणाभावेऽपि विभूषितवद्भासमान आकारविशेषः । तदुक्तं भावप्रकाशे—"अव्याधारोप्यविक्षेप्यग्रन्थनीयैरभूषितम् । यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ॥" इति । विद्या नाम वेदशास्त्राध्यात्मिकं विद्यैव नरस्य पुंसोऽधिकं भूयिष्ठं रूपमुक्तलक्षणाकारविशेषः । तद्वल्लोकरञ्जकत्वादिति भावः । तथा प्रच्छन्नं निगूढं यथा तथा गुप्तं रक्षितं धनं विद्यैवेति सम्बन्धः । तद्वत्कालान्तरेऽपकारकत्वा-

१ परं दैवतम् इति पाठान्तरम् । २ पूजिता इति पाठान्तरम् ।

दिति भावः । विद्या भोगान् करोतीति भोगकरी स्रक्चन्दनादिभोग्यवस्तुलाभहेतुः । तथा यशःसमाख्या सुखमिन्द्रियतर्पणमेतत्करी एतद्धेतुश्च । उभयत्रापि "कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्यये टित्त्वान् ङीप् । तथा विद्यां गृणन्त्युपदिशन्तीति गुरवस्तेषां हिताहितोपदेष्टृणामाचार्याणामपि गुरुरूपदेष्टृभूता । तथा परमार्थबोधकत्वादिति भावः । विद्या विदेशगमने प्रवासे वन्धुजनः सुहृज्जनः । तद्वद्विशेषोपचारसम्पादकत्वादिति भावः । तदुक्तम्—"स्वदेशमित्रं परदेशबन्धुं विद्यासुधां ये पुरुषाः पिबन्ति ।" विद्या परा देवता परमात्मभूता मोक्षदायकत्वादिति भावः । यद्वा परा देवता स्वाभीष्टदेवता ऐहिकामुष्मिकफलत्वादिति भावः । विद्या राजसु राजमध्ये पूज्यते प्रशस्यते । गौरवसम्पन्नत्वाद्राजपूज्या भवतीत्यर्थः । यद्वा विद्याशब्देन विद्यावान् लक्ष्यते राजशब्देन च तत्सभा लक्ष्यते । तथा च विद्यावान् राजसभासु पूज्यते पुरस्क्रियते सम्भाव्यत इति यावत् । धनं द्रव्यं तु न ह्युक्तप्रकारं भवतीत्यर्थः । तस्माद्विद्यया उक्तरूपया विहीनः शून्यः जनः पशुः पशुप्रायः कर्तव्याकर्तव्यविवेकराहित्यादिति भावः । अतो बहूपकारकत्वाद्विशिष्टविद्यैव प्रधानं न त्वन्यमिति तात्पर्यम् । अत्र विद्यायाः रूपधनाद्याकारेण बहुधानिरूपणान्निरवयवमालारूपकालंकारः ॥ २१ ॥

विद्यारूपी वस्तु मनुष्यका अधिक रूप और छिपा हुआ अंतर्धन है और विद्याही भोग यश और सुखकी संपादन करनेवाली और गुरुओंकी गुरु है। परदेशमें विद्याही वन्धुजन है और विद्या ही परमदेवता है और विद्याही राजा लोगोंमें पूज्य है, कुछ धन नहीं पूजित है इसलिये विद्याविहीन नर पशु है ॥ २१ ॥

अथ लोकहिताहितवर्णनप्रसङ्गात्तस्या एव प्रकृष्टैश्वर्यभावमाह—

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्याऽनवद्या यदि
व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् २२

क्षान्तिरिति ॥ देहिनां प्राणिनां क्षान्तिः तितिक्षा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धक इति यावत् । अस्ति चेत् तर्हि कवचेन वर्मणा किं फलमिति

सर्वत्रानुपज्यते । न किंचिदपीत्यर्थः । तस्या एवारुन्तुदानामनवकाशप्रदत्त्वादिति भावः । क्रोधश्चित्तक्षोभोऽस्ति चेत् अरिभिः शत्रुभिः किम् । तस्यैवान्तःशत्रुत्वादुपद्रवहेतुत्वाच्चेति भावः । ज्ञातिर्दायादोऽस्ति चेदनलेनाग्निना किम् । तस्यैव सर्वार्थनिर्मूलनिदानत्वादिति भावः। सुहृत् सन्मित्रमस्ति यदि । "सुहृद्दुर्हृदौ मित्रामित्रयोः" इति निपातनात्साधुः । दिव्यौषधैः सिद्धौषधैः किं फलम् । न किञ्चिदपि तस्यैवारोग्यकरत्वादिति भावः । दुर्जनाः खलाः सन्ति यदि सर्पैराशीविषैः किं तेषामेव प्राणापहारित्वादिति भावः। अनवद्या निर्दुष्टा । अवद्यपण्येत्यादिना निपातनात्साधुः ततो नञ् समासः । "तस्मान्नुडचि"इति नुडागमः । विद्या वेदवेदाङ्गाध्यात्मिका अस्ति यदि धनैः किम् । तस्या एवाखिलभोगसाधकत्वादिति भावः। व्रीडा अकार्यप्रवृत्तौ मनःसंकोचलक्षणलज्जास्ति चेद्भूषणैः किं हारनूपुराद्यालंकरणैः किम् । तस्या एव लोकोत्तरभूषणत्वादिति भावः । सुकविता सत्पाण्डित्यम् । "संख्यावान् पण्डितः कविः" इत्यमरः । यद्वा कवयति वर्णयति रसोल्लसितशब्दार्थसंघटनां करोतीति कविस्तस्य भावस्तत्ता यदि राज्येन भूमण्डलाधिपत्येन किम् । तस्या एव सकललोकवशीकरत्वादिति भावः । राज्ञो भावः कर्म वा राज्यं प्रजापरिपालनात्मकम् । पुरोहितादित्वाद्यक्प्रत्ययः ॥ २२ ॥

यदि क्षमा हो तो कवचका क्या काम है, और जिस मनुष्यमें क्रोध है तो उसे शत्रुकी क्या आवश्यकता है, यदि ज्ञाति है तो उसे अग्निका क्या प्रयोजन है और जो अपने इष्टमित्र समीप हैं तो दिव्य औषधियोंसे क्या फल है जिसके दुर्जन विद्यमान हैं उसका सर्प और अधिक क्या करेंगे और जिसको निर्दोष विद्या है तो उसे धनसंचयसे क्या होगा और जिसमें लज्जा है तो उसके फिर और भूषण क्या हैं और जिसकी सुन्दर कविता है उसके आगे राज्य क्या है ॥ २२ ॥

अथ विदुषां गुणवर्णनपूर्वकं लोकव्यवस्थापकत्वमाह-

दाक्षिण्यं स्वजने दया परजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम् ।

---

१ नारीजने धूर्तता इति पाठान्तरम् ।

शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः॥ २३॥

दाक्षिण्यमिति ॥ स्वजने बंधुजनेष्वित्यर्थः।जातावेकवचनम्। एवमुत्तरत्रापि। दाक्षिण्यं छंदानुवर्तनम्। अन्यथा विनिन्देयुरिति भावः। "दक्षिणः सरलो वाम-परच्छन्दानुवर्तिषु" इति भावः। परिजने भृत्यजनेषु विषये दया दारिद्र्यादि-तद्दुःखप्रहाणेच्छा। अन्यथा विजह्युरिति भावः। दुर्जने खलजनेषु विषये सदा शाठ्यं विप्रियकारित्वम्। अन्यथा अधिक्षिपेरन्निति भावः। साधुजने सज्जनेषु विषये प्रीतिः स्नेहः आदर इति यावत्। अन्यथानुतप्येयुरिति भावः। नृपजने राजसु विषये नयो नीतिः। अनुवर्तनतात्पर्यमिति यावत्। अन्यथा दण्ड-येरन्निति भावः। विद्वज्जन पण्डितजनेषु विषये आर्जवमवक्रता। अन्यथा निषिध्येरन्निति भावः। शत्रुजने शत्रुजनेषु विषये शौर्यं विक्रान्तत्वम्। अन्यथा निपातयेरन्निति भावः। गुरुजने पित्रादिषु विषये क्षमा सहिष्णुत्वम्। अन्यथा शपेरन्निति भावः। कान्ताजने नारीजनेषु विषये धृष्टता प्रागल्भ्यं च। अन्यथा वशीकुर्युरिति भावः। इत्येवमुक्तविधासु कलासु शिल्पेषु। "कला शिल्पे कालभेदे चन्द्रांशे कलना कला।" इति वैजयन्ती। ये च पुरुषाः ते कुशलाः निपुणाः तेषु पुरुषेष्वेव लोकस्थितिः लोकमर्यादा अस्तीति शेषः। त एव लोक-व्यवस्थासंस्थापकाः न तूक्तगुणरहिता इत्यर्थः। एवंभूतास्तु विद्वांस एव न त्वन्य इति हृदयम्॥ २३॥

अपने कुटुम्बके विषे उदारता, परजनपर दया, दुर्जनसे सदा शठता, साधुजनसे प्रीति, राजसभामें नीति, पण्डितोंसे नम्रता सुधाई, शत्रुजनोंमें शूरता, बडे लोगोंमें क्षमा और स्त्रियोंमें धूर्तता जो पुरुष इस भांति इन सब कलाओंमें निपुण हैं तिन्हींमें लोकाचारकी स्थिति अर्थात् लोकमें वेही उत्तम होते हैं॥ २३॥

इत्थं विद्वज्जनाननुवर्ण्य सम्प्रति सत्सङ्गतेः श्रेयस्करत्वमाह-

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥ २४॥

जाड्यमिति । धियः बुद्धेर्जाड्यं मान्द्यं हरति निरस्यति । वाचि वचने सत्यं सूनृतभावं सिञ्चत्याप्लावयति । मानोन्नतिं बहुमानातिशयं दिशति प्रयच्छति । पापं किल्बिषमपाकरोति नाशयति । धर्मोपदेशादिनेति भावः। तथा चेतः प्रसादयति निर्मलयति । ज्ञानोपदेशादिनेति भावः । दिक्षु दशसु कीर्तिं तनोति विस्तारयति । अतः सत्संगतिः सज्जनसमागमः पुंसां किं श्रेयो न करोति कथयेति पृथग्जनसम्बोधनम् । सर्वमपि श्रेयः करोत्येवेत्यर्थः । अतस्तैरेव सङ्गतिः कर्तव्या न तु दुर्जनैरिति तात्पर्यम् । अत्र क्रियाणां बहूनां समुच्चितत्वात्सामुच्चयालङ्कारः । "गुणक्रियायौगपद्यं समुच्चय उदाहृतः ।" इति लक्षणात् । वसन्ततिलकावृत्तम् । लक्षणं तूक्तम् ॥ २४ ॥

बुद्धिकी जडताको हरती, वाणीमें सत्यको सींचती, मानको बढाती, पापको दूर करती, चित्तको प्रसन्न रखती और दिशाओंमें कीर्तिको विस्तृत करती, यह सत्संगति कहो तो पुरुषको क्या नहीं करती है२४

अथैतेषामसाधारणमहिमास्पदत्वाल्लोकोत्तरत्वं वर्णयन्निगमयति—

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति तेषां यशःकाये जरामरणजं भयम् ॥ २५ ॥

जयन्तीति ॥ सुकृतिनो धन्याः । "सुकृती पुण्यवान्धन्यः" इत्यमरः । रससिद्धाः सिद्धशृङ्गारादिरसाः सिद्धपारदगुटिकाश्च । "वाहिताग्न्यादिषु" इति निष्ठायाः परनिपातः । ते प्रसिद्धाः पूर्वोपवर्णिता वा कवीश्वराः कविसार्वभौमाः पण्डितोत्तमाः इति वा । जयन्ति सर्वोत्कर्षेण वर्तन्ते । अद्यापीति शेषः । यद्वा रससिद्धाः सिद्धरसाः ब्रह्मसाक्षात्कारवन्त इत्यर्थः । "रसो वै सः" इति श्रुतेः । "शृङ्गारादौ विषे वीर्ये पारदे ब्रह्मवर्चसि । रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः ॥ रसः" इत्यभिधानाच्च । कवीश्वराः कवयः क्रान्तदर्शिनस्तेषामीश्वराः कालत्रयाभिज्ञा ब्रह्मविद्याविशारदा इत्यर्थः । जयन्ति । कुतस्तेषां कवीश्वराणां यशःकाये कीर्तिशरीरे जरामरणाभ्यां जातमिति तथोक्तं भयं नास्ति । रससिद्धानां भौतिकशरीर एव जरामरणभयं नास्ति । यशःशरीरे तु किं वक्तव्यम् तस्य कल्पान्तस्थायित्वादिति भावः । अत्र रससिद्धपदार्थस्य विशेषणगत्या भयाभावपदार्थं प्रति हेतुत्वात्काव्यलिंगभेदः । वृत्तमुक्तम् ॥ २५ ॥

---

१ येषाम् इति पाठान्तरम् ।

ऐसे पुण्यवान् रससिद्ध सबसे उत्तम कवीश्वर हैं जिनकी यशरूपी कायामें जरामरणका भय नहीं होता ॥ २५ ॥

सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः।
आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ २६ ॥

सूनुरिति॥ सूनुः पुत्रः सच्चरितः सद्वृत्तः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं स्नेहयुक्तं मित्रम् अवञ्चकः परिजनः स्वकीयजनसमुदायः निःक्लेशलेशमाधिरहितं स्वस्थं मनः आकारो रुचिरः स्थिरश्च विभवसामर्थ्यं विद्यावदातं शोभितं मुखमिति एते पदार्था विष्टपहारिणि स्वर्गवासिनीष्टदहरौ नारायणे तुष्टे प्रसन्ने सति देहिना पुरुषेण प्राप्यन्ते ॥ २६ ॥

सदाचरणवाला पुत्र, पतिव्रता स्त्री, सर्वदा अनुग्रह करनेवाला स्वामी, प्रेमी मित्र, अवंचक कुटुंबके लोग, क्लेशके लेशसे रहित मन, सुंदर स्वरूप, स्थिर सम्पत्ति और विद्यासे शोभायमान मुख यह सब उस मनुष्यको प्राप्त होते हैं जिसपर स्वर्गपति मनोरथ दाता हरि प्रसन्न हों॥

अथ विदुषामपि मानशौर्ययोरपेक्षितत्वाद्विद्वत्पद्धतिनिरूपणानन्तरं मानशौर्यपद्धतिं निरूपयति—

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २७ ॥

क्षुत्क्षाम इति॥ क्षुधा क्षामोऽतिक्षीणोऽपि। "क्षायो मः" इति मत्वम्। जरया विस्रसया कृशो जीर्णोऽपि "विस्रसा जरा" इत्यमरः। शिथिलप्रायः विश्लथाङ्गप्रायः बलहीनः सन्नपीत्यर्थः। कष्टां दशामाहाराभावादतिकृच्छ्रावस्था-

१ कवल इति पाठांतरम्।

मापन्नः प्राप्तोऽपि । "दशावर्ताववस्थायाम्" इति विश्वः। अत एव विपन्नदीधितिर्नष्टकान्तिरपि । किं बहुना प्राणेषु पञ्चसु नश्यत्सूत्क्रममाणेषु सत्स्वपि प्राणायासे सम्प्राप्ते सत्यपीत्यर्थः । मत्तेभेन्द्रस्य मत्तगजपुङ्गवस्य विभिन्नो विदारितो यः कुम्भः कुम्भस्थलं तत्र यत्पिशितं मेदो मांसं तद्ग्रासे तत्कवलने एकं मुख्यं यथा तथा बद्धा सन्दानिता स्पृहा वाञ्छा यस्य सः। इति शौर्यातिशयोक्तिः । तथा मानमहतामभिमानोन्नतानामग्रेसरोऽग्रगण्यः । "पुरोग्रतोऽग्रेषु सर्त्तेः" इति टप्रत्ययः । केसरी सिंहः । जीर्णं तृणं शुष्कं घासमत्ति किमभ्यवहरति किं नास्त्येवेत्यर्थः। इति मानातिशयोक्तिः । नीचजन्तुस्तु नैवमिति भावः। अत्र यद्यपि सर्वत्रापिशब्दस्तावदेकैकविशेषणविशिष्टस्यैवात्यन्तनीचवृत्तिप्रवृत्तिं द्योतयति । तथाप्युक्ताखिलविशेषणविशिष्टोऽपि गजेन्द्रमेदःकवलनविहितप्रतिज्ञः केसरी न नीचवस्तुनि प्रवर्तत इति महती मानशौर्यपराकाष्ठोक्तिरिति मन्तव्यम् । "प्राणानपि परित्यज मानमेवाभिरक्षयेत् । प्राणास्तरंगचपला मानमाचन्द्रतारकम् ॥" इति वचनान्मानशौर्यसम्पन्नेन भवितव्यं यशस्कामेनेति भावः । अत्र प्रकरणे कुत्रचिन्मानस्य कुत्रचिच्छौर्यस्य कुत्रचिदुभयस्य च प्राधान्यकथनमपि द्रष्टव्यम् । कुलक्रमागतोत्तमशीलपरिपालनं सहायमनपेक्ष्य शत्रुसंहरणसामर्थ्यं शौर्यमिति विवेकः । अत्र प्रायेणाप्रस्तुतप्रशंसालंकारोऽनुसन्धेयः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ २७ ॥

भूंखके मारे दुर्बल, वृद्धावस्थासे क्लेशित शक्तिहीन, कष्टकी दशाको प्राप्त, तेजहीन और प्राणभी नाश होनेपर हों तोभी मत्तगजराजके विदारे हुए मस्तकके मांसके ग्रासकी सर्वदा अभिलाषा करनेवाला सिंह जो मानसे बडा अग्रगण्य है वह क्या सूखी घास खायगा ? ॥ २७ ॥

क्षुद्रजन्तुस्तु नैवमिति उक्तमेवार्थं भङ्ग्यन्तरेणाह–

स्वल्पस्नायुवसावसेकमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न च[1] तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ २८ ॥

स्वल्पेति ॥ श्वा शुनकः स्वल्पयोः लेशमात्रयोः स्नायुवसयोः स्नायुर्वस्नसा-

१ शेष इति पाठान्तरम् । २ तु इति पाठांतरम् ।

स्यनाडीभेदः । वसा मेदः । तयो रससेकेन मेलनेन मलिनं मलदूषितमपि । " वस्नसा स्नायुरस्त्रियाम् । हृन्मेदस्तु वपा " इत्यमरः । निर्मांसं मांसलेशशून्यमपि गोः । " स्वर्गेपुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्योः स्त्रियां पुंसि गौः " इत्यमरः । अस्थि कीकसं लब्ध्वा परितोषमेति सन्तुष्यति । तत्र गवास्थि तु तस्य शुनः क्षुधा । " आपंचैव हलन्तानाम् " इति वचनाट्टाप् । तस्याः शान्तये क्षुन्निवारणाय न । पर्याप्तं न भवतीत्यर्थः । " अस्तिर्भवन्तिपरो प्रयुज्यमानोऽप्यस्ति " इति भाष्यकारवचनात् भवन्तीति लटः पूर्वाचार्याणां संज्ञा । नीचजन्तोरिति भावः । सिंहस्तु अङ्कं समीपमागतमपि समीपवर्तिनमपीत्यर्थः । " अङ्कः समीप उत्सङ्गे चिह्ने स्थानापवादयोः । " इति विश्वः । जम्बुकं क्रोष्टारं त्यक्त्वा अनादृत्यालक्षीकृत्येति यावत् । द्विपं गजमेव दूरस्थमपीति भावः । निहन्ति विदारयति । तथा हि कृच्छ्रगतोऽप्यतिसंकटस्थोऽपि सर्वोऽशेषो जनः सत्त्वानुरूपं स्वशक्त्यनुगुणं फलं लाभं वाञ्छति । न तु दुर्बलः प्रकृष्टफलकांक्षी प्रबलो निकृष्टफलकांक्षी च भवति । अतः श्वसिंहदृष्टान्तने नीचानीचवस्तुपरिग्रहतत्परेण भवितव्यमायुष्मतेति भावः।वृत्तं पूर्ववत्॥२८

छोटेसे बैलके हाडका टुकडा कुछ पित्त और चर्बी लगा हुआ मलिन और निर्मांस पाकर कुत्ता प्रसन्न हो जाता है यद्यपि उससे उसकी भूंख नहीं जाती और सिंह गोदमें आये हुए स्यारको छोडकरभी हाथीको जाकर मारता है इससे यह सिद्ध हुआ कि, समस्त जन कैसेभी दुःखी होवे परन्तु वे अपने अपने पुरुषार्थके अनुसार फलकी इच्छा करते हैं ॥ २८ ॥



अथ क्षुद्रजन्तोश्चेष्टाविशेषमाह--

लांगूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ २९ ॥

लांगूलेति ॥ श्वा सारमेयः । लांगूलचालनं पुच्छविवर्तनम् । अधो भूतले

---

१ पातं इति पाठान्तरम् ।

चरणावघातं पादेन विदारणं च । भूमौ निपत्य स्वयमेव पतित्वा वदनोदरदर्शनं वक्त्रकुक्षिप्रदर्शनं च पिण्डदस्य पुरस्तादिति शेषः । कुरुते निजनीचचेष्टामाविष्कुरुत इत्यर्थः । पुमान् गौः पुङ्गवो वृषभः । विशेषणसमासः । "गोरतद्धितलुकि" इति समासान्तष्टच् । स एव पुङ्गवः श्रेष्ठ इत्यर्थः । "श्रेष्ठोक्षाणौ तु पुङ्गवौ" इति वैजयन्ती । गजपुङ्गवो गजेन्द्रस्तु धीरं गम्भीरं विलोकयति पश्यति । पिण्डदसन्निधाविति भावः । अथ चाटुशतैरनेकप्रियोक्तिभिरनुनयवाक्यैश्च वा भुंक्ते अभ्यवहरति । गुडतण्डुलादिकमिति शेषः । ' भुजोऽनवने " इत्यात्मनेपदम् । इमावेव नीचानीचजनयोः दृष्टान्ताविति भावः । वसन्ततिलकावृत्तम् । लक्षणं तूक्तम् ॥ २९ ॥

पूंछ हिलाना, चरणोंपर झुककर शिर देना, पृथ्वीपर लोटके पेट और मुँह दिखलाना इत्यादि दीनता कुत्ता टुकडा देनेवालेके आगे करता है और गजराज अपने आहार देनेवालेकी ओर एक बेर गंभीरतासे देखता है और अनेक भाँतिकी प्रार्थनासे भोजन करता है २९

अथ मानशौर्यसम्पन्नतया वंशवर्धनस्यैव जनस्य सत्तालाभो न त्वन्यस्येत्याह--

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ३० ॥

परिवर्तिनीति॥परिवर्तिनि धर्माधर्मवशात्पौनःपुन्येन विवर्तमाने संसारे जरामरणरूपे संसारचक्रे को वा पुमान् मृतः प्रेतः न जायते न भवतीति उत्पन्नो वा न भवतीति शेषः। यद्वा को वा न मृतः को वा न जायते. नोत्पद्यते सर्वोऽप्युत्पन्नो मृतश्च भवत्येवेत्यर्थः।"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।" इति भगवद्वचनादिति भावः । ततः किमत आह । स पुमान् जात उत्पन्नो जन्मलाभवानिति यावत् । कोऽसावित्यत आह । येन जातेनोत्पन्नेन पुंसा वंशोऽन्वयः समुन्नतिं महोन्नत्यं याति प्राप्नोति । वंशोद्धारको यः पुमान् स एव जन्मलाभवानेवम्भूतत्वं च मानशौर्यसम्पन्नस्यैव न त्वन्यस्यातः किमन्यैरजागलस्तनवदुत्पन्नैर्मशकवद्विनष्टैश्चेतिभावः । आनुष्टुभं वृत्तम् ॥ ३० ॥

वही पुरुष जगत्में जन्मा, जिसके जन्मसे वंशकी उन्नति हो, नहीं तो इस चक्रकी नाई घूमते भये संसारमें मरके कौन नहीं जन्म पाता है ३०

इत्थम्भूतस्य पुरुषस्य व्यापारमाह--

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनाम् ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३१ ॥

कुसुमेति॥ कुसुमस्तबकस्येव पुष्पगुच्छस्येवेत्येकं पदम् । मनस्विनो धीरस्य मानशौर्यशालिनः पुंस इत्यर्थः । द्वयी द्विविधा वृत्तिर्व्यापारः । द्वे गती ह्यीति पाठे स्पष्टोऽर्थः । तृतीया तु न संभवतीत्यर्थः । किं तद्वृत्तिद्वयमित्यत आह । सर्वलोकस्य सर्वेषां जनानामित्यर्थः । मूर्ध्नि शिरस्युन्नतस्थाने च क्षीयन्त एवेति शेषः । अथवा वन एवारण्ये शीर्यते वा जीर्यते वा । भावे लट् । एवमुभया वृत्तिः शौर्यादुन्नतस्थानस्थितिस्तदलाभे अरण्ये जीर्णता वेति विवेकः । इयमेव पुंसां श्रेयस्करी वृत्तिरिति भावः। कुसुमस्तबकस्येवेत्यत्र समासः । श्रौती पूर्णोपमालङ्कारः। इवशब्देन सह समासस्य संभवात्। तथा च वार्तिकम्।"इवेन सह नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिः परत्वं च" इति। वृत्तं पूर्ववत्३१

फूलके गुच्छेके समान श्रेष्ठजनोंकी रीति दो प्रकारकी है या तो सब लोगोंके मस्तकहीपर शोभित होंगे अथवा वनहीमें कुछ शुष्क होके नष्ट हो जायँगे ॥ ३१ ॥

पुनरप्युक्तोभयगुणवैशिष्ट्यस्यैवोत्कृष्टतामाह--

सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषाकृतिः ॥ ३२ ॥

सन्तीति ॥ अन्ये वक्ष्यमाणसूर्यचन्द्रापेक्षया इतरे बृहस्पतिप्रभृतयः बृहस्पतिप्रमुखाः । प्रभृतिशब्देन बुधशुक्रादयोऽपि गृह्यन्ते । पञ्च षड् वा पञ्चषाः । "संख्ययाव्यया०" इत्यादिना बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति समासान्तो डच्प्रत्ययः । संभाविताः आदरेणोपस्थिताः बहुमता वा सन्ति वर्तन्ते । तान् प्रति बृहस्पतिप्रभृतीन् लक्ष्यीकृत्येत्यर्थः । विशेषेषु

१ द्वे गती स्तो इति पाठान्तरम् । २ विशीर्यंत वनेऽथवा इति पाठान्तरम् ।
३ भासुरौ इति पाठांतरम् । ४ शेषीकृत इति पाठान्तरम् ।

विशिष्टेषु तेजोमहस्स्वति यावत्। विक्रमे पराक्रमणे रुचिः प्रीतिर्यस्य स तथोक्तः। तेजिष्ठः सहैव कलहाचरणतत्पर इत्यर्थः। एषः उपरागकर्तृत्वेन प्रसिद्धो राहुः सैंहिकेयः न वैरायते वैरं न करोति। अलक्ष्यत्वात्तत्कवलनतत्परो भवतीत्यर्थः। "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इति क्यङ्। "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घः। विक्रमरुची राहुरित्यत्र "रो रि" इति रेफलोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति दीर्घः। द्वावुभौ दिवाकर-निशाप्राणेश्वरौ सूर्याचन्द्रमसावेव। अन्ययोगव्यवच्छेदार्थकोऽयमेवकारः। शीर्ष-मेवावशेषो यस्याःसा शीर्षावशेषा आकृतिर्यस्य। शिरोमात्रावशिष्टगात्र इत्यर्थः। शीर्षावशेषीकृत इति पाठेऽप्ययमेवार्थः परिणमयितव्यः। दानवपतिर्दानवेश्वरः पूर्वोक्तराहुः पर्वणि दर्शपौर्णमासीप्रतिपत्सन्धौ ग्रसति गिलति। हे भ्रातरित्या-दरेण पृथग्जनसंबोधनम्। पश्येत्यत्र वाक्यार्थः कर्म। यतः शिरोमात्रावशि-ष्टोऽयमीदृक्कर्माचरणतत्परोऽभूत्। संपूर्णाङ्गश्चेत् किं करिष्यति न जानामीति भावः। एवं मानशौर्यशालिनो हि निजाङ्गवैकल्यं न परिगणयेयुरिति। किंतु महत्कार्यमेव कर्तुं व्यवस्यन्तीति तात्पर्यम्। पुरा किल देवानाममृतप्रदानसमये विष्णुचक्रेण छिन्नशीर्षत्वाच्छिरोमात्रावशिष्टगात्रोऽभूत् सैंहिकेय इति पौराणिकी कथात्रानुसन्धेया। शार्दूलविक्रीडितं वृत्तम्। लक्षणं तूक्तम्॥ ३२॥

बृहस्पति आदि और भी पांच छः ग्रह आकाशमें श्रेष्ठ हैं पर विशेष पराक्रमकी इच्छा करनेवाला राहु तिनके प्रति वैर नहीं करता है, हे भाइयो! देखो कि, अमावस और पूर्णिमाको दानवपति राहु जो केवल मस्तकही मात्र रहगया है तिसपरभी दोही दिनेश्वर शोभाकर सूर्य और चन्द्रमा पूर्णतेजवालोंको जाकर ग्रसता है॥ ३२॥

अथ महतां माहात्म्यमाह–

वहति भुवनश्रेणिं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स च धार्यते[1]।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह महतां निःसीमानश्चरित्रविभूतयः॥ ३३॥

---

१ विधार्यते इति पाठांतरम्।

वहतीति ॥ शेषः फणाः सहस्रसंख्याकाः स्फटाः फलकानीव तेषु स्थितां भुवनश्रेणिं पातालादिचतुर्दशविष्टपपंक्तिं वहति धारयति । "स्फटायां तु फणा द्वयोः" इत्यमरः । स च शेषः कमठपतिना आदिकूर्मेण । "पतिः समास एव" इति घिसंज्ञायां "आङो नास्त्रियाम्" इत्याङो नाभावः । पृष्ठस्य मध्ये मध्येपृष्ठं निजखर्परोपरिप्रदेश इत्यर्थः । "पारे मध्ये षष्ठ्या वा" इत्यव्ययीभावः । तत्सन्नियोगादेदन्तत्वं च मध्यशब्दस्य । सदा निरन्तरं धार्यते उह्यते । तमपि कमठपतिमपि पयोधिः प्रलयार्णवः अनादरात् अनायासात् क्रोडाधीनमादिवराहायत्तं कुरुते।प्रलयकाले पातालगतभूमण्डलस्यादिवराहावतारेण विष्णुना निजदंष्ट्रया समुद्धृतत्वादिति भावः । अतो महतां मानशौर्यशालिनां महानुभावानां सम्बन्धिन्यश्चरित्रविभूतयो माहात्म्यसम्पदो निःसीमानो निर्मर्यादा अवाङ्मनसगोचरा इति यावत् । अहहेत्याश्चर्ये । "अहहेत्यद्भुते खेदे" इत्यमरः । अत्र पूर्वपूर्वस्योत्तरोत्तरगुणोत्कर्षावहत्वान्मालादीपकाख्योऽलंकारः । तदुक्तं विद्यानाथेन—"यदा तु पूर्वपूर्वस्य सम्भवेदुत्तरोत्तम् । प्रत्युत्कर्षावहत्वं तन्मालादीपकमुच्यते॥" इति । हरिणीवृत्तम् । लक्षणं तूक्तम्॥३३॥

चौदह भुवनकी पंक्तिको शेषजी अपने फणपर धारण करते हैं और कच्छपजी अपनी पीठके मध्यमें तिन शेषजीकोभी धरते हैं और उस कच्छपकोभी समुद्रने अनादरसे सूकरके अधीन करादिया है इससे यह सिद्ध हुआ कि, महज्जनोंके चरित्रकी विभूतिकी सीमा नहीं है ॥३३॥

मानशौर्यशालिन एवोक्तविधमहत्त्वं न तु तद्विहीनस्येति मैनाकं दृष्टान्तीकृत्याह—

वरं प्राणोच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः॥ ३४ ॥

वरमिति ॥ तुषाराद्रेः सूनोः हिमवत्पुत्रस्य मैनाकस्य उद्गच्छन्नुज्जृम्भमाणो बहुलो भूयिष्ठश्च यो दहनः शिलासंघर्षणजनितवह्निस्तस्योद्गारैर्निःसरणैः गुरुभिः दुस्सहैः समदेन सदर्पेण मघवता देवेन्द्रेण मुक्तस्य प्रयुक्तस्य कुलिशस्य वज्रायुधस्य प्रहारैर्विदारणैः प्राणोच्छेदो मरणमित्यर्थः । वरं मनाक् प्रियम् । "दैवाद्-

१ पक्षच्छेदः इति पाठान्तरम् ।

वृत्ते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये ।" इत्यमरः । कुतः अहह्देति खेदातिशयद्योतनार्थानुकरणशब्दः । पितरि हिमवति क्लेशेन वज्रप्रहारजनितदुःखेन विवशे विह्वले सति असावद्याप्युपलभ्यमानः पयसां पत्युः समुद्रस्य । अत्रासमासत्वेन घिसंज्ञाभावात् । "ख्यत्यात्परस्य" इति कृतयणादेशात्तिशब्दात्परस्य ङसोऽकारस्य उकारादेशः । पयसि सलिले सम्पातः प्रवेशः निजप्राणसंरक्षणार्थं निमज्ज्यावस्थानमित्यर्थः । उचितो न्याय्यो न च न भवति हि अस्यैवेति शेषः। यतो मानशौर्यसम्पन्नस्य पुंसः स्वप्राणमात्रतत्परतया कचिन्निलीयावस्थानमेवात्यन्तायशस्करं किमुत पितरि क्लेशविवशे । अतः प्राणपरित्यागेनापि मानशौर्ये एव प्रस्थापनीये । अन्यथा महानपवादः स्यादिति भावः । अत्रोद्गारशब्दस्य गौणत्वान्न ग्राम्यदोषः प्रत्युत सौन्दर्यातिशयमेवोपपादयाति । तदुक्तं दण्डयाचार्यैः—" निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यद्ग्राम्यकक्षां व्यगाहते ॥ " इति । पुरा किल भूमण्डलोपद्रवकारिणां पर्वतानां कोपवशात्पक्षच्छेदोद्यते शक्रे भयविह्वलो मैनाकः समुद्रमध्ये निमज्यातिष्ठदिति पौराणिकी कथात्रानुसन्धेया । शिखरिणीवृत्तम् ॥ ३४ ॥

मदमें भरे हुए इन्द्रके चलाये वज्रके जो अत्यंत प्रज्वलित अग्निके ज्वालाके समान प्रहार ( लगना ) उनसे मरजाना अच्छा रहा परन्तु अपने पिता हिमाचलको क्लेशके विवश ( पक्षहीन ) छोडकर मैनाकको उचित न था कि, जलोंके राजा समुद्रमें भाग कूदकर अपने पक्ष बचावे ॥ ३४ ॥

अथ मानिनां परविकारासहनं सदृष्टान्तमाह—

**यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः ।**
**तत्तेजस्वी पुरुषः परकृतनिकृतिं कथं सहते ॥ ३५ ॥**

यदिति ॥ यत्तस्मात्कारणादचेतनः चेतनरहितः । निर्जीवोऽपीति यावत् । पाषाणत्वादिति भावः । इनकान्तः सूर्यकान्तमणिः सवितुः सूर्यस्य पादैः रश्मिभिरंघ्रिभिश्च स्पृष्टः संवलितस्ताडितश्चेति ध्वन्यते । प्रज्वलति जाज्वल्यमानो भवति । कोपोद्रिक्तश्चेति गम्यते । तत् तस्मात्कारणात् तेजस्वी तेजःशाली मानशौर्यसम्पन्नः पुरुषः सचेतन इति शेषः । परैः शत्रुभिः कृतनिकृतिं विहि-

१ रिव इति पाठान्तरम् । २ विकृतिम् इति पाठान्तरम् ।

तापकारं कथं सहते क्षमते । न कथंचिदित्यर्थः । मैनाकस्तु नैवमिति भावः । "पादा रश्म्यंघ्रितुर्यांशाः" इत्यमरः । आर्यावृत्तभेदः ॥ ३५ ॥

सूर्यकान्तमणि यदि अचेतन है तोभी सूर्यके किरणरूपी पादस्पर्श करनेसे जल उठता है ऐसेही तेजस्वी पुरुष परकृत अनादरको कैसें सहसकता है ॥ ३५ ॥

विक्रान्तत्वे वयोऽपि न हेतुरिति विनिगमयति—

**सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।**
**प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसां हेतुः ॥ ३६ ॥**

सिंह इति ॥ शिशुर्बालोऽपि विक्रान्तत्वयोग्यतारहितावस्थोऽपीत्यर्थः । मदमलिनाः दानपयःपंकिलाः कपोला भित्तय इव तेषु गजेषु मत्तमातङ्गेषु निपतति कुम्भस्थलविदारणार्थमिति भावः । इयं बाल्येऽपि विक्रान्तता सत्त्ववतां बलाढ्यानां प्रकृतिः स्वभावः।कुतः वयो बाल्यादि तेजसां प्रतापशालिनामिति । तेजस्तद्वतोरभेदाध्यवसायोऽत्यन्ततेजस्वित्वप्रकाशनार्थकः हेतुः कारणं न भवति खलु । "तेजसां हि न वयः समीक्ष्यते" इति न्यायादिति भावः । "वयः पक्षिणि बाल्यादौ" इत्यमरः । अयमप्यार्यावृत्तभेदः ॥ ३६ ॥

सिंह यद्यपि बच्चाभी हो तो भी मदसे मलिन हैं गंडस्थल जिनके ऐसे हाथियोंपर पडता है तेजस्वियोंका यह स्वभावही है कुछ तेजका हेतु अवस्था नहीं होती ॥ ३६ ॥

मानशौर्ययोरप्यर्थमूलत्वादेतन्निरूपणानन्तरमर्थपद्धतिं निरूपयति । तत्र प्रथममर्थैकतत्पराणां मतमभिसन्धायाह—

**जातिर्यातु रसातलं गुणगणस्तत्राप्यधो गच्छतां**
**शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।**
**शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं**
**येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ ३७ ॥**

जातिरिति ॥ जातिः ब्राह्मणत्वादिः रसातलं नामाधोलोकं यातु गच्छतु भ्रश्यत्वित्यर्थः । गुणगणो धैर्यौदार्यगाम्भीर्यादिगुणसमूहः तत्रापि रसातलपे-

१ तस्य इति पाठान्तरम् । २ गच्छतात् इति पाठान्तरम् ।

क्षयाप्यधः पाताल्लोकं गच्छतां प्राप्नुयात् । शीलं सत्स्वभावः शैलतटात्पततु विशीर्णं भवत्वित्यर्थः । अभिजनो वंशः । " अभिजनान्वयो वंशः" इत्यमरः । वह्निना सन्दह्यतां भस्मीक्रियताम् । वैरिणि संक्षोभकारित्वाच्छत्रुभूते शौर्ये शूरत्वमूर्ध्नीत्यर्थः । आशु शीघ्रं वज्रमशनिर्निपततु । अशनिनिपातेन तद्वि विध्वस्तं भवत्वित्यर्थः । एवं पूर्वोक्तजातिकुलोचिताभिमानशौर्यादिनाशेऽप्य स्माकं न किंचिदपि छिन्नमिति भावः । तथापि किं युष्मदभिलपितमित्यत आहुः नोऽस्माकमर्थः कवलं वित्तमेवास्तु सम्भवत्वयमेवास्माकं परमार्थ इति भावः ननूत्कर्षावहत्वेन प्रसिद्धानामुक्तगुणानां विध्वंसमङ्गीकृत्यैकेन वित्तेन किं कार्य प्यथेति नाशंकनीयं यतस्तद्विना तेपामप्यत्यन्ताकिञ्चित्करत्वमेवेत्याहुः । एकेन केवलेन । " एके मुख्यान्यकेवलाः " इत्यमरः । येन अर्थेन विना । "पृथग्वि ना० " इत्यादिना विकल्पात्तृतीया । इमे पूर्वोक्ताः समस्ता अपि गुणाः जाति कुलशीलाभिमानादयस्तृणलवप्रायाः तृणकणकल्पास्तद्वन्निःसाराः इत्यर्थः । अतो गुणमहत्त्वयाप्येतन्मूलकत्वादयमेव सम्पादनीय इति भावः । " धनमार्जय काकु त्स्थ धनमूलमिदं जगत् । अन्तरं नाभिजानामि निर्धनस्य मृतस्य च ॥ " इति लक्ष्मणवाक्यमेव सिद्धान्तीकुर्मः । "अर्थानामार्जने दुःखमार्जितानां च रक्षणे रक्षितानां व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ " इति मनुस्मरणं त्वशक्तविषयं मन्यामहे इति तात्पर्यम् । शार्दूलविक्रीडितं वृत्तम् । लक्षणं तूक्तम् ॥ ३७ ॥

जाति रसातलमें जाय और सर्व गुण उससेभी अधिक नीचे जावें और शील पर्वतसे गिरके नाश हो जाय और शूरतारूपी शत्रुपर वज्र पडे परन्तु हमको केवल द्रव्यहीसे काम है कि, जिसके विना सब गुण तृण टुकडेके समान हैं ॥ ३७ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ३८ ॥

तानीति ॥ सामर्थ्ये सति यानि पूर्वमिन्द्रियाणि आसन् तान्येव सन्ति । तदेव कर्म बुद्धिरपि सैव । कीदृश्यप्रतिहता नाशं न प्राप्ता वचनमपि तदेव वक्तृशक्तिः । एवं सर्वथा पूर्वं यदासीत्तदस्ति परन्तु एकोऽर्थो द्रव्यं तस्योष्मा तेन विरहितः शून्यः स एव पुरुषः क्षणेनान्यो भवतीति विचित्रमाश्चर्यम् ॥ ३८ ॥

सब इन्द्रियें वेही हैं और व्यवहारभी सब वही है वही प्रबल बुद्धि भी है और वचनभी वैसाही है परन्तु एक द्रव्यकी उष्णता विना वही पुरुष क्षणमात्रमें औरका और हो जाता है यह विचित्र गति है॥ ३८॥

ननु तथापि गुणाभावेऽपि केवलवित्तस्याकिञ्चित्करत्वमेवेत्याशंक्य तस्यैवाशेषगुणावहत्वं तावदाह—

यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ३९ ॥

यस्येति ॥ यस्य नरस्य वित्तमस्ति सम्भवति स नरः कुले जातः कुलीनः महाकुलप्रसूतः। "कुलात्खः" इति खप्रत्ययः। स एव पण्डितो विद्वान्। स एव श्रुतवान् शास्त्रज्ञः। यद्वा श्रुतं श्रवणम्। "नपुंसके भावे क्तः" तदस्यास्तीति श्रुतवान्। धर्मशास्त्राद्याकर्णनचतुरोऽपीत्यर्थः। स एव गुणज्ञो गुणग्राही। अत्र "आतोऽनुपसर्गे कः" इत्यादि व्याख्यातं प्राक्। स एव वक्ता वाग्मी च। स एव दर्शनीयः सुन्दरश्च। उक्तगुणराहित्येऽपीति भावः। नन्वेवं चेत्पुरुषस्यैकेन वित्तेन ईदृग्गुणसाकल्यसम्पन्नत्वं कुत इत्याशंक्याह। सर्वे गुणाः पूर्वोक्तकुलीनत्वादयः काञ्चनं वित्तमाश्रयन्ति अतोऽनेनैव सकलगुणसंपत्तिसंभवे किमन्यैः प्रत्येकप्रयासाद्यैरिति भावः। अत्र वित्तस्यैतावद्गुणसम्पादकत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे सम्बन्धरूपातिशयोक्तिः। वृत्तमुपजातिः॥

जिसके पास द्रव्य है वही नर कुलीन, पण्डित, गुणज्ञ, वक्ता और दर्शनयोग्य है इससे यह सिद्ध हुआ कि, सब गुण सुवर्णके आश्रय रहते हैं॥ ३९॥

अथ द्वाभ्यामर्थस्य विनाशप्रकारमाह—

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्
मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४० ॥

दौर्मन्त्र्यादिति ॥ नृपतिः राजा दुष्टो न सुलक्षणप्रयुक्तो मन्त्रः पाड्गुण्यचिन्तनं यस्य तस्य दुर्मन्त्रस्य भावो दौर्मन्त्र्यं तस्माद्धेतोर्नश्यति विनष्टो भवति । मन्त्रवैकल्ये परेषामवकाशसम्भवात् राज्याद्यपहरणादिति भावः दुष्टा मन्त्रिणः प्रधानानि यस्य तस्य भावस्तस्मान्नश्यति । अदण्ड्यदण्डनादुपदेशेन लक्ष्म्यादिरहितो भवतीत्यर्थः । 'सन्मात्रिणा वर्धयते नृपाणां लक्ष्मीर्महीधर्मयशःसमूहः । दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीर्मही धर्मयशःसमूहः ॥" इति वचनादिति भावः । यतिर्योगी सङ्गात् समागमान्नश्यति । सङ्गस्य कामक्रोधादिहेतुत्वात्तदुत्पत्तौ भ्रष्टयोगो भवतीत्यर्थः । "सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते।क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः ॥ "इति गीतावचनादिति भावः । सुतो लालनान्नश्यति गुणहीनो भवतीत्यर्थः । "लालनाद्बहवो दोषास्ताडनाद्बहवो गुणाः। तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥" इति न्यायादिति भावः । विप्रो ब्राह्मणोऽनध्ययनात् वेदशास्त्राध्ययनाभावान्नश्यति नीचो भवति। " वेदवेदाङ्गतत्त्वज्ञो विप्रः सर्वत्र पूज्यते । अनधीतश्रुतिर्विप्रः सभामध्ये न शोभते॥" इति । कुलं वंशः कुतनयात् कुपुत्रान्नश्यति ।"कोटरान्तर्भवो वह्निस्तरुमेकं दहिष्यति । कुपुत्रस्तु कुले जातः स्वकुलं नाशयेत्परम् ॥" इति न्यायात् । शीलं सत्स्वभावः।खलोपासनाद्दुर्जनसमागमान्नश्यति।तेषामत्यन्तमनर्थमूलकत्वादिति भावः । " छादयित्वात्मभावं हि चरन्ति शठबुद्धयः प्रहरन्ति च रन्ध्रेषु सोऽनर्थस्तु महान् भवेत् ॥ " इति वाक्यात् । ह्रीर्जुगुप्सितकर्माचरणान्निवृत्तिः । मद्यान्मद्यपानान्नश्यति । " अयुक्तं बहुभाषन्ते यत्र कुत्रापि शेरते। नग्ना विक्षिप्य गात्राणि ते जाल्मा इव मद्यपाः॥" इत्युक्तत्वात् । कृषिः सस्यमनवेक्षणान्नश्यति । नित्यमपरामर्शान्नश्यति । "कृषिं च पत्नीमनवेक्ष्य यः पुमानन्यानि कार्याणि समाचरेच्च । ते त्वेवमेवं च सदा कुले ह्र तथैति बाधानिचयं च यातः ॥ " इति स्मरणात् । स्नेहः पुत्रदारादिपूत्पन्नमोहः प्रवासाश्रयाद्देशान्तरसंचारसमाश्रयणान्नश्यति । " सुताङ्गनाबन्धुषु सोदरेषु नृपेषु भृत्येषु च जातमोहः । प्रवासमात्रेण हि नश्यतेऽस्मिंश्चिरं प्रवासेन हरत्यशेषम् ॥ " इति वचनात् । मैत्री मित्रभावः अप्रणयादननुरागान्नश्यति । " मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति । सुजनस्तु कनकघट इव दुर्भेद्यः सुखसन्धेयः ॥" इति वचनात ॥ समृद्धिः सम्पत्तिरनयाद्नीतिराहित्यान्नश्यति । "रक्षायां स्वमतिक्षिपत्यधिकरं शिक्षागुणैर्लभ्यते विद्विषं स्वजनं त्यजत्यवनतिं मृद्नाति मार्गास्थितान् । भूतिं नेच्छति यो जनान्प्रतिभयं दुर्वर्त्मना गच्छति क्रूराग्रं विनयांकुशं न सहते भूपालमत्तद्विपः ॥ " धनं

त्यागादर्थासत्कारणात् ॥ द्यूतादिति पाठे द्यूतादक्षक्रीडायां प्रमादादनवधानतया वा नश्यति।" श्रुतिनिष्पीडनाच्चैव चार्थासक्तधिया नृणाम्।" इति प्रमादान्नाशस्त्वनुभवसिद्ध एव। दानान्नाशः समनन्तरश्लोक एव वक्ष्यते।"शिष्टानां गर्हणान्नाशः सदाचारविवर्जनात्।" इति ॥ ४० ॥

दुष्ट मंत्रियोंके मंत्रसे राजा, संगसे तपस्वी, दुलारसे पुत्र, न पढनेसे ब्राह्मण, कुपुत्रसे कुल,खलकी सेवासे शील, मद्यपानसे लज्जा,विना देखेसे खेती, परदेशमें रहनेसे स्नेह, अनम्रतासे मैत्री, अनीतिसे वृद्धि और प्रमादपूर्वक लुटानेसे धन नष्ट होता है ॥ ४० ॥

अथ वित्तस्योत्तमादिभेदेन त्रैविध्यमाह--

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥ ४१ ॥

दानमिति ॥ दानं सत्पात्रत्यागः। भोगः स्रक्चन्दनादिद्वारानुभवः। नाशः दानधर्माद्यभावे चोरादिना विलयश्च। तदुक्तम्। " चत्वारो धनदायादा धर्माग्निनृपतस्कराः। तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति सोदराः॥ " इति। एवमुत्तममध्यमाधमभेदेन वित्तस्य तिस्रो गतयो गमनोपायाः भवन्ति। तत्र यः पुमान् न ददाति अर्थिभ्यो न प्रयच्छति वित्तमिति शेषः। अथवा न भुंक्ते नानुभवति तस्य दानभोगाभ्यां वित्तव्ययमकुर्वतः पुरुषस्य सम्बधिनो वित्तस्येति शेषः। तृतीया गतिर्नाशावस्था भवति। सा त्वत्यन्तकष्टेत्यर्थः। अयमत्र निष्कृष्टोऽर्थः। वित्तस्य दानेन गतिरुत्तमा, आत्मभोगेन मध्यमा, चोरादिनाशगतिरधमेति। अतो दानशौण्डेनैव भवितव्यं धनाढ्येनेति भावः। आर्याभेदः॥ ४१ ॥

दान, भोग और नाश येही तीन धनकी गति हैं जिसने नहीं दिया और जो अपने भोगमें न लाया उसके धनकी नाशरूप तीसरी गति होती है ॥ ४१ ॥

अथ दानशीलस्य वित्तव्ययजनिततनुत्वमपि शोभावहमेवेत्याह--

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना।

१ निहतः। २ सरितः श्यानपुलिना। इति पा०।

कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ॥ ४२ ॥

मणिरिति ॥ शाण: शस्त्रोत्तेजनसाधनोपलविशेष: तेनोल्लीढ: संघृष्टो मणिश्च । हेतिदलित: शस्त्रक्षत: समरविजयी रणशूरश्च । "जिद्दक्षि०" इत्यादिना इनिः। "हेतिः शस्त्रे तु नृस्त्रियोः" इति केशवः । मदेन दानवर्षेण परिक्षीणः कृशो नागश्च । "महाग्राहिगजा नागाः" इति वैजयन्ती । शरदि शरत्काले आश्यानानि ईषच्छुष्काणि पुलिनानि सैकतानि यस्याः सा सरित् नदी च । "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वम् । कलाशेषः षोडशांशमात्रावशिष्टश्चन्द्रश्च । "कला तु षोडशो भागः" इत्यमरः । "प्रथमां पिबते वह्निः" इत्यादीतिहासक्रमेणेतरकलानामग्न्यादिदेवैर्गिलितत्वादिति भावः । सुरतेन रतिरणेन मृदिता विह्वलीकृता बालवनिता मुग्धाङ्गना च । जारवनितेति पाठे वेश्या चोच्यते । तथा अर्थिषु विषये गलितविभवा व्यपगतार्थसम्पदः निःशेषमर्थिसात्कृतधना इत्यर्थः । "अर्थरैविभवा अपि" इत्यमरः । नरा दातृजनाश्च तनिम्ना तनुत्वेनैव । पृथ्वादित्वादिमनिच् । शोभन्ते । एवंभूततनुत्वस्यैव तेषां शोभाहेतुत्वादिति भावः । अत्र प्रस्तुतानां नराणां च सामस्त्यात्तन्निरुपमतुल्यधर्मेणौपम्यस्य गम्यमानत्वाद्दीपकालंकारः । "प्रस्तुतानां तथान्येषां सामस्त्ये तुल्यधर्मतः । औपम्यं गम्यते यत्र दीपकं तन्निगद्यते ॥" इति लक्षणात् । शिखरिणी वृत्तम् ॥ ४२ ॥

सानसे खरादी हुई मणि, संग्रामको जीतनेवाला खड्गसे हत, मदसे उतरा कृश हाथी, शरदऋतुकी सूखे हुए वालुकामय तीरवाली नदी, दूजका चन्द्रमा, सुरतकी मली हुई बाला स्त्री और अति दान देनेसे दरिद्री राजा इत्यादि सबकी दुर्बलताही शोभा है ॥ ४२ ॥

अथ पुंसां धनाभावतत्सद्भावसमयावस्थामाह--

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये
स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम् ।
अतश्चानेकान्ता गुरुलघुतयार्थेषु धनिना-

१ ललना । २ जनाः, नृपा इति च पाठान्तरम् । ३ अनैकान्त्यात् इति पाठान्तरम् ।

मवस्था वस्तूनि प्रथयति च संकोचयति च ॥ ४३ ॥

परिक्षीण इति॥कश्चित् धनिकः पुमान् परिक्षीणः दैवाद्दरिद्रः सन् यवानां शितशूकाख्यधान्यानां प्रसृतये स्पृहयति प्रसृतिमात्रयवान् गुरुतया कांक्षत इत्यर्थः। "स्पृहेरीप्सितः" इति सम्प्रदानत्वाच्चतुर्थी । "शीतशूकयवौ समौ" इत्यमरः। स परिक्षीणः पुमान् पश्चादनन्तरम् कालान्तर इत्यर्थः । सम्पूर्णो दैववशाद्धनसम्पन्नः सन् धरित्रीं भुवं तृण समां तृणकल्पां तद्वल्लघ्वीमित्यर्थः । कलयति मनुते धनमदेन तथालोकयतीत्यर्थः । अतश्चात एव हेतोरर्थेषु यवधरित्र्यादिषु विषये गुरुलघुतया महत्त्वाल्पत्वभावेन अनेकान्ता सर्वथा गुरूणि गुरुत्वमेव लघुनि लघुत्वमेवेति नियमाभाववतीत्यर्थः । धनिनां.सम्यान्धिन्यवस्था व्यापारः वस्तूनि यवधरित्र्याद्यल्पमहत्तरवस्तूनि प्रथयति च धनाभावदशायां नीचमपि वस्तु गुरूकरोतीत्यर्थः । तथा संकोचयति च । तत्सद्भावदशायां महदपि वस्तु निराकरोतीत्यर्थः । निर्धनधनिकयोरित्थंभूतावस्था प्रत्यक्षसिद्धा अतो विवेकिना नैव विपर्यस्तबुद्धिना भवितव्यमिति भावः । शिखरिणी वृत्तम । लक्षणं तूक्तम्॥४३

जब कोई परिक्षीण अर्थात् निर्धन अवस्थामें होता है और तब एक पँसा यवकी इच्छा करता है और वही मनुष्य जब सम्पूर्ण संपन्न अर्थात् धनिक अवस्थामें हो जाता है तब पृथ्वीको तृण समान गिनता है । इस कारण ये ही दोनों चंचल अवस्था पुरुषको गुरु और लघु बनाती हैं और वस्तुओंकोभी फैलाती और समेटती हैं ॥ ४३ ॥

अथ राजानं संम्बोधयंस्तस्यार्थसाधनोपायमतिदिशति—

राजन्दुधुक्षसि यदि क्षितिधेनुमेनां
तेनाद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपुष्यमाणे
नानाफलं फलति कल्पलतेव भूमिः ॥ ४४ ॥

राजन्निति ॥ हे राजन् त्वमिति शेषः । अन्यथा शेषे प्रथमपुरुषः स्यात् । एनामेतां त्वद्धस्तगतामित्यर्थः । अत्रान्वादेशाभावादेनादेशश्चिन्त्यः । क्षितिर्धेनुरिवेत्युपमितिसमासः । न नु क्षितिरेव धेनुरिति रूपकं वत्समिवेति स्पष्टोपमा-

---

१ परिपोष्यमाणे । २ फलैः इति पाठांतरम् ।

लिङ्गान् । तां क्षितिं धेनुं दुधुक्षसि यदि दोग्धुमिच्छसि चेत् अर्थमिति शेषः। दुहेः सन्नन्तात् सिच् दुह्यादेर्द्विकर्मकत्वनियमात् । तर्हि तेन दुधुक्षाहेतुना अद्येदानीमुपलभ्यमानं लोकं जनं वत्सं तर्णकमिव "वत्सो ना कुटजे वर्षे तर्णके तनयादिके ।" इति वैजयन्ती । पुषाण पोषय । "लोकस्तु भुवने जने" इत्यमरः । वत्सनाशे क्षीरस्येव लोकनाशेऽर्थस्यासम्भवादिति भावः । पोषणफलमाह । तस्मिन् लोके चानिशं सर्वदा सम्यगसम्बाधं परिपुष्यमाणे परिपाल्यमाने सति भूमिः क्षितिः कल्पवृक्षशाखेव । "समे शाखा लते" इत्यमरः । यद्वा कल्पयत्यभीप्सितानीति कल्पा सा च सा लता च । "स्त्रियाः पुंवत्" इत्यादिना पुंवद्भावः । सेव कल्पवल्लीव नानाविधफलं धनधान्यादिबहुरूपफलं फलति निष्पादयति । "फल निष्पत्तौ" इति धातोर्लट् । यतो लोकपरिपालनव्यतिरेकेण न तेऽर्थः सम्भविष्यति तद्द्वारैव भूमेरप्यखिलफलदोग्धृत्वात् तस्मादशेषफलाभार्थं तत्परिपोषणमावश्यकमिति भावः । अत्र पूर्ववाक्यस्थोपमया निर्व्यूढोत्तरवाक्यस्थोपमेत्यनयोरङ्गाङ्गीभावेन संकरः । वसन्ततिलकावृत्तम् ४४

हे राजा ! जो पृथ्वीरूपी धेनुको दुहा चाहते हो तो बछरेके समान प्रजालोगोंका पोषण करो जब यह प्रजारूपी बछडा अच्छी भाँतिसे निरन्तर पोषा जायगा तब कल्पलताके तुल्य पृथ्वी अनेक प्रकारके फल देगी ॥ ४४ ॥

यतो राजानं संबोधितवानपि तन्नीतिः कीदृशीत्याशङ्कायां तस्या बहुविधत्वमित्याह—

सत्यानृता च परुषा प्रियभाषिणी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ४५ ॥

सत्येति ॥ सत्या यथार्थभाषिणी अनृता असत्यवादिनी च यथा परुषा कठोरभाषिणी च प्रियभाषिणी मधुरालापिनी च तथा हिंस्रा घातुका । "शरारुर्घातुको हिंस्रः" इत्यमरः । "नमिकम्पि०" इत्यादिना रप्रत्ययः । दयालुरपि कारुणिका च । "स्याद्दयालुः कारुणिकः" इत्यमरः । "स्पृहिगृहि०" इत्या-

१ षादिनी इति पाठान्तरम् । २ वेश्यांगना इति पाठान्तरम् ।

दिना आलुच्प्रत्ययः। तथा अर्थपरा धनलुब्धा वदान्या दानशौण्डा च कुत्रचिद्विषये इति सर्वत्राप्यध्याहार्यम्। "स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे।" इत्यमरः। तथा नित्यं प्रतिदिनं व्ययो धनत्यागो यस्याः सा तथोक्ता। प्रचुरतरनित्यधनागमा प्रचुरं प्रभूतं यथा तथा नित्यं धनस्य आगमः प्राप्तिर्यस्याः सा तथोक्ता च। अतो वाराङ्गना वेश्येव। "वारस्त्री गणिका वेश्या" इत्यमरः। नृपनीतिः राजवृत्तिः अनेकरूपा बहुप्रकारा न त्वैकांतिकीत्यर्थः। वाराङ्गनायामपि विशेषणानि समानानि। अत्र सत्यानृतेत्यादिपदश्रवणमात्रेण झटिति विरोधः स्फुरति तस्य स्वाभाव्येनाभावीकरणादलङ्कारः सन् वारांगनेवेत्युपमाङ्गाङ्गीभावेन संकीर्यते ॥ ४५ ॥

कहीं सत्य कहीं असत्यवादिनी, कहीं कठोर, कहीं प्रियभाषिणी, कहीं हिंसा करनेवाली, कहीं दयालु, कहीं लोभी, कहीं उदार, कहीं नित्यप्रति बहुतसा द्रव्य उठानेवाली और कहीं बहुतसी संचय करनेवाली यह राजनीति वेश्याकी नाईं अनेकरूपसे रहती है ॥ ४५ ॥

सोऽपि गुणाढ्य एव बलाश्रयणीयो न तु निर्गुण इति राजानमेव संबोधयति—

आज्ञा कीर्तिः पालनं ब्राह्मणानां
　दानं भोगो मित्रसंरक्षणं च।
येषामेते षड्गुणा न प्रवृत्ताः
　कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ४६ ॥

आज्ञेति ॥ आज्ञा मर्यादापरिपालनात्मकशासनम्। कीर्तिः दानक्षात्रोद्भवा सत्समाख्या। ब्राह्मणानां पालनं निरुपद्रवं ब्राह्मणसन्तर्पणम्। दानं सत्पात्रे त्यागः। भोगः स्रक्चन्दनादिजनितसुखानुभवः। मित्रसंरक्षणं सुहृत्समुद्धरणं चेत्येते षड्गुणा येषां राज्ञां न प्रवृत्ताः न प्रवर्तन्ते। कर्तरि क्तः। पृथिव्या ईश्वरः पार्थिवः तस्य सम्बुद्धिः हे पार्थिव राजन्। तस्येश्वरस्य "सर्वभूमिपृथिवीभ्यामण्" इत्यण्प्रत्ययः। तेषामुपाश्रयेण समाश्रयेण कोऽर्थः को लाभः न कोऽपीत्यर्थः। तस्मादुक्तगुणसम्पन्न एव राजा समाश्रयणीयः न तु कुक्षिम्भरिरिति भावः। शालिनी वृत्तम्। "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति लक्षणात् ॥ ४६ ॥

---

१ विद्या इति पाठान्तरम्।

आज्ञा, कीर्ति, ब्राह्मणोंका पालन, दान, भोग और मित्रोंकी रक्षा, जिनमें ये गुण सम्पादन न हुए तिन्हें राजाकी सेवाका क्या फल है ४६

अथापि कार्पण्यं मा कुरु लाभालाभयोर्दैवायत्तमूलकत्वमित्याह–

यद्धात्रा निजफालपट्टलिखितं स्तोकं महद्वा धनं
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ च नातोऽधिकम् ।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ॥ ४७ ॥

यादिति ॥ धात्रा ब्रह्मणा स्तोकमल्पं महद्बहुलं वा यद्धनं निजफालं निजानिटिलमेव पट्टं तत्र लिखितं लेखने निर्दिष्टं तत् ब्रह्मलिखितं धनं मरुस्थले ऊपरदेशेपि किमुतान्यत्रेति भावः । नितरामतिशयेन प्राप्नोति लभते । अन्यूनामिति शेषः । " समानौ मरुधन्वानौ " इत्यमरः। मेरौ कनकाचलेऽप्यतो ब्रह्मलिखितादधिकं न प्राप्नोति तत् तस्मात्कारणात् धीरः स्थिरचित्तो भव । वित्तवत्सु धनाढ्येषु विषये कृपणां दीनां वृत्तिं व्यापारं वृथा व्यर्थं मा कृथाः माकार्षीः । तेन कार्पण्यजनितनिन्दामात्राश्रयत्वमेव न त्वधिकधनप्राप्तिरिति भावः । कृञो लुङि थास् तनादित्वेऽपि सिचो नित्यलोपविधानान्न सिच् " न माङ्योगे " इति अट्प्रतिषेधः । तत्र दृष्टान्तमाह । कूपेऽल्पजलाधारे गर्तेऽपि पयोनिधौ समुद्रे जलाधारेपि घटः कलशस्तुल्यमात्मपरिमितं जलं गृह्णाति स्वीकुरुते । पश्येति कृपणसम्बोधनं न तु कूपेऽल्पं पयोनिधावधिकमत एतद्दृष्टान्तेन समाहितचित्तेन भवितव्यं न तु कार्पण्यपर्याकुलेनेति तात्पर्यम् ॥ ४७ ॥

विधाताने जो अपने ललाटमें लिख दिया है किंचित् धन अथवा बहुत चाहे मारवाडकी भूमिमें भी जाय बैठे उसे वह निरन्तर प्राप्त होगा उससे अधिक सुमेरुपरभी जानेसे न मिलेगा इसलिये धैर्य धरो और धनवालोंके निकट वृथा याचना न करो क्योंकि देखो कूप और समुद्रमें घडा समानही जल ग्रहण करता है ॥ ४७ ॥

मेघं प्रति चातकोक्तिः—

त्वमेव चातकाधारोऽसीति केषां न गोचरः ।
किमम्भोदवरास्माकं कार्पण्योक्तिं प्रतीक्ष्यसे ॥ ४८ ॥

१ भाल इति पाठान्तरम् । २ ततो नाधिकम् इति पाठान्तरम् ।

त्वमेवेति ॥ हे अंभोदवर ! हे मेघश्रेष्ठ ! त्वं चातकानामाधारः आश्रयोऽसीति केषां गोचरः प्रत्यक्षं न अपि तु सर्वेषां गोचरः । तस्मादस्माकं चातकानां कार्पण्योक्तिं किं प्रतीक्षसे किमुपेक्षसे । अनुष्टुप् वृत्तम् ॥ ४८ ॥

तुमही मुझ पपीहाके आधार हो, हे श्रेष्ठ मेघ ! यह बात किसपर प्रसिद्ध नहीं है ? अब तुम हमारी दीनताका क्या पेंडा देखते हो? ४८

चातकोक्तेरुत्तरमिदम्–

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयता-
मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः ।
केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥४९॥

रे रे चातकेति ॥ रे रे इति वीप्सा । हे चातक ! सावधानमनसा स्वस्थचेतसा क्षणं क्षणमात्रं श्रूयतां मम वच इति शेषः । हि यस्माद्गगनेऽम्भोदा मेघाः बहवो वसन्ति किंतु सर्वे एतादृशाः करुणावन्तो न । कुतः केचिद्वृष्टिभिर्वसुधां पृथ्वीमार्द्रयन्ति जलेन सिञ्चन्ति । केचिद्वृथा गर्जंति गर्जनां कुर्वंति । तस्मात् हे मित्र ! यं यं मेघं पश्यसि तस्य तस्य पुरतोऽग्रे दीनं वचो मा ब्रूहि मा वद । दातारं प्रति याचना कर्तव्या । सर्वान् प्रति नेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

अरे चातक ! सावधान मनसे क्षणमात्र हमारी बात सुन कि, मेघ आकाशमें बहुतसे हैं परन्तु सब ऐसे नहीं, कितने तो वर्षाकर पृथ्वीको पूर्ण कर देते हैं और कितने वृथाही गर्जके चले जाते हैं हे मित्र ! इसलिये जिस जिसको तू देखे उसी उसीके आगे दीनताके वाक्य मत कह ॥ ४९ ॥

अथार्थादिसम्पन्नोऽपि दुर्जनो नोपादेय एवेत्याशयेनार्थपद्धतिनिरूपणानन्तरं दुर्जनपद्धतिं निरूपयति । तत्र तेषामवगुणं गणयति–

अकरुणत्वमकारणविग्रहः
परधने परयोषिति च स्पृहा ।

सुजनबन्धुजनेष्वसहिष्णुता
प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ ५० ॥

अकरुणत्वमिति ॥ परदुःखप्रहरणेच्छा करुणा तद्राहित्यमकरुणत्वं दयाहीनत्वं च । अकारणविग्रहो निष्कारणकलहश्च । "अस्त्रियां समरानीकरणाः कलहविग्रहौ ।" इत्यमरः । परधने परद्रव्ये परयोषिति परदारेषु स्पृहा च । एकत्रापहरणेच्छा अन्यत्र सम्भोगाभिलाषश्च । सुजनेषु साधुषु जनेषु चासहिष्णुता असहनशीलत्वं चेतीदं सर्वम् । " नपुंसकमनपुंसके० " इत्यादिना नपुंसकैकशेषः । दुरात्मनां दुर्जनानां प्रकृतिसिद्धं स्वभावसिद्धं हि । अतस्ते नोपादेया इति भावः । "प्रकृतिः प्रपञ्चभूते प्रधाने मूलकारणे । स्वभावे" इति विश्वः । द्रुतविलम्बितं वृत्तम् । "द्रुतविलम्बितमाह नभौ भरौ " इति लक्षणात् ॥५०॥

करुणा न करना और अकारण विग्रह अर्थात् लडाई करना पराये धन और स्त्रीकी सर्वदा इच्छा रखना, अपने कुटुम्ब और मित्रकी न सहना ये बातें दुष्टजनोंकी स्वाभाविक सिद्ध है ॥ ५० ॥

आस्तां तावद्दुर्जनमात्रस्य परित्याज्यत्वकथनमशेषावगुणावमार्जकसम्पन्नोऽपि दुर्जनः परित्याज्य एवेति सदृष्टान्तमाह—

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ ५१ ॥

दुर्जन इति ॥ दुर्जनो विद्यया वेदवेदाङ्गाध्यात्मिकयालंकृतो भूषितः सन्नपि सकलविद्यापारीणः सन्नपीत्यर्थः । परिहर्तव्यस्त्याज्यः । कुत इत्यत आह । सर्पः आशीविषः मणिना फलकस्थमाणिक्येन भूषितोऽलंकृतः सन्नपि असौ सर्पो न भयंकरः किम् ? भयंकर एवेत्यर्थः । अतो मणिभूषितसर्पप्रायो विद्यावानपि दुर्जनो दूरतस्त्याज्य एव । " दुर्जनं दूरतस्त्यजेत् " इति न्यायादिति भावः । " मेघर्तिभयेषु कृञः " इति कृञः खस्य ".अरुर्द्विषत्० " इत्यादिना मुमागमः । अत्र बिंबप्रतिबिंबन्यायेन धर्मधर्मिणोर्वाक्यद्वये पृथङ्निर्देशाद्दृष्टान्तालङ्कारः । " बिंबानुबिंबन्यायेन निर्देशो धर्मधर्मिणोः । दृष्टान्तालंकृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रयात् ॥ इति " लक्षणात् । वृत्तमानुष्टुभम् ॥ ५१ ॥

१ भूषितः । २ अलंकृतः ।

दुर्जन यद्यपि विद्यावान् भी हो तो भीं परित्यागहीके योग्य होता है जैसे मणिसे भूपित सर्प क्या भयंकर नहीं होता ? ॥ ५१ ॥

अथास्य सर्वदूषकत्वमाह–

जाड्यं ह्रीमति गण्यते व्रतशुचौ दम्भः शुचौ कैतवं
शूरे निर्गुणता मुनौ विमतिता दैन्यं प्रियालापिनि।
तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः॥५२॥

जाड्यमिति॥ ह्रीमति लज्जावति पुंसि जाड्यं मान्द्यम्। "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्प्रत्ययः। गण्यत संख्यायते दुर्जनैरिति शेषः। न तु जुगुप्सितकर्माचरणपराङ्मुखत्वम्। व्रतैस्तपश्चान्द्रायणादिनियमैः शुचौ शुद्धे दंभो धर्मध्वजत्वं गण्यते न त्वनुष्ठातृत्वम्। शुचौ स्वभावादेव बाह्यान्तरशुद्धे कैतवं कपटं गण्यते न तु पारमार्थिकत्वम्। शूरे निर्घृणता दयाराहित्यं गण्यते न तु विक्रान्तत्वम्। मुनौ मननशीले विमतिता बुद्धिहैन्यं गण्यते न त्वात्मैक्यानुसन्धानतत्परत्वम्। प्रियालापिनि मधुरवादिनि दैन्यं गण्यते न तु श्रवणानन्दकरत्वम्। तेजःप्रागल्भ्यं प्रभाविशेषो वा तद्वत्यवलिप्तता गर्वभरतत्वं गण्यते न तु स्वभावः। "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च।" इति विश्वः। वक्तव्येष्वर्थेषु शक्तिः प्रतिभापरपर्यायः सामर्थ्यविशेषः तथा स्थिरे। मुखमस्यास्तीति मुखरो दुर्मुखः। "दुर्मुखे मुखराबद्धमुखौ" इत्यमरः। "मुखकुञ्जेभ्यश्च" इति रप्रत्ययः। तस्य भावस्तत्ता। असम्बन्धप्रलापित्वमित्यर्थः। गण्यते न तु वाग्मित्वम्। तस्मात् कारणात् गुणिनां गुणसम्पन्नानां स को नाम गुणो भवेत् यो गुणो दुर्जनैर्नाङ्कितः न दूषितः। दुर्जनादूषितो गुणः सुगुणिनां न कोऽप्यस्तीत्यर्थः। यो दुर्जनानां मत इति पाठे यो गुणः दुर्जनानां मत इष्टः स्यात् स को नाम भवेदिति संबन्धः। दुर्जनाभिमतो गुणः सुगुणिनां न कोऽप्यस्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं तूक्तम्॥

लज्जावान् पुरुषको शिथिल, व्रतधारीको दंभी, पवित्रको कपटी, शूरको निर्दयी, सीधेको मूर्ख, प्रिय कहनेवालेको दीन, तेजस्वीको गर्वीला, वक्ताको बकवादी और स्थिरचित्तवालेको आलसी कहते हैं।

---

१ रुचौ। २ वक्तर्यशक्तिः। ३ दुर्जनानां मतः इति च पाठान्तरम्।

इससे यह जान पडता है कि, गुणियोंमें कौन ऐसा गुण है कि, जिसमें दुर्जनोंने कलंक नहीं लगाया ॥ ५२ ॥

अथ गुणावगुणप्रणालिकामाह----

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं बलेन[1] महिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो[2] यद्यस्ति किं मृत्युना॥५३॥

लोभ इति ॥ लोभो धनादिवांछास्ति चेदगुणेन दुर्गुणेन किं न किञ्चिद पीत्यर्थः । तस्यैवात्यंतनिन्दावहत्वादिति भावः । पिशुनता परोक्षे परदोपसूचकतास्ति चेत्पातकैर्ब्रह्महत्यादिभिः किं तस्या एव निरयपातनदक्षत्वादिति भावः सत्यं यथार्थभापणं समदर्शित्वं वास्ति चेत्तपसा चान्द्रायणादिना किं तस्यैव परिशोधकत्वादिति भावः । शुचि द्रोहचिंतादिराहित्येन शुद्धं मनोऽस्ति यदि तीर्थेन प्रयागादिना किं तस्यैवापवर्गमूलकत्वादिति भावः । " यः स्वात्मरति भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमतो भवति " इति स्मरणमात्रमूलम् सौजन्यं सुजनभागोऽस्ति यदि बलेन परिजनेन किं तस्यैवाशेपकार्यनिर्वाहकत्वादिति भावः । महिमा माहात्म्यमस्ति यदि मण्डनैः कुण्डलहाराद्यलंकरणैः किं तस्यैवोपस्कारहेतुभूतत्वादिति भावः। अपयशः अपकीर्तिरस्ति यदि मृत्युना मरणेन किं तद्वत् मृतप्रायत्वादिति भावः । एवं विचार्य सद्गुणार्जनतत्परेण भवितव्यं निपुणेन अन्यथा दौर्जन्यमनायाससाध्यमिति वाक्यशेपत्वेनोन्नेयम् ५३

लोभ जिसमें है फिर उसमें और अवगुण क्या चाहिये, जो कुटिल है उसे और पातक करनेकी क्या आवश्यकता है, सत्य वक्ताको तपका क्या प्रयोजन है, जिसका मन शुद्ध है उसे तीर्थ करनेसे क्या अधिक फल होगा, जो सज्जन हैं उन्हें मित्र और कुटुम्बकी क्या कमी है, यशस्वी पुरुषोंको यशसे बढके क्या भूषण है, सद्विद्यावालेको और दूजे धनकी क्या अपेक्षा है, जिसका सर्वत्र अपयश है उसे मृत्यु पानेसे क्या अधिक होगा ॥ ५३ ॥

---

१ गुणैः स्वमहिमा इति पाठान्तरम् । २ धनैः इति पाठान्तरम् ।

कस्यचिदनुभविनो निजकष्टाभिवेदनमभिनीयाह–

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतिः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ५४ ॥

शशीति ॥ दिवसेऽह्नि धूसरो निस्तेजस्कः शशी चन्द्रश्च । गलितयौवना भ्रष्टनूतनवयस्का कामिनी कान्ता च । विगतवारिजं पुण्डरीकषण्डहीनं सरः कासारश्च । शोभना आकृतिर्यस्य सुन्दरपुरुषस्य अनक्षरं शास्त्रविभ्रष्टं मुखं च । धनपरायणो धनलुब्धः प्रभुः राजा च । सततदुर्गतिः निरन्तरदारिद्र्यवान् सज्जनश्च । नृपांगणगतो राजगृहांतर्वर्ती खलो दुर्जनश्च । तस्य विघातुकत्वादिति भावः । इत्येवं सप्त शल्यानि शूलानि तथा दुःसहदुःखजनकत्वादिति भावः । इदमेवात्यंतकष्टनिवेदनवचनमिति तात्पर्यम् । तत्र प्रकृतानां प्रकृतस्य खलस्य च दुःखहेतुत्वसाम्येनौपम्यस्य गम्यमानत्वाद्दीपकालंकारः । लक्षणं तूक्तम् । गतमिदं पृथ्वीवृत्तम् ॥ ५४ ॥

दिनका मलीन चन्द्रमा, यौवनहीन स्त्री, विना कमलका सरोवर, सुन्दर रूपवालेका अक्षररहित मुख, धनवान् कृपण, सज्जन दरिद्री और राजसभामें प्राप्त खल ये सातों हमारे हृदयमें कांटेकी नाईं गडते हैं ॥ ५४ ॥

अथ दुष्टराजलक्षणं सदृष्टांतमाह–

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वानं स्पृष्टो दहति पावकः ॥ ५५ ॥

नेति ॥ चंडकोपानामुग्रक्रोधानां भूभुजां राज्ञां कश्चिदपि पुमान् आत्मीयो नाम आत्मीयत्वेन प्रसिद्धः न भवति किंतु सर्वोऽप्यनात्मीय एवेत्यर्थः । ननु यथाकथंचिद्धितमाचरन्भविष्यत्येव आत्मीय इत्याशंक्य दृष्टांतमुखेन निराकुर्वन्नाह । जुह्वानमाज्यपुरोडाशादिदानेनोपचरन्तमपि । " हु दानादनयोः " इति

१ दुर्गतः इति पाठान्तरम् ।

धातोः कर्तरि शानच् । होतारं यजमानं पावकोऽग्निः स्पृष्टः सन् दहति संतापयतीत्यर्थः । अतोऽग्निदृष्टांतेनेदृशो राजा न समाश्रयणीय इति भावः ॥ ५५ ॥

प्रचण्डक्रोधवाले राजाओंका कोई मित्र नहीं, जैसे होम करनेवालेकोभी अग्नि छूजाय तो जलाही देता है ॥ ५५ ॥

कथं न समाश्रयणीय इत्याशंक्य तत्सेवाया दुष्करत्वादित्याह–

मौनान्मूकः प्रवचनपटुर्वाचको जाल्पको वा
धृष्टः पार्श्वे भवति च वसन् दूरतोऽप्यप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ५६ ॥

मौनादिति ॥ मौनात्तूष्णींभावान्मूको निर्वचो भवति सेवक इति शेषः । प्रवचनपटुः प्रगल्भश्चातिवक्तेति वाचको बहुभाषी जल्पतीति जाल्पकोऽसंबद्धप्रलापी भवति । उभयत्रापि " ण्वुल्तृचौ " इति कर्तरि ण्वुल्प्रत्ययः णित्त्वाद्वृद्धिः । जल्पक इति पाठे जल्पतीति जल्पकः । पचाद्यच् स्वार्थे कप्रत्ययः । अन्यथा " जल्पभिक्ष० " इत्यादिना कन्प्रत्यये जल्पाक इति स्यात् यथाहामरसिंहः " स्याज्जल्पाकस्तु वाचालः " इति । पार्श्वे समीपे च वसन् धृष्टो निर्भीतो भवति । दूरतो विप्रकृष्टदेशे वसन् अप्रगल्भः अप्रौढो भवति क्षान्त्या परिभवादिपूत्पद्यमानेषु क्रोधप्रतिलब्धलक्षणयोपलक्षितश्चेद्भीरुर्भयशीलो भवति " भियः क्रुक्लुकनौ " इति क्रुप्रत्ययः । यदि न सहते परिभवादिकं न क्षमते यदि तर्हि प्रायशो बाहुल्येन अभिजातः सत्कुलीनो न भवति । अतः परमगहनोऽत्यन्तदुरवगाहः सेवाधर्मपरिचर्यात्मकं कर्म योगिनामपि कालत्रयाभिज्ञानामप्यतीन्द्रियवस्तुपरिज्ञानवतामित्यर्थः । किमुतान्येषामिति भावः । अगम्यो ज्ञातुमशक्यः । सर्वे गत्यर्था ज्ञानार्थाः । यतः परब्रह्मापि ध्यानादिना साक्षात्क्रियते न त्वयमिति भावः । मौनादिव्यतिरिक्तधर्मस्य गगनारविन्दप्रायत्वात्तस्य ब्रह्मणोऽपि दुर्विज्ञेयतयात्यन्तदुष्करत्वमिति तात्पर्यम् । अत्र सेवाधर्मस्य योगिगम्यत्वेऽप्यगम्यत्वोक्तेः संबन्धे असंबन्धरूपातिशयोक्तिः । मन्दाक्रान्तावृत्तम् । " मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " इति लक्षणात् ॥ ५६ ॥

१ वाटुलः, जल्पकः । २ वसति । ३ तदा । ४ दूरतश्चाप्रगल्भः इति च पाठान्तरम् ।

मौन रहनेसे गूंगा, वक्ता होनेसे वाचाल और बकवादी; समीप होनेसे ढीठ, दूर रहनेसे मूर्ख, क्षमा करनेसें कादर और न सहनेसें कुलहीन कहलाता है। तात्पर्य यह है कि, सेवाधर्म परम कठिन है योगियोंकोभी अगम्य है ॥ ५६ ॥

किं बहुनास्य पुरस्तान्न केनचित् स्थातुमपि शक्यत इत्याह–

उद्भासिताखिलखलस्य विशृङ्खलस्य
　प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः ।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
　नीचस्य गोचरगतैः सुखमास्यते कैः ॥ ५७ ॥

उद्भासितेति ॥ उद्भासिताः प्रकाशिताः अखिलाः खलाः येन तस्य अधिकारप्रदानेन पुरस्कृताशेषदुर्जनस्येत्यर्थः । तस्य सुजनविद्वेषित्वादिति भावः । तथा विशृंखलस्य विधिनिषेधातीततया स्वच्छन्दगतेरित्यर्थः । तथा प्रोद्गाढमतितरां विस्मृता स्मरणाविषयीकृता निजा स्वकीया अधमकर्मवृत्तिः प्राक्तननीचकृत्यव्यापारो येन तस्य । प्रागेव विस्मृतेति पाठे प्राक् प्रथमाचरणसमय एवेत्यर्थः । एतेन लज्जाहैन्यमुक्तम् । तथा दैवाददृष्टवशादिदानीं प्राप्तो विभवः ऐश्वर्यसंपत्तिर्यस्य । गुणद्विषः सुगुणनिन्दकस्यास्य पूर्वोक्तस्य नीचस्य राज्ञः गोचरगतैः विषयवासिभिः कैर्जनैः सुखमक्लेशेन आस्यते स्थीयते न कैरपीत्यर्थः । अतो न नीचाश्रयः कर्तव्य इति भावः । "आस उपवेशने" भावे लट् । अत्रोद्भासितेत्यादिपदार्थस्य विशेषणगत्या सुखस्थित्यभावपदार्थहेतुकत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः । वसन्ततिलका वृत्तम् । लक्षणं तूक्तम् ॥ ५७ ॥

अनेक खलोंको प्रकाश करनेवाला निरंकुश कि जिसके पूर्वजन्मके मन्द अधम कर्म उदय होरहे हैं और दैवकरके धनभी उसे प्राप्त हैं और गुणोंसे द्वेष करनेवाला ऐसे नीचके वश रहकर किसने सुख पाया है ॥ ५७ ॥

अथ दुर्जनसुजनमैत्रीप्रकारमाह–

आरम्भगुर्वी क्षयिणी क्रमेण
　लघ्वी पुरा वृद्धिमुपैति पश्चात् ।

---

१ प्रागेव, प्राग्जातविस्मृत इति पाठान्तरम् । २ वृद्धिमती च इति पाठान्तरम् ।

दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ५८ ॥

आरंभेति ॥ पूर्वार्धपरार्धाभ्यां पूर्वाह्णभेदेन भिन्ना पृथग्विधा छाया अनातप इव । "छाया त्वनातपे कान्तौ प्रतिबिंबार्कजाययोः" इति वैजयंती । आरंभे प्रारंभसमये गुर्वी गुरुः वर्धिष्णुरित्यर्थः । "वोतो गुणवचनात्" इति विकल्पात् ङीप् । क्रमेण कालक्रमेण क्षयिणी क्षयिष्णुश्च । "जिदृक्षि०" इत्यादिना इनिः । तथा पुरा प्रारंभे लघ्वी लघुः ह्रस्वेत्यर्थः । पूर्ववत् ङीप् । पश्चादनन्तरं वृद्धिमुपैति प्राप्नोतीति भावः। अयमर्थः—दुर्जनमैत्री पूर्वाह्णच्छायेव प्रारंभगुर्वी क्रमेण क्षयिणी च भवति । सुजनमैत्री तावदपराह्णच्छायेवादौ लघ्वी ततो वर्धिष्णुश्च भवतीति। अतोऽत्र यद्युक्तं तत्कर्तव्यं कुशलेनेति भावः । अत्र यथासंख्यासंकीर्णोपमालंकारः । उपजातिवृत्तमुक्तम् ॥ ५८ ॥

आरम्भमें बहुत लंबी चौडी फिर क्रमसे पूर्वार्द्ध दो पहरकी छायाके समान खलोंकी मैत्री क्षण क्षण घटती जाती है और सज्जनोंकी मैत्री पहिले बहुत किंचित् फिर क्रमही क्रम परार्द्ध दो पहरकी छायाकी नाईं प्रतिक्षण बढती जाती है ॥ ५८ ॥

यदुक्तम् 'अकरुणत्वमकारणविग्रहः' इति तदेव प्रकटयन्नुपसंहरति—

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥५९॥

मृगेति ॥ संतोषो दैववशाल्लब्धेन मनःसंतुष्टिः।तृणजलसंतोषैर्विहिता कल्पिता वृत्तिर्जीवनं येषां तेषां न तु परोपतापोपजीविनामित्यर्थः । "वृत्तिर्वर्तनजीवने" इत्यमरः। मृगाणां हरिणादीनां मीनानां मत्स्यानां सज्जनानां साधूनां च। लुब्धको व्याधः धीवरो दाशः जालिक इत्यर्थः। पिशुनः सूचकश्च ।"व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः" "कैवर्त्ते दाशधीवरौ" इति चामरः। एते जगति भुवि निष्कारणं निर्हेतुकमेव वैरिणो विद्वेषिणः घातुका इत्यर्थः। तृणेन विहितवृत्तीनां मृगानां लुब्धका निष्कारणवैरिण इत्यादि यथाक्रममन्वयात्क्रमापरनामा यथासंख्यालंकारः । तदुक्तं विद्यानाथेन "उद्दिष्टानां पदार्थानां पूर्वं पश्चाद्यथाक्रमम्। अनुदेशो भवेद्यत्र तद्यथासंख्यमुच्यते॥" इति । आर्यावृत्तम्॥५९

हरिण, मछली और सज्जन तृण, जल और सन्तोष करके अपनी अपनी जीविका करते हैं पर व्याध, धीवर और कुटिललोग विना प्रयोजनही इनसे संसारमें वैर रखते हैं ॥ ५९ ॥

अथैतद्वैलक्षण्येन सुजनपद्धतिं निरूपयति । तत्रादावादरातिशयान् तान् नमस्करोति—

वाञ्छा सज्जनसङ्गतौ परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोपिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलै-
रेते येषु वसन्ति निर्मलगुणास्तेभ्यो महद्भ्यो नमः ॥६०॥

वाञ्छेति ॥ सज्जनसंगतौ साधुसमागमे वांछा अभिलाषः न तु जिहासा तस्य मोक्षसाधकत्वादिति भावः। तदुक्तं ज्ञानवासिष्ठे "मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः । शमो विचारः संतोषश्चतुर्थः साधुसंगमः॥" इति।तथा चोक्तं श्रीमहाभागवते "महत्सेवां द्वारमाहुर्विमुक्तेः" इति । स्वेनाप्युक्तम् "चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम्" इति । परेषां गुणे प्रीतिः संतोषः न तु दोषापादनम् । "परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसंतः संति सन्तः कियंतः" इति वक्ष्यमाणत्वादपीति भावः । गुरौ विद्योपदेष्टरि नम्रता भक्तिश्रद्धाभरेण प्रह्वीभावः न तु गर्वोद्रिक्तता । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते निखिला ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति । "गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥" इति श्रुतिस्मृती । विद्यायां वेदान्तादिविद्याभ्यासे व्यसनमासक्तिः न तु द्यूतकेल्यादौ । तस्य मोक्षसाधनब्रह्मज्ञानजनकत्वादिति भावः । स्वयोषिति निजदारेषु रतिः संभोगः न तु परदारेषु । "रम्यं कुलस्त्रीरतम्" इति वचनादिति भावः । लोकापवादान् लोकनिन्दायाः । "भीत्रार्थानां भयहेतुः" इति अपादानत्वात्पञ्चमी । भयं न तु निर्लज्जत्वम् । "लोकापवादो बलवानिति सत्यवती श्रुतिः ।" इत्यादिवचनात्तस्य बलिष्ठत्वादिति भावः । शूलिनि परदेवतायां शिवे भक्तिरनुरागः न तु क्षुद्रदेवतायाम् । "शिवे भक्तिः शिवे भक्तिः" इत्यादिवचनेष्वावृत्त्या तस्याः प्राशस्त्यश्रवणादिति भावः।

---

१ संगमे । २ खलेष्वेते । ३ नैरेव भूर्भूषिता । ४ नरेभ्य इति च पाठान्तरम् ।

आत्मदमने स्वपरिभवे सति शक्तिः सामर्थ्यं पराक्रम इति यावत् । न तूपशमेनौदासीन्यम् । "अन्यदा भूषणं पुंसां शमो लज्जेव योषिताम् । पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥" इति वचनादिति भावः । खलैर्दुर्जनैः सह संसर्गमुक्तिः संगत्यागः न तु तत्सहवासाभिलाषः । "दुर्जनं दूरतस्त्यजेत्" इति। "दुर्जनः परिहर्तव्यः" इत्यादिवचनादिति भावः । इत्येते निर्मलाः निष्कलंकाः गुणाः सज्जनसंगतिवांछादयो येषु पुरुषेषु सन्ति तेभ्यो महद्भ्यो नमः। इत्थंभूतगुणविशिष्टानामेव नमस्काराहर्त्वादिति भावः । "नमःस्वस्ति०" इत्यादिना चतुर्थी । तैरेव भूर्भूषितेति पाठे तैर्निर्मलगुणसंपन्नैरेव भूरलंकृता न त्वन्यैस्तेषामेव चारुत्वाद्यतिशयहेतुत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ६०॥

सज्जनोंके संगकी वांछा, पराये गुणमें प्रीति, बडे लोगोंसे नम्रता, विद्यामें व्यसन, अपनीही स्त्रीसे रति, लोकनिन्दासे भय, महेश्वरमें भक्ति, आत्माके दमनकी शक्ति और खलके संगका त्याग ये निर्मल गुण जिन पुरुषोंमें हैं तिन्हें हम नमस्कार करते हैं ॥ ६० ॥

अथैषां निसर्गसिद्धगुणं गणयति-

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ[1]
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६१ ॥

विपदीति ॥ विपद्यापत्काले धैर्यं निर्विकारचित्तत्वं न तु दैन्यम् । "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु" इति । अथानन्तरं वाक्यारंभे वा । अभ्युदये संपदि क्षमा सहिष्णुत्वं न तृष्णडता । सदसि राजविद्वत्सभायां वाक्पटुता वाग्मित्वं सरसवचनरचनाचातुर्यमिति यावत् । न तु मूकीभावः । युधि रणरङ्गे विक्रमः पराक्रमो न तु पलायनम् । यशस्यभिरतिः संग्रहेच्छा न त्वनादरः श्रुतौ वेदशास्त्राभ्यसने व्यसनमासक्तिर्न तु निर्वेद इतीदं सर्वम् । "नपुंसकमनपुंसकेन०" इत्यादिना नपुंसकैकशेषः । महात्मनां महानुभावानां प्रकृतिसिद्धं स्वभावसिद्धं हि । "संसिद्धिप्रकृती समे । स्वरूपश्च स्वभावश्च निसर्गश्च" इत्यमरः । द्रुतविलंबितं वृत्तम् । लक्षणं तूक्तम् ॥ ६१ ॥

[1] अभिरुचि इति पाठान्तरम्।

विपत्तिमें धैर्य, ऐश्वर्यमें क्षमा, सभाके मध्य वार्तामें चतुराई, संग्रामें पराक्रम अपने यशमें रुचि और शास्त्रमें व्यसन ये बातें महात्माओंमें स्वाभाविक सिद्ध होती हैं ॥ ६१ ॥

अथैषां प्रसिद्धविलक्षणमण्डनसम्पत्तिमाह—

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम् ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ६२ ॥

कर इति ॥ करे हस्ते श्लाघ्यः सकललोकप्रशस्तस्त्यागो दानं मंडनं न तु कंकणम् । " दानेन पाणिर्न तु कंकणेन " इति स्वेनैवाग्रे वक्ष्यमाणत्वात् । शिरसि गुरुपादयोः प्रणयिता अभिवादनतात्पर्यं मण्डनं न तु मणिहिरण्मयकोटिरादि । मुखे वक्त्रे सत्या वाणी सूनृतभाषणं मण्डनं न तु तांबूलचर्वणादि । भुजयोरतुलं निरुपमानं विजयि जयशीलं च । " जिदक्षि० " इत्यादिना इनिः । वीर्यं बलं मण्डनं न तु केयूरादि। हृद्यन्तरङ्गे स्वच्छा वृत्तिः निष्कलङ्कव्यापारो मण्डनं न तु हाररूपकादि । हृच्छब्दस्य वक्षःस्थलवाचकत्वमपि सम्भवतीति कृत्वा अभेदेन निर्देशः।श्रवणयोः कर्णयोरधिगतं श्रुतं शास्त्रमेव"श्रुतं शास्त्रावधृतयोः " इति विश्वः । मण्डनं न तु कुण्डले।"श्रोत्रं श्रुतेनैव न कुण्डलेन"इति वक्ष्यति । इदमित्यादिना पूर्वोक्तदानादिकं सर्वमैश्वर्येण धनरत्नसंपत्त्या विनापि । " पृथग्विना० " इत्यादिना विकल्पात्तृतीया । प्रकृत्या स्वभावेन महतां महात्मनां सौजन्यसम्पन्नानामित्यर्थः । " प्रकृत्यादिभ्यस्तृतीया " इति तृतीयासमासः । मण्डनं भूषणं तस्यैव लोकोत्तररामणीयादिकहेतुत्वादिति भावः । शिखरिणी वृत्तम् ॥ ६२ ॥

हाथ दानसे, मस्तक बडे लोगोंके पैरमें पडनेसे, मुख सत्य बोलनेसे, दोनों भुजा अतुल पराक्रमसे, हृदय स्वच्छ वृत्तिसे, कान शास्त्रश्रवणसे बडाईके योग्य होते हैं और येही सत्पुरुषोंके विना ऐश्वर्यके भी भूषण हैं ॥ ६२ ॥

---

१ स्वस्था । २ अधिगतैकव्यसनफलम् इति च पाठान्तरम् ।

गुणाढ्यत्वे को लाभ इत्याशंक्य तेषां श्रेयोहेतुत्वमाह—

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥६३॥

प्राणेति ।। प्राणाघातात् प्राणहिंसायाः निवृत्तिर्निवर्तनं च । "मा हिंस्यात् सर्वभूतानि" "अहिंसा परमो धर्मस्त्वधर्मः प्राणिनां वधः" इत्यादिनाग्नीषोमीयपश्वालंभनवृत्त्यतिरिक्तहिंसायां निषेधश्रवणात् । परधनहरणे संयमो मनोरोधश्च । "परद्रव्याणि लोष्टवत्" इति न्यायादिति भावः । काले समये सत्यवाक्यं यथार्थभाषणं च धर्मोपदेशश्रवणादिति भावः । अत्र "ब्राह्मणार्थे गवामर्थे" इत्यादिष्वसत्यवचनस्यापि निषेधाभावश्रवणात् काल इत्युक्तम् । शक्त्या प्रदानं वित्तानुसारेण त्यागश्च । "वित्तशाठ्यं न कारयेत्" इति वचनादिति भावः । युवतिजनकथायां परस्त्रीवृत्तान्तकथने मूकभावस्तूष्णींभावशीलत्वं च । "स्वप्नेऽप्यन्यवधूकथाम्" इति वचनात् । परेषामन्येषां याचकानामित्यर्थः । तृष्णा धनलिप्सा तस्या एव स्रोतसः प्रवाहस्य विभंगो निरोधः अभीप्सितदानेन मनोरथपरिपूरणं चेत्यर्थः । "याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥" इति श्रवणादिति भावः । गुरुषु विनयेन नम्रत्वं च "गुरौ नम्रता" इत्युक्त्वादिति भावः । सर्वभूतेष्वशेषप्राणिषु अनुकम्पया दयया सामान्यं समदर्शित्वं च सर्वशास्त्रेषु वेदवेदान्तादिसकलागमेष्वनुपहतः अविच्छिन्नः विधिरध्ययनविधानं च । यद्वा सर्वभूतानुकम्पेति पृथक् पदम् । तथा सर्वशास्त्रेषु सामान्यमवैषम्येण तत्तत्सिद्धान्तानुवर्तित्वम् । अनुपहतविधिरलुप्तकर्मानुष्ठानं चेत्येष गुणसमुदायः श्रेयसां पन्था अखण्डितैश्वर्यादिश्रेयःप्राप्तिमार्गः । न त्वेतद्व्यतिरिक्तोऽन्योऽस्तीत्यर्थः । एतादृशगुणसम्पत्तिः सुजनानामेवेति कृत्वा त एव श्लाघ्या इति भावः। अथवा श्रेयसां प्रशस्यानां सुजनानां सम्बन्धी पन्थाः । तत्प्रवृत्तिमार्ग इत्यर्थः । प्रशस्यशब्दादीयसुनि "प्रशस्यस्य श्रः" इति श्रादेशः । अत्र वांछा सज्जनसङ्गताविल्यादिश्लोकेपूक्तगुणाः प्रायेण दैवसम्पदभिजातानामेव सम्भवन्ति न त्वन्येषाम् । तदुक्तं भगवद्गीतासु "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ अहिंसा सत्य-

मक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत॥" इति। स्रग्धरावृत्तम्। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।' इति लक्षणात्॥ ६३॥

जीवहिंसासे निवृत्त रहना, पराया धन हरण करनेसे संयम करना, सत्य बोलना, समयपर यथाशक्ति दान देना, परस्त्रियोंकी कथामें मौन रहना, तृष्णाके प्रवाहको तोडना, बडे लोगोंमें नम्र रहना, प्राणिमात्र पर दया रखना, सब शास्त्रोंमें प्रवृत्ति रखना और नित्यनैमित्तिक कर्मोंको न छोडना यह सब मनुष्योंके कल्याणका पंथ है॥ ६३॥

अथापत्सम्पदोः सुजनमनोवृत्तिमाह—

सम्पत्सु महतां चित्तं भवेदुत्पलकोमलम्।
आपत्सु च महाशैलशिलासङ्घातकर्कशम्॥ ६४॥

सम्पत्स्विति॥ सम्पत्सु धनधान्यवस्तुवाहनादिसमृद्धिषु महतां महात्मनां सज्जनानां चित्तमुत्पलवत् कोमलं मृदुलं भवेत्। न तु कठिनमित्यर्थः। विपत्सु दारिद्र्याद्यनर्थसंकटेषु महाशैलशिलासंघातः पाषाणकूटः तद्वत् कर्कशं कठोरं च भवेत्। न त्वधैर्यविश्रब्धमित्यर्थः। न कदाप्युक्तवैपरीत्यमन्यथा माहात्म्यभङ्गप्रसङ्गादिति भावः। विवेकिनामविवेकिनां चायमेव पन्थाः आदरणीय इति तात्पर्यम्। अत्र शैलस्य महत्त्वविशेषणं तच्छिलासंघातस्यात्यन्तदुर्भेद्यत्वद्योतनार्थम्। उक्तं चैतदन्यत्रापि। "सौजन्यामृतसिंधवः परहितप्रारब्धवीरव्रता वाचालाः परवर्णने निजगुणालापे च मौनव्रताः। आपत्स्वप्यविलुप्तधैर्यनिलयाः संपत्स्वनुत्सेकिनो मा भूवन् खलवक्त्रनिर्गतविषम्लानाननाः सज्जनाः॥" इति। उपमालंकारः॥ ६४॥

संपत्तिमें महात्मालोगोंका चित्त कमलसेभी कोमल रहता और आपत्तिमें पर्वतकी बडी शिलाकी तुल्य कठिन हो जाता है॥ ६४॥

अथ द्वाभ्यामेव तद्वृत्तस्यासाधारण्यमाह—

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः।

१ भवति इति पाठान्तरम्।

विपद्युच्चैः स्थैर्यं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६५ ॥

प्रियेति ॥ न्यायादनपेता न्याय्या नीतिप्रवणा वृत्तिर्जीवनम्। " वृत्तिर्वर्तनजीवने " इत्यमरः। प्रीणातीति प्रिया इष्टा। न त्वन्याय्या तस्या एव श्रेयस्करत्वादिति भावः। " इगुपधज्ञाप्रीकिरः कः " इति कप्रत्ययः। असुभंगे प्राणप्रयाणे किमुतान्यदिति भावः। मलिनं दुष्कर्म असुकरमकर्तव्यं न त्वापत्काले नास्ति मर्यादेति न्यायात्सुकरं तस्यैवैहिकामुष्मिकफलदत्वादिति भावः।"ईषद्दुः०" इत्यादिना खल्प्रत्ययः ततो नञ्समासः। असन्तः कुद्रकास्तु नाभ्यर्थ्याः कस्मिंश्चिद्विषयेऽपि न प्रार्थनीयाः किंतु संत एव तेषामुपेक्ष्यत्वादिति भावः। यद्यपि " न पदादौ खल्वादयः " इत्याह वामनस्तथापि कविप्रौढया तुशब्दस्य पादादौ प्रयोगः। सुहृदपि प्राणप्रियबन्धुरपि किमुतान्य इति भावः। " सुहृद्दुर्हृदौ मित्रामित्रयोः " इति निपातनात् साधुः। कृशधनः धनहीनश्चेत् न याच्यः याचितुं न योग्यः। धनादिकमिति शेषः। किन्तु धनपरिपूर्ण एव तथाविधयाच्ञाया अनुचितत्वादिति भावः। विपद्यनर्थसंकटेऽप्युच्चैः धैर्यं महाधैर्यं न तु भयविह्वलत्वम्। " आपत्स्वप्यविलुप्तधैर्यनिधयः, विपदि धैर्यमथाभ्युदये क्षमा" इति चोक्तत्वादिति भावः। महतां पूज्यानामनुविधेयमनुकूलं पदं व्यवसितं न त्वननुकूलं तथाभूतस्यैव श्लाघ्यत्वादिति भावः। " पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु। " इत्यभिधानात्। इतीदमेतत् विषममसाधारणतया दुष्करमसिधाराव्रतमत्यभिचरितव्रतं सतां सत्पुरुषाणां केनोद्दिष्टमुपदिष्टं न केनापीत्यर्थः। स्वतःसिद्धत्वादिति भावः। अत्रासिधारावन्निशितत्वादसिधारासंचारवत्सावधानेनैकाग्रतया विधेयत्वाद्वा असिधाराव्रतम्। यद्वा असिधारया व्यवहारतां व्रवं वीरव्रतमित्यर्थः। अथवा। " युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत्। अंतर्निवृत्तसंगः स्यादसिधाराव्रतं स्मृतम् ॥ " इत्यवधेयम्। शिखरिणी वृत्तम् ६५॥

सत्पुरुष लोग असंतोंसे कुछ याचना नहीं करते और स्वल्प धनवाले सज्जनसेभी नहीं याचते, न्यायोक्त अपनी जीविका उन्हें प्रिय है, प्राण जानेपरभी मलिन कर्म उनसे दुष्कर है, विपत्तिमें ऊंचे बने रहते हैं और श्रेष्ठलोगोंके आचरणको धारण किये रहते हैं यह तरवारके धारसे कठोर व्रतको उन्हें किसने उपदेश किया मानो ब्रह्माने उपदेश किया है ॥ ६५ ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ६६ ॥

प्रदानमिति ॥ प्रच्छन्नं प्रदानं गुप्तदानं न तु प्रकाशं तथाभूतदानस्य महाफलश्रवणादिति भावः । गृहं निजमन्दिरं प्रत्युपगते सति अर्थिनीति शेषः । संभ्रमविधिः प्रत्युत्थानाभिवादनादिसत्वरव्यापारविधानं च न तु वैमुख्यं तस्यैव शास्त्रोदिताचारत्वादिति भावः । प्रियं तदभीष्टं कृत्वा मौनं तूष्णींभावश्चापरिकीर्तनमिति यावत् । न तु प्रकटनम् । " कृतस्यापरिकीर्तनं, न-दत्त्वा परिकीर्तयेत् " इति मनुस्मरणादिति भावः । सदसि राजविद्वत्सभायामुपकृतेः कथनं परोपकारप्रख्यापनं च न तु तत्र तूष्णींशीलत्वमन्यथा कृतघ्नत्वप्रसंगादिति भावः । लक्ष्म्यां संपत्त्यामनुत्सेको गर्वराहित्यं न तु मदांधत्वम् । " संपत्स्वनुत्सेकिनः " इत्युक्तत्वादिति भावः । निरभिभवसाराः अनिंदापराः परकथाः पुरुषांतरप्रसंगाश्च न तु गर्हणपराः । "आत्मप्रशंसां परगर्हामिति च वर्जयेत् " इत्यादिस्मरणात् । सतामित्यादि । वृत्तं च पूर्ववत्॥६६

दानको गुप्त रखना, अपने घर आये हुए पुरुषका सत्कार करना, पराया भला कर मौन रहना, दूसरेके किये हुए उपकारको सभामें वर्णन करना, धन पाकर गर्व न करना और पराई चर्चामें उसके निरादरकी बात बचाकर कहना यह तरवारकी धाराके समान कठिन व्रत सत्पुरुषोंको किसने उपदेश किया है ॥ ६६ ॥

अथाधममध्यमोत्तमवृत्तिमाह—

संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं दृश्यते ।
अन्तःसागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमजुषामेवंविधा वृत्तयः ॥ ६७ ॥

---

१ ज्ञायते । २ राजते । ३ स्वात्यां । ४ गुणाः संसर्गतो देहिनाम् इति च पाठांतरम् ।

संतप्तायसीति ॥ सम्यगग्नितप्तायःपिंडे संस्थितस्य निक्षिप्तस्येत्यर्थः । पयसं जलस्य नामापि नामधेयमात्रमपि न श्रूयते । मूलतो ध्वस्तमेव भवतीत्यर्थः। स्वरूपदर्शनं तु किमु वक्तव्यमिति भावः । तदेव पयः नलिनीपत्रस्थितं पद्मपत्रगतं सत् मुक्ताकारतया मौक्तिकरूपेण दृश्यते न तु मौक्तिकत्वेनेत्यर्थः। तदेव पयः अंतःसागरे सागरांतराले। अंतरित्यव्ययम् । या शुक्तिः मुक्तास्फोटः तस्याः मध्ये उदरे पतितं सन्मौक्तिकं जायते । मौक्तिकत्वेन परिणमतीत्यर्थः। "शाजनोर्जा" इति जादेशः । मुक्तैव मौक्तिकमिति विग्रहः । विनयादित्वात्स्वार्थे ठक् । अतः प्रायेण भूम्ना अधममध्यमोत्तमजुषां निकृष्टसाधारणोत्कृष्टाश्रयाश्रितवतामेवंविधाः नामश्रवणादिरूपनिवृत्तयो व्यापारा भवंतीति यथाक्रममन्वयाद्यथासंख्यालंकारः । अतः महदाश्रयः कर्तव्यः । "कर्तव्यो महदाश्रयः" इति वचनात् । अत्रोत्तममध्यमाधमा इति लोकप्रसिद्धोद्देशक्रमः कविना न वीक्षित इति ज्ञेयम् । शार्दूलविक्रीडितं वृत्तम ॥ ६७ ॥

तप्त लोहेपर जलकी बूँद पडनेसे उसका नामभी नहीं रहता वहि बूंद कमलके पत्रपर पडनेसे मोतीके सदृश शोभित होता है फिर वहि बूंद स्वाती नक्षत्रमें समुद्रकी सीपमें पडनेसे साक्षात् मोती हो जाती है इससे यह सिद्ध हुआ कि प्रायः अधम मध्यम और उत्तम गुण संसर्ग ( संग ) हीसे होते हैं ॥ ६७ ॥

अथ सत्पुत्रकलत्रमित्रसंपत्तिः पुण्यकृदधीनेत्याह–

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम्।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

य इति ॥ यः पुत्रः सुचरितैः वाक्यकरणादिसदाचारैः पितरं प्रीणयेत् संतर्पयेत् । "प्रीञ् प्रीणने" इत्यस्माद्धातोश्चौरादिकाण्णिचि लिङ् । "धूञ्प्रीञोर्नुग्वक्तव्यः" इति नुगागमः । स पुत्रः पुन्नाम्नो नरकात्त्रायत इति व्युत्पत्त्या इति पुत्रशब्दः वाच्यः न तूत्पन्नभावः । "जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानेन त्रिभिः पुत्रस्य पुत्रता ॥" इति स्मरणात् । यद्भर्तुः पत्युः हितमिच्छति मनभक्तिभ्यां हिताचरणतत्परं भवति तदेव कल-

भार्या न तु याद्दच्छिकम्। "पतिभक्तिपरा साध्वी शान्ता सा सत्यभाषिणी।" इति पतिव्रताधर्मत्वात् "कलत्रं श्रोणिभार्ययोः" इत्यमरः। यदापदि अनर्थ-संकटे सुखे संपदि च समक्रियमविषमाचारामित्यर्थः। तुल्यवृत्ति तदेव मित्रं सुहृत् न त्वापत्संपदोः त्यागानुवर्तनतत्परम्। "आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदंति संतः।" इति वक्ष्यमाणत्वात्। एतत्त्रयमुक्तसत्पुत्रादित्रितयं जगति भुवि पुण्यकृतो धन्या लभंते प्राप्नुवन्ति। न त्वकृतसुकृता इत्यर्थः। एवंविधत्रितयलाभस्य महापुण्यफलत्वादिति भावः। वसंततिलकावृत्तम् ॥ ६८ ॥

जो अपने चरित्रोंसे अपने पिताको प्रसन्न रक्खे ऐसा पुत्र, जो अपने पतिका निरंतर हित चाहै ऐसी स्त्री और जो आपत्ति और सुख दोनोंमें समान भाव रक्खै ऐसा मित्र,जगत्में यह तीनों पुण्यवान्हीको मिलते हैं ॥ ६८ ॥

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा।
एको वासः पत्तने वा वने वा
एका नारी सुन्दरी वा दरी वा ॥ ६९ ॥

एक इति ॥ एको मुख्यो देवः प्रशस्ताः केशाः यस्य स केशवः। "केशा-द्वोऽन्यतरस्याम्" इति वप्रत्ययः। विष्णुर्वा शिवः शंकरो वा। एकं मुख्यं मित्रं भूपतिः राजा वा यतिः संन्यासी वा। एको मुख्यो वासो वसतिरथानं पत्तने नगरे वनेऽरण्ये वा। एका मुख्या नारी भार्या सुन्दरी सुरूपा वा दरी पर्वतगुहा वा। शालिनीवृत्तम् ॥ ६९ ॥

एक देवको ग्रहण करना चाहिये केशव हो वा शिव, एक मित्र करना चाहिये राजा हो वा तपस्वी, एक जगह वास चाहिये नगर हो वा वन और एक स्त्रीसे प्रीति हो सुंदरी हो वा कंदरा (गुहा)हो ॥ ६९

अथ सतां तावदसाधारणगरिमास्पदत्वेनाशेषोपादेयत्वमाह–

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः

स्वार्थान् सम्पादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्जनान् दुःखयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ।७०।

नम्रत्वेनेति ॥ नम्रत्वेन प्रह्वत्वेनैवोन्नमंत औन्नत्यं प्राप्नुवन्तस्तथाभावस्यैवौन्न त्यहेतुत्वादिति भावः । परेषां गुणकथनैः सद्गुणवर्णनैः स्वान् स्वकीयान् गुणा सौजन्यादीन् ख्यापयंतः प्रकटयंतः न त्वात्मप्रशंसया । तादृग्भावस्यैव नि गुणप्रकटनहेतुत्वादिति भावः । परार्थे परप्रयोजननिर्वहणे विततौ विस्तृतौ पृथु तरौ महत्तरौ चारंभयत्नौ प्रारंभोत्साहौ येषां ते तथोक्ताः सन्त एव स्वार्थान् स्वप्रयोजनानि संपादयन्तो निष्पादयन्तः परकार्यसाधनपुरस्कारेणैवात्मीयकार्य साधनतत्परा न त्वेकान्तत इत्यर्थः । तथाभूतत्वस्यैवात्मार्थकत्वादिति भावः क्षांत्या सहनशीलत्वेनैवाक्षेपेण निन्दया रूक्षाक्षराणि परुषवाक्यानि तेषां मुख राणि वाचालानि मुखानि येषां तान् परुषभाषिण इत्यर्थः । दुर्जनान् खला दुःखयन्तः संतापयन्तः न तु चण्डतया तथाविधत्वस्यैव तेषां हृच्छल्यप्रायत्वादि भावः । अत एव साश्चर्यकरचरित्राः सन्तः सत्पुरुषा जगति लोके बहुमता ब मानिताः सन्तः कस्य वा पुंसो नाभ्यर्चनीयाः न पूजनीया इति काकुः । सर्वे षामप्यभ्यर्चनीया एवेत्यर्थः । स्रग्धरावृत्तम् । लक्षणं तूक्तम् ॥ ७० ॥

नम्रतासे ऊँचे होते हैं और परगुण कथन करनेसे अपना गु प्रसिद्ध करते हैं और निरन्तर विस्तारपूर्वक परकार्य करनेसे अप कार्य सम्पादन करते हैं और निन्दक दुष्टोंको अपनी क्षमाहीसे दूषि करदेते हैं ऐसे आश्चर्य आचरणवाले बहुमानीय संतलोग जगत्में किस पूजनीय नहीं हैं ॥ ७० ॥

अथ सौजनस्य परोपकारफलकत्वात्तन्निरूपणानन्तरं परोपकारपद्धतिं वर्णयति

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ७१ ॥

---

१ प्रियतरा । २ दूषयन्त इति पाठांतरम् । ३ भूरि इति पाठां० । ४ अनर्थिताः इति पाठां० ।

भवंतीति ॥ तरवः पनसरसालादिवृक्षाः फलोद्गमैः फलभारैः नम्राः अवनताः भवन्ति । घना मेघाः नवाम्बुभिर्नूतनोदकैरुपलक्षिताः सन्तः दूरविलम्बिनः सर्वत्र प्रवर्षणार्थमन्तरिक्षसञ्चारिणो भवन्ति । सत्पुरुषाः समृद्धिभिरुपलक्षिता अपि अनुद्धता अनुद्धण्डा भवन्ति । तीक्ष्णस्वभावा न भवन्तीत्यर्थः । अनर्थिता इति पाठे अयाचिता भवन्ति याच्ञां विनैव परहितमाचरन्तीत्यर्थः । तथा एष उक्तनिजनम्रत्वादिव्यवहारः परोपकारिणां परहिताचरणतत्पराणां स्वभावो निसर्गसिद्ध एव न त्वाहार्यक इत्यर्थः । महान्तो हि परोपकारार्थक्लेशं क्लेशत्वेन गणयन्ति तेषां तस्य स्वाभाव्यादिति भावः । तदुक्तम्—" परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय चरन्ति गावः परोपकारार्थमिदं शरीरम् ॥ " इति । अर्थान्तरन्यासोऽलङ्कारः । वंशस्थवृत्तम् [१]। " जतौ तु वंशस्थमुदीरितं जरौ " इति लक्षणात् ॥ ७१ ॥

जैसे फल होनेसे वृक्ष नम्र होते हैं, जैसे नवीन जल भरनेसे मेघ भूमिपर झुकजाते हैं वैसेही सत्तपुरुष भी सम्पत्ति पायके उद्धत नहीं होते किन्तु नमते हैं अर्थात् परोपकारी जीवोंका यही स्वभाव है ॥७१॥

अथैषां मुख्यमण्डनसम्पत्तिमाह—

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणाकुलानां
परोपकारेण[२] न चन्दनेन ॥ ७२ ॥

श्रोत्रमिति ॥ करुणाकुलानां दयालूनां परोपकारिणामित्यर्थः । श्रोत्रं कर्णः । " कर्णशब्दग्रहौ श्रोत्रम् " इत्यमरः । श्रुतेन धर्मशास्त्रश्रवणेनैव विभाति प्रकाशते । कुण्डलेन सुवर्णमणिमयकर्णभूषणेन न तु विभाति । पाणिर्हस्तः दानेन सत्पात्रत्यागेन विभाति । कङ्कणेन कनकवलयेन न तु विभाति । कायो देहः परोपकारेण परेषां हिताचरणेन विभाति । कस्तूरीघनसारमिश्रितपटीरपङ्कलेपेन तु न विभाति । महात्मनां श्रवणादिकमेव स्वाभाविकं मण्डनं न त्वन्यत् । तस्य नश्वरत्वादिति भावः । वृत्तमुपजातिः ॥ ७२ ॥

---

१ पराणाम् इति पाठान्तरम् । २ परोपकारैर्न तु इति पाठान्तरम् ।

कानकी शोभा शास्त्रश्रवणसे है कुण्डल पहिरनेसे नहीं, हाथकी शोभा दान करनेसे है कंकण पहिरनेसे नहीं, करुणामय जनोंके देहकी शोभा परोपकार करनेसे है कुछ चंदन लगानेसे नहीं ॥ ७२ ॥

यदुक्तम् ' अनर्थिताः सत्पुरुषाः ' इत्यादि तदेव प्रपंचयति—

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥ ७३ ॥

पद्माकरमिति ॥ दिनं दिवसं करोतीति दिनकरः सूर्यः । " कृञो हेतु० " इत्यादिना टच्प्रत्ययः । नाभ्यर्थितः न याचितः सन्नित्यर्थः । नशब्दस्य सुप्सुपेति समासः । पद्माकरं पद्मवनं विकचं विकसितं करोति । " प्रफुल्लोत्फुल्लसंफुल्लव्याकोचविकचस्फुटाः । फुल्लश्चैते विकसिते " इत्यमरः । तथा चन्द्रोऽपि कैरवचक्रवालं कुमुदखंडम् । " सिते कुमुदकैरवे " इत्यमरः । विकासयति व्याकोचयति । तथा जलधरो वारिवाहोऽपि । पचाद्यच् । नाभ्यर्थितः सन्नेव जलं ददाति प्रवर्षति । तथा हि सन्तः सत्पुरुषाः स्वयमयाचिता एवेत्यर्थः परेषां हिते हिताचरणे विहिताभियोगाः कृताभिनिवेशाः न त्ववबोधिका इत्यर्थः । अतो युक्तमेवं हिताचरणं तेषामिति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। "सामान्यविशेषकार्यकारणभावाभ्यां न दृष्टप्रकृतिकार्यसमर्थनमर्थान्तरन्यासः " इति सर्वस्वसूत्रम् । वसंततिलकावृत्तम् ॥ ७३ ॥

सूर्य विना याचे स्वतः कमलके समूहको विकासित करता है, चन्द्रमा विना याचे कुमुदके समूहको प्रफुल्लित करता है और मेघ विना याचना किये सृष्टिमें जल देता है ऐसेही सन्तजन विना याचे ही पराये हितके हेतु आपसे आप उद्योग करते हैं ॥ ७३ ॥

अथ व्यापारतारतम्येन पुरुषाणामुत्तमादिभेदमाह—

एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।

---

१ विकची करोति । २ मुक्ताभि० । ३ एके । ४ स्वार्थे इति च पाठान्तरम् ।

तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ७४ ॥

एत इति ॥ ये पुमांसः स्वार्थान् स्वप्रयोजनानि। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यभिधानात्। परित्यज्य त्यक्त्वा परार्थघटकाः परप्रयोजनसंघटनशीला एते सत्पुरुषाः पुरुषोत्तमाः सर्वस्य तेनैवाभिव्यक्तत्वादिति भावः। ये तु स्वार्थस्याविरोधेनावैषम्येण। स्वार्थनिर्वाहतत्परत्वेनैवेत्यर्थः। परार्थं परप्रयोजननिर्वाहार्थमुद्यमभृत उद्योगभाजः ते सामान्याः साधारणा मध्यमपुरुषा इत्यर्थः। ये तु स्वार्थाय स्वार्थनिष्पत्त्यर्थं परहितं निघ्नन्ति नाशयन्ति तेऽमी मानुषराक्षसाः मानुषशब्दवाच्यराक्षसाः। तथा क्रूराचारतत्परत्वात्पुरुषाधमाः इत्यर्थः। ये तु निरर्थकं निष्फलं प्रयोजननिष्पत्तिराहित्येनापीति यावत्। परहितं घ्नन्ति ते पुमांसः के वा कथम्भूता वा न जानीमहे। उक्तत्रिविधपुरुषविलक्षणत्वात्तान् ज्ञातुं न शक्नुम इत्यर्थः। अत एव परमनीचा इत्यर्थः। उक्तपक्षेषु यः श्रेयान् तत्पक्षाश्रयणं कर्तव्यमायुष्मतेति भावः। शार्दूलविक्रीडितं वृत्तम् ७४

सत्पुरुष वे हैं जो अपना अर्थ छोड दूसरेके कार्यको साधते हैं, सामान्यपुरुष वे हैं जो अपने और पराये दोनों कार्योंको साधन करते हैं और मनुष्योंमें राक्षस वे पुरुष हैं और जो अपने हितके अर्थ पराये कार्यको नष्ट करते हैं और जो व्यर्थ पराये कार्यकी हानि करते हैं वे कैसे पुरुष हैं उन्हें हम नहीं जानते ॥ ७४ ॥

अथ सन्मित्रलक्षणमाह—

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७५ ॥

पापादिति॥पापान् पापाचरणान्निवारयति निवर्तयति। धर्मोपदेशेन दुष्कर्मप्रवृत्तेः विरमयतीत्यर्थः। "जुगुप्साविराम०" इत्यादिना पञ्चमी। हिताय योजयते सत्कर्माचरणाय प्रवर्तयते इत्यर्थः। यद्वा श्रेयःसंप्रहार्थं प्रोत्साहयतीत्यर्थः।

---

१ निघ्नन्ति। २ च गूहति इति च पाठांतरम्।

गुह्यं गोप्यं निगूहत्याच्छादयति न कुत्रापि प्रकटयतीत्यर्थः।गुणान् सौशील्यादि सद्गुणान् प्रकटीकरोति प्रख्यापयति न तु निगूहयतीत्यर्थः।आपद्गतमापि संकट स्थमपि न जहाति न त्यजति । "तन्मित्रमापदि सुखे च समक्रियं यत्" इत्युक्त त्वादिति भावः। काले व्यसनादिसमये ददाति वाञ्छितं दिशति तदिदं पापनि वारणादिकं सर्वं सन्तः सत्पुरुषाः सन्मित्रस्याकैतवसुहृदः लक्षणं स्वरूपं प्रव दन्ति । वसन्ततिलकावृत्तम् ॥ ७५ ॥

मित्रको पाप करनेसे वर्जित करै और उसके हितकी बात उसे उपदेश करै, उसकी गुप्त बातको छिपावै, गुणोंको प्रगट करै, आप त्तिकालमें साथ न छोडै और समय पडेपर यथाशक्ति द्रव्य भी दे यह अच्छे मित्रोंका लक्षण सन्तोंने कहा है ॥ ७५ ॥

पुनस्तदेव क्षीरनीरदृष्टांतेन वर्णयति--

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥७६

क्षीरेणेति ॥ क्षीरेण कर्त्रा आत्मानमुपगतं प्राप्तं यदुदकं जलं तस्मै स्वात्मा श्रितजलायेत्यर्थः।पुरा पूर्वं ते प्रसिद्धा अखिलाः समस्ताश्च गुणा दत्ताः । नित्य मैत्री सम्पादितेत्यर्थः। अन्तः क्षीरोत्तापं क्षीरस्य श्रपणार्थमग्नौ निक्षिप्तस्य दुग्धस्य उत्तापं सन्तापमवेक्ष्य तेन क्षीरामिश्रितेन पयसा उदकेन । "पयः क्षीरं पयोऽम्बु च" इत्यमरः । स्वात्मा स्वशरीरं कृशानौ वह्नौ हुतः । मित्रसंतापासहनात् संशोषित इत्यर्थः।ततस्तत् क्षीरं कर्तृ मित्रस्य जलस्यापदं संशोषरूपां विपत्तिं दृष्ट्वा पावकं वह्निं गन्तुमुन्मन उद्युक्तमभवत्। "उत्क उन्मनाः" इति निपातनात् साधुः । जलसंशोषणे क्षीराणां बहिर्निर्गमनसंभवादिति भावः । तदनन्तरं केन जलेन युक्तमिति संशाम्यति प्रशान्तं भवति । "शमामष्टानाम्" इति दीर्घः तथा हि सतां मैत्री सौहार्दं मैत्री व्याख्याता ईदृशी पुनः परस्परव्यसनासहन शीला खलु अत एतद्युक्तमिति भावः । अत्र स्वभावसिद्धस्य क्षीरनीरव्यवहारस्य

१ क्षीरे ताप । २ स्वात्मा इति पाठान्तरम् ।

परस्परसन्तापदर्शनहेतुकत्वेनोत्प्रेक्षणात् क्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा । सा चोक्तार्थान्तरन्यासनिर्व्यूढेत्यनयोर्विजातीयसङ्करः । शार्दूलविक्रीडितं वृत्तम् ७६

दूधमें जब जल मिला तो उस दूधने अपना सब गुण और रूप अपने जलरूपी मित्रको दे दिया, फिर दूधमें ताप देखकर जलनें अपना शरीर अग्निमें होम दिया अर्थात् जलगया फिर दूधने भी मित्रकी इस आपत्तिको देखकर अग्निमें गिरना चाहा फिर जलके छींटे पाके अपने मित्रको आया जान ठंढा हो बैठगया सो उचितही है क्योंकि सत्पुरुषोंकी मैत्री ऐसेही होती है ॥ ७६ ॥

अथैतन्माहात्म्यमाह—

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनं शिखरिणां गणाः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ७७ ॥

इत इति ॥ इतोऽस्मिन् देशे केशवो विष्णुः कुक्षिस्थाखिलभुवन इति भावः। स्वपिति योगानुसंधानेन निद्राति । "रुधादिभ्यः सार्वधातुके" इतीडागमः । इतोऽस्मिन् प्रदेशे तस्य केशवस्य इमे तदीयाः । त्यदादित्वात् "वृद्धाच्छः" । ये द्विषो हिरण्याक्षरावणादयस्तेषां कुलं समूहस्तिष्ठतीति शेषः । इतस्ततोऽन्यस्मिन् प्रदेशेऽपि शरणार्थिनो रक्षणार्थिनो रक्षणाभिलाषिणः । "शरणं गृहरक्षित्रोः" इत्यभिधानात् । शिखरिणां मैनकादिपर्वतानां गणाश्च शेरते स्वपन्ते "शीङो रुट्" इति रुडागमः । इतस्तस्मादप्यन्यस्मिन् प्रदेशे समस्ता ये संवर्तकाः प्रलयकालप्रवर्षिमेघविशेषाः अत एव पुष्कलावर्तकसंज्ञया च व्यवह्रियन्ते । तैः सह वडवानलोऽपि वसति । तस्मात् सिन्धोः समुद्रस्य वपुः शरीरं विततं केशवावतारत्वेन विस्तृतमूर्जितम् वडवानलाश्रयत्वेऽप्यतिवर्धिष्णु भरसहं पर्वतभरणेन भरोद्वाहनक्षमं च । अहो अप्रमेयानुभावत्वेनात्यन्ताश्चर्यमित्यर्थः । अत्र लक्षयोजनपरिच्छिन्नस्य समुद्रस्यापरिच्छिन्नकेशवाद्यवतारत्वकथनादधिकप्रभेदोऽलङ्कारः । "आधाराधेययोरानुरूप्याभावोऽधिको मतः ।" इति लक्षणात् । पृथ्वीवृत्तम् ॥ ७७ ॥

समुद्रमें एक ओर शेषशायी विष्णु सोते हैं, एक ओर विष्णुके शत्रु राक्षसोंका कुल रहता है, एक ओर शरणार्थी पर्वतोंके समूह पडे हैं और एक ओर वडवानल प्रलयकी अग्निसहित जलको औटाय रहा है परन्तु इन सबोंसे वह कुछ नहीं घबराता है इससे यह जान पडा कि समुद्रका शरीर बडा विशाल बलवान् और भार सहनेवाला है भाव यह कि, सत्पुरुषभी समुद्रवत् होते हैं ॥ ७७ ॥

अथ परहिताचरणपराकाष्ठया द्वयोरेव जन्म सफलं न त्वन्येषामित्याह—

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्वि चक्रम् ।
सञ्जातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥७८॥

जात इति ॥ किं बहुना अवतारेष्वपीत्यध्याहार्यम् । एकः केवलः स कूर्मः आदिकूर्मावतार एव जातः जन्मलाभवानित्यर्थः । कुतः येन कूर्मेण पृथुमहान् यो भुवनभरश्चतुर्दशविष्टपभारस्तस्मै तद्वहनार्थमित्यर्थः । पृथु विपुलमिति पृथक्पदं वा । पृष्ठं निजकर्परतलमर्पितं दत्तम् । निरन्तरमधःप्रदेशस्थित्या दुर्भरभुवनभारेण जनितक्लेशः सोढ इत्यर्थः । तथा ध्रुवस्योत्तानपादेः जन्म श्लाघ्यं सकललोकप्रशस्तम् । कुतः ? यत्र यस्मिन् ध्रुवे तेजस्विनां ग्रहनक्षत्रादीनां चक्रं शिशुमाराख्यं ग्रहनक्षत्रमण्डलं नियमितं नियुक्तं सद्भ्रमति पर्यावर्तते । 'तत्र भवान् भगवदनुग्रहवशात् सकललोकोन्नतमेरुशिखरशिखामणिर्ध्रुवं स्वायत्तत्वेन तेजस्विचक्रं प्रवर्तयति' इति श्रीविष्णुपुराणभागवतादिकथानुसन्धेया । ततः किमत आह । परहितकरणं परोपकाराचरणे विषये व्यर्थो निरर्थः असमर्थः अप्रयोजक इति यावत् । यः पक्षः सञ्जातो येषां ते सञ्जातव्यर्थपक्षाः न तु सञ्जातपरहितकरणसमर्थपक्षा इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः । अपरे उक्तोभयादन्ये जन्तवः प्राणिनः । नैच्योद्भावनार्थकोऽयं जन्तुशब्दप्रयोगः । उपरिष्टान्न ध्रुववदुपरिभागेऽपि वर्तमाना न भवन्तीत्यर्थः । अधश्च न कूर्मवदधस्ताद्वा वर्तमाना न भवन्तीत्यर्थः । किन्तु उदुम्बरः जन्तुफलाख्यवृक्षविशेषः तस्य फलमुदुम्बरम् । "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः" इत्यमरः । "फले लुक्" इति लुक् । ब्रह्माण्डमुदुंबरं तस्यान्तः अन्तराले ।

अव्ययमेतत् । ये मशकास्तैस्तुल्यं तद्वत् । " तेन तुल्यं क्रिया चेद्वतिः " इति वतिप्रत्ययः । जाता उत्पन्नाश्च ते नष्टाश्च जातनष्टा भवन्तीति शेषः । स्नातानुलिप्तवत्पूर्वकालसमासः । यतो न तैः किमपि साधितमतो मशकवन्निष्फलजन्मभिः किमन्यैरिति भावः । रूपकोपमेययोः संकरः । स्रग्धरावृत्तम् ॥ ७८ ॥

एक तो उस कूर्मका जन्म लाभवान् हुआ कि जिसने अपनी पीठ चतुर्दश भुवनोंके भारके धारणके लिये अर्पण की है और एक औत्तानपादि ध्रुवका जन्म स्तुत्य हुआ कि जिसमें यह ग्रहनक्षत्रादियोंका शिशुमाराख्य तेजस्वी चक्र नियुक्त हुआ घूमता है। इन दोनोंसे अतिरिक्त दूसरे जन्तु जो कि परहित करनेमें असमर्थ पक्षवाले और न ध्रुवके समान ऊपर न कूर्मके समान नीचे किन्तु बीचमें ब्रह्मांडरूप उदुंबर फलके बीचमें रहनेवाले मशकोंके समान कितने जन्म लेकर नष्ट नहीं हुए हैं ॥ ७८ ॥

अथ विधेयलोकं संबोधयन् सदाचारं शिक्षयति--

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां चेष्टितम् ॥७९॥

तृष्णामिति॥ हे जनेत्यत्राध्याहार्यम् । सर्वत्रापि मध्यमपुरुषप्रयोगसंभवात् । अलभ्येषु परधनेषु लाभाभिलाषः तृष्णा तां छिंधि वैराग्यशस्त्रेण विदारय।अन्यथा अनेकाशापाशनिबद्धत्वेन क्लेशभागित्वं स्यादिति भावः । परिभवादिपूर्वकमानेषु क्रोधप्रतिबन्धः क्षमा तां भज सेवस्व । अन्यथा उग्रभावेन कार्यहानिः स्यादिति भावः । मदं विद्याजनितदर्पं जहि विज्ञानेन विनाशय । अन्यथा विवेकशून्यतया अकार्यकरणप्रवृत्तौ अनर्थप्राप्तिः स्यादिति भावः । पापे पापकर्माचरणे रतिं प्रीतिं मा कृथाः अज्ञानेन मा कार्षीः। किन्तु "धर्मं चर" इत्याद्युपदेशवचनेन सत्कर्माचरण एव रतिं कुर्वित्यर्थः।अन्यथा निरयपातः स्यादिति भावः। करोतेर्लुङ् थास् । " न माङ्योगे " इत्यडागमप्रतिषेधः । सत्यं सूनृतं ब्रूहि "सत्यं

---

१ स्यात् गुम.नू. । २ लक्षणम् इति च पाठान्तरम्।

वद'' इति वचनेन यथार्थमेव वचनं वदेत्यर्थः । अन्यथा "नानृतात्पातकं परम्" इति न्यायाद्विवेकित्वप्रसक्तिः स्यादिति भावः । साधुपदवीं सन्मार्गमनुयाहि धर्मशास्त्रानुरोधेनानुसर । अन्यथोत्पथप्रतिपन्नत्वे वचनीयतादिदोषापत्तिः स्यादिति भावः । विद्वज्जनोपदेशेन कृतार्थीकरणशीलं पण्डितमण्डलं सेवस्व । " यस्तु पर्यटते देशान् यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवांभसि ॥ " इति वचनात् । बुद्धिवैशद्यार्थं शुश्रूषस्व अन्यथा बुद्ध्यवैशद्याशिक्षिताद्यभियोगः स्यादिति भावः । मान्यान् पूज्यान् मानय यथार्हं पूजय । अन्यथा " समासमाभ्यां विषमसमे पूजातः " इति गौतमसूत्रात् । " अपूज्या यत्र पूज्यन्ते पूज्याश्चैवावमानिताः । अयशो महदाप्नोति धनाद्धर्माच्च हीयते ॥" इत्यादिस्मरणाच्च । कीर्तिसुकृतधनहीयमानत्वरूपा श्रेयःप्राप्तिः स्यादिति भावः । किं बहुना । विद्विषः शत्रूनपि किमुतान्यान् अनुनय । " समः शत्रौ च मित्रे च " इति भगवद्वचनात् प्रसादय । अन्यथा रन्ध्रेषु पातयिष्यन्तीति भावः । प्रश्रयं गुर्वाचार्यादिषु नम्रत्वं विनयमिति यावत् प्रख्यापय "गुरौ नम्रता" इत्युक्तत्वात्प्रकटय । अन्यथा दुर्विनीतत्वापवादप्रसङ्गः स्यादिति भावः । कीर्तिं पालय जन्मसाफल्यार्थं कीर्तिनिर्वहणे प्रयत्नं कुर्वित्यर्थः । अन्यथा ' क्षितितले किं जन्म कीर्तिं विना" इति वचनाज्जीवन्मृतत्वापवादः स्यादिति भावः । दुःखिते सञ्जातदुःखेषु भूतेष्वित्यर्थः । तारकादित्वादितच् । जातावेकवचनम् । दयां दुःखप्रहरणेच्छालक्षणां कुरु । "दुःखिषु करुणा" इति शास्त्रानुरोधाद्विधेहि । अन्यथा चित्तशुद्ध्यसंभवादिति भावः । कुतः एतत् सर्वं तृष्णाच्छेदादिकम् । सतां सज्जनानां चेष्टितं व्यापारः । यदि सौजन्ययशःकामी तदैवं प्रवर्तस्व । अन्यथा पुरुषार्थलाभासम्भवादिति भावः ॥ ७९ ॥

तृष्णाको छेद, क्षमाको सेव, मदको त्याग, पापमें प्रीति मत करो, सत्य बोलो, साधुजनोंकी मर्यादा ( मार्ग ) को प्राप्त हो, पंडितोंका सेवन करो, मान्यजनोंको मानो, शत्रुओंको भी प्रसन्न रक्खो, अपने गुणोंको प्रसिद्ध करो, अपनी कीर्तिका पालन करो और दुःखियोंपर दया रक्खो यही सत्पुरुषोंका लक्षण है ॥ ७९ ॥

ईदृशा विरला एवेति निगमयति–

मनसि वचसि काये पुण्यपीयूषपूर्णा-<br>
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।

परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥८०॥

मनसीति ॥ मनसि वचसि काये मनोवाक्कायेषु पुण्यमेव पीयूषममृतं तेन पूर्णाः करणत्रितयेनापि सत्कर्माचरणतत्परा इत्यर्थः । "पीयूषममृतं सुधा" इत्यमरः । त्रयाणां भुवनानां समाहारस्त्रिभुवनम् । लक्षणया त्रिभुवनस्थजनानित्यर्थः । "तद्धितार्थ०" इत्यादिना समासः । पात्रादित्वान्न स्त्रीत्वम् । उपकारश्रेणिभिर्हिताचरणपरम्पराभिः प्रीणयन्तः सन्तोषयन्तः । "प्रीञ् प्रीणने" इति धातोश्चुरादिकाण्णिचि शतृप्रत्ययः । "धूञ्प्रीञोर्नुग्वक्तव्यः" इति नुगागमः । परेषां गुणपरमाणूनत्यल्पगुणानपीत्यर्थः । यतोऽणुर्नास्ति स परमाणुरित्याहुः । पर्वतीकृत्य महत्तरान् कृत्वा । अभूततद्भावे च्विः । "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञायां "कुगतिप्रादयः" इति समासः । ख्यापयन्तः निरन्तरं प्रशंसन्तः । तथा निजहृदि स्वान्तःकरण एव विकसन्तः सन्तुष्यन्तः सन्तः सत्पुरुषाः कियन्तः कतिपये विरला एवेत्यर्थः । सन्ति न तु सान्द्राः एतादृशगुणसम्पत्तेरसाधारण्यादिति भावः । "निजहृदि विकसन्तः सन्ति सन्तः कियन्तः" इत्येव पाठः । तथा चोक्तम् "सौजन्यामृतसिन्धवः" इति । मालिनीवृत्तम् ॥ ८० ॥

मन, वाणी और शरीरमें पुण्यरूपी अमृतसे भरे हुए त्रिभुवनको उपकारोंसे तृप्त करनेवाले और परमाणु सरीखे अल्प पराये गुणोंको पर्वतसा बढाके,अपने हृदयमें प्रसन्न होनेवाले कोई विरले ही सन्त हैं॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ८१ ॥

किं तेनेति ॥ किं तेन हेमगिरिणा मेरुणा रजताद्रिणा हिमालयेन वा यतोऽस्याश्रितास्तरवस्तरवः एव भवन्ति न त्वात्मसदृशाः सुवर्णरूप्यरूपाः कृताः । अतस्ताभ्यां किं प्रयोजनम् ? तस्मान्मलयाद्रिं बहु मन्यामहे यतोऽस्याश्रिताः कङ्कोलनिम्बकुटजा वृक्षा अपि चन्दनाः स्युश्चन्दना एव भवन्ति इति परोपकारः॥

उस सोनेके सुमेरुपर्वतसे हमें क्या और चांदीके कैलाससे भी क्या कि, जिसके आश्रित वृक्ष सदा जैसेके तैसेही बने रहे, हम तो मलयाचलको ही श्रेष्ठ मानते हैं कि, जहां कंकोल, नीम और कुटजादि तीतेभी सब वृक्ष चन्दन होजाते हैं ॥ ८१ ॥

रत्नैर्महार्ब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥८२

रत्नैरिति ॥ देवा अमराः महाब्धेः क्षीरार्णवस्य सम्बन्धिभिः रत्नैः कौस्तुभादिमणिभिः । " रत्नं श्रेष्ठे मणावपि " इति विश्वः । यद्वा रत्नैः " जातौ जातौ च यच्छ्रेष्ठं तद्रत्नमभिधीयते " इति वचनात् ऐरावतोच्चैःश्रवःकल्पवृक्षादिश्रेष्ठजातीयवस्तुभिः हेतुभिः न तुतुषुस्तुष्टिं न प्रापुः । मथनसमय इति शेषः । तथा बिभ्यत्यस्मादिति भीमम् । " भीमादयोऽपादाने " इत्यपादानार्थे भियो मप्रत्ययः औणादिकः । तथाभूतं यद्विषं कालकूटाख्यं तेन हेतुना तस्मादित्यर्थः । भीतिं न भेजिरे न प्रापुरिति धैर्यातिशयोक्तिः । विषेणेत्यत्र " भीत्रार्थानां भयहेतुः " इत्यपादाने पञ्चम्या भाव्यम्, तथापि हेतुत्वमात्रविवक्षयायं निर्देश इति मन्तव्यम् । किंतु सुधाममृतं विना । " पृथग्विना० " इत्यादिना द्वितीया । विराममवसानं न प्रययुः । मथनादिति शेषः । सुधोत्पत्तिं विना न विरता इत्यर्थः । अनेन शीलसम्पत्तिरुक्ता । तथा हि धीरा मनस्विनः निश्चितार्थात्प्रतिज्ञातार्थान्न विरमन्ति विरामं न प्राप्नुवन्ति किंत्वाफलोदयं प्रयतन्त एवेत्यर्थः । अतो धैर्यशीलसम्पन्नानां देवानामपीदं युक्तमेवेति भावः । " जुगुप्साविराम० " इत्यादिना पञ्चमी । " व्याङ्परिभ्यो रमः " इति परस्मैपदम् । अर्थान्तरन्यासोऽलंकारः । वृत्तमुपजातिः ॥ ८२ ॥

अनमोल रत्न पाकर देवताओंने सन्तुष्ट हो समुद्रका मथना न छोडा और भयानक विषसेभी भयभीत होकर अपने उद्योगसे न चूके विना अमृत निकले विश्राम न लिया, इससे यह सिद्ध हुआ कि, धीर लोग अपने निश्चित अर्थको विना सिद्ध किये बीचहीमें छोडके नहीं बैठे रहते ॥ ८२ ॥

---

१ महार्हैः । इति पाठान्तरम् ।

उक्तमेवार्थं नीचादियुक्तिकथनद्वारा द्रढयति—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।
विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ ८३ ॥

प्रारभ्यत इति ॥ नीचैरधमैः विघ्नेभ्योऽन्तरायेभ्यो यद्भयं तेन हेतुना न प्रारभ्यते खलु नोपक्रम्यते। कार्यमिति शेषः।" विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः। मध्याः मध्यमास्तु कार्यं प्रारभ्योपक्रम्य विघ्नैर्निहता विह्वलीकृताः सन्तः विरमन्ति विरता भवन्तीत्यर्थः। उत्तमा उत्कृष्टाः गुणा धैर्यशीलादयो येषां ते तथोक्ताः पुरुषश्रेष्ठास्तु विघ्नैर्मुहुर्मुहुः पौनःपुन्येन प्रतिहन्यमाना वंभज्यमानाः अपि प्रारब्धमुपाक्रान्तं कर्म न परित्यजन्ति न विसृजन्ति। अतः कालकूटवडवानलादिविघ्नाद्युपहतत्वेपि उक्तगुणसंपन्नतया देवानां सुधोत्पत्तिपर्यन्तं मथनं युक्तमिति श्लोकद्वयस्यापि तात्पर्यम्। अत्र प्रकरणे कुत्रचिद्धैर्यस्य कुत्रचिद्भयस्यापि प्राधान्यनिर्देश इति द्रष्टव्यम्। "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु।" इत्युक्तलक्षणं धैर्यम्। शीलं तु नियतकुलोचितसत्त्वभाव इति विवेकः "शीलं स्वभावे सद्वृत्ते" इत्यभिधानात्। वसन्ततिलकावृत्तम् ॥ ८३ ॥

विघ्नके भयसे नीचजन कार्यका आरंभही नहीं करते और मध्यमजन आरंभ करके विघ्नको देख कार्यको छोड बैठते हैं और उत्तमजन वारंवार विघ्न होनेसेभी कार्यका आरंभ करके परित्याग नहीं करते अर्थात् उसको पूराही करके छोडते हैं ॥ ८३ ॥

अथोक्तगुणसंपन्नस्य कृच्छ्राकृच्छ्रयोर्दुःखसुखपरिगणनया कार्यसाधनत्वमाह—

क्वचित्पृथ्वीशय्यः क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः।
क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८४ ॥

१ विहताः। २ पुनः पुनरपि। ३ प्रारब्धं चोत्तमजनाः। ४ भूमौ शय्या। ५ शयनं इति च पाठौ।

कचिदिति ॥ कचित्कुत्रचिद्देशे काले वा पृथिवी शय्या यस्य स तथोक्तः कठिनतरस्थण्डिलशयनोऽपीत्यर्थः । कचिच्च पर्यङ्के हंसतूलिकातल्पे शयनं स्वापो यस्य स तथोक्तः । मृदुलशय्योऽपीत्यर्थः । " शयनं मंचपर्यंकपल्यङ्काः खट्वया समाः । " " स्यान्निद्रा शयनं स्वापः " इत्युभयत्राप्यमरः । कचिच्छाकः एवाहारो यस्य नीरसाहारोऽपीत्यर्थः । कचिच्च शाल्योदने शाल्यन्ने रुचिः स्वादो यस्य स तथोक्तः षड्रसोपेतमिष्टान्नभोजनसंतुष्टोऽपीत्यर्थः । कचित् कन्थां जीर्णवस्त्रशकलनिर्मिताच्छादनं धारयतीति कन्थाधार्यपि । कचिच्च दिव्यांबरधरः कनत्कनकपीतांबरधरोऽपि कार्यार्थी कार्यनिष्पत्त्यभिलाषी । अर्थः अभिलाषः तद्वानर्थीति विग्रहः । " कृद्वृत्तेस्ताद्धितवृत्तिर्बलीयसी " इति महाभाष्ये मनस्वी महामनाः धीरः । " प्रशंसायामिनिः " । पृथ्वीशय्यादिना दुःखं गणयति । पर्यङ्कशयनादिना सुखं च न गणयति । किंतु सुखदुःखयोः समानावस्थयैव कार्यसाधनतत्परो भवतीत्यर्थः ॥ ८४ ॥

कभी खाली भूमिपर सो रहते, कभी अच्छे पलंगपर शयन करते कभी साग पात खाके रह जाते, कभी अच्छे चावलादि पदार्थोंका भोजन करते, कभी गुदडी ओढके दिन बिताते, कभी दिव्यवस्त्र धारण करते हैं । मनस्वी और कार्यार्थी पुरुष सुखदुःख दोनोंको नहीं गिनते ॥ ८४ ॥

अथ धीराः लोकनिंदास्तुतिप्राप्ता अपि न्यायमार्गान्न भ्रश्यन्तीत्याह—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८५ ॥

निन्दन्त्विति ॥ नीतिनिपुणा नयविशारदा निदन्तु कथञ्चिद्दूषयन्तु वा । यदि अथवा स्तुवन्तु भूषयन्तु वा । लक्ष्मीः सम्पत् समाविशतु प्राप्नोतु वा । उत यथेष्टं निरर्गलम् गच्छतु वा । अद्यैवेदानीमेव मरणं निधनमस्तु वा । उत युगान्तरे कल्पांतरे वास्तु तथापि धीरा धैर्यशालिनः न्याय्यान्न्यायादनपेतात् पथो मार्गात् पदमेकपादविन्यासमात्रमपि न प्रविचलन्ति न भ्रश्यन्ति तेषां न्यायमार्गापरित्याग एव परमार्थो न निन्दास्तुत्यादिरिति भावः ॥ ८५ ॥

नीतिजाननेवाले चाहे निन्दा करें चाहे स्तुति और लक्ष्मी चाहे घरमें बहुतसी आवे, चाहे चली जाय, प्राण चाहे अभी जाय चाहे कल्पांतमें परन्तु धीर लोग न्यायका मार्ग छोडकर एक पगभी उससे बाहिर नहीं चलते ॥ ८९ ॥

ननु को धीरः स वा किं साधयतीत्याशङ्क्याह–

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति[1] कोपकृशानुतापः ।
तर्षन्ति[2] भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ ८६ ॥

कान्तेति ॥ यस्य चित्तं कांताकटाक्षाः । "यद्गतागतविश्रांतिवैचित्र्येण निवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥" इति भावप्रकाशोक्तलक्षणलक्षितकामिन्यपाङ्गालोकनानि त एव विशिखा वाणा न लुनन्ति न भिंदन्ति सम्मोहयन्तीति यावत् । तथा कोपकृशानुतापः क्रोधाग्निसंतापश्च न निर्दहति न व्याकुलयति । तथा भूरयो बलवत्तरा विषयाः शब्दादीन्द्रियार्थश्च लोभः परस्वापहरणे प्रयत्नः एतेन कामादयोऽप्युपलक्ष्यंते । तथा च लोभा एव पाशाः रज्जवश्च । बन्धनहेतुत्वात्तेषां पाशत्वारोपणम् । न तर्पंति तृष्णायुक्तं न कुर्वन्ति । कर्पंतीति पाठे न स्वायत्तीकुर्वन्तीत्यर्थः । स धीरः कृत्स्नमशेषं लोकत्रयं स्वर्गादिलोकत्रितयमपि जयत्यात्माधीनं करोतीत्यर्थः । तस्य न किंचिदप्यसाध्यमित्यर्थः ॥ ८६ ॥

स्त्रियोंके कटाक्षरूपी बाण जिसके चित्तको नहीं वेधते और क्रोधरूपी अग्निकी आंच जिसके चित्तको नहीं जलाती और इन्द्रियोंके विषय लोभफांसीमें डालकर जिसके चित्तको तृष्णायुक्त नहीं करते वही धीर पुरुष तीनों लोकको जीतता है ॥ ८६ ॥

धैर्यगुणन्यक्कारः कथञ्चिदपि न युज्यते इति सदृष्टान्तमाह–

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।

---

१ दहति । २ कर्षंति इति च पाठान्तरम् ।

अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा यान्ति कदाचिदेव ॥ ८७ ॥

कदर्थितस्येति ॥ कुत्सितोऽर्थः कदर्थः । "कोः कत्तत्पुरुषेऽचि" इति कुशब्दस्य कदादेशः । कदर्थीकृतः कदर्थितः । तस्य नीचैः कृतस्यापि सतः धैर्येण वृत्तिर्वर्तनं यस्य तस्य सम्बन्धि धैर्यमेव गुणः प्रमार्ष्टुमधः कर्तुं न शक्यते । तत्र दृष्टान्तः अधोमुखस्य कृतस्य अवाङ्मुखीकृतस्यापि सतो वह्नेः शिखा ज्वालाः कदाचिदेव कदाचिदप्यधो न यान्ति । किं तूर्ध्वमेव प्रचरन्तीत्यर्थः । तद्वद्धीरस्यापि धैर्यगुण इति विवेकः ॥ ८७ ॥

क्लेशित जन यदि धैर्यवृत्तिवाला होय तो उसकी धैर्यवृत्तिको नहीं मिटा सकता । जैसे—प्रज्वलित अग्निको उलट दे तोभी ज्वाला ऊपरहीको रहती है नीचे नहीं जाती ॥ ८७ ॥

एक एव शूरः संपूर्ण जगत् वशीकरोतीति सूर्यदृष्टान्तेन स्पष्टयति—

एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।
क्रियते भास्करेणैव परिस्फुरिततेजसा ॥ ८८ ॥

एकेनेति ॥ यथा परित आसमन्तात् स्फुरितं दीप्तिमत्तेजो यस्य तेन भास्करेण दिवाकरेणैव महीतलं पृथ्वीतलं पादैः किरणैराक्रान्तं व्याप्तं क्रियते तथा एकेनापि हि शूरेण महीतलं भूतलं पादाभ्यामाक्रान्तं व्याप्तं क्रियते । अनुष्टुब् वृत्तम् ॥ ८८ ॥

एकही अकेला शूर सारी पृथ्वीको पांवतलें दबाकर वश कर लेता है । जैसे अकेला तेजस्वी सूर्य सारे जगत्को प्रकाशित करता है ८८ ॥

मरणोद्योगो वा वरं न तु शीलविलय इत्याह—

वरं शृङ्गोत्सङ्गाद्गुरुशिखरिणः क्वापि विषमे
पतित्वाऽयं कायः कठिनदृषदन्ते विगलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीक्ष्णदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ८९ ॥

वरमिति ॥ अयं कायो देहः गुरुशिखरिणोऽत्युन्नतपर्वतस्य शृङ्गोत्सङ्गाच्छृङ्गोपरिभागात् क्वापि कस्मिंश्चिद्विषमे विकटे कठिनदृषदन्ते कर्कशपाषाणांतराले

पतित्वा विगलितः शकलितश्चेद्वरं मनाक्प्रियम् । तथा हस्ततीक्ष्णदशने विषानलोग्रदंष्ट्रे फणिपतेः मुखे वक्त्रे न्यस्तस्त्यक्तश्चेद्वरं मनाक्प्रियम् । वह्नौ प्रज्वलिते अग्नौ पातः शरीरविनिपातश्चेद्वरं मनाक्प्रियम्। तदपि तथापि शीलविलयः शीलं नियतकुलोचितसत्स्वभावस्तस्य विलयो नाशः कृतश्चेन्न वरं न मनाक्प्रियं भवतीत्यर्थः । प्राणप्रयासेऽपि शीलं न त्याज्यमिति तात्पर्यम् । "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये " इत्यमरः ॥ ८९ ॥

यह देह कहीं विषम जगहमें ऊंचे पर्वतके शिखरपरसे कठिन शिलाः पर गिरके नष्ट होवे तोभी अच्छा है, पैने दांतवाले सांपके मुँहमें हाथ डाला जावे तोभी अच्छा है, कहीं अग्निमें इस शरीरका पतन हो तोभी अच्छा है परंतु किसी समयमेंभी शीलका नाश होना अच्छा नहीं ८९

नन्वेवं शीलस्यात्यन्तावश्यकत्वमुक्तम् तत्तद्भावे को लाभ इत्याशंकायामाह—

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतरं शीलं समुन्मीलति ॥ ९० ॥

वह्निरिति ॥ तस्य पुंसः वह्निर्दाहकोऽपीति भावः । जलायते जलमिवाचरति तद्वच्छीतलो भवतीत्यर्थः । " कर्तुः क्यङ् सलोपश्च " इति क्यङ् " अकृत्सार्वधातुकयोः " इति दीर्घः । एवं सर्वत्र प्रयोज्यम् । जलधिर्दुस्तरोऽपीति भावः । कुल्यायते अल्पनदीवाचरति । तस्येति सर्वत्रान्वयोऽवगन्तव्यः । तत्क्षणात्तस्मिन्नेव क्षणे न तु विलम्बेनेत्यर्थः । मेरुः स्वल्पशिलायते अल्पदृषदिवाचरति । मृगपतिः सिंहः हिंस्रोऽपीति भावः । सद्यः कुरङ्गायते हरिण इवाचरति । व्यालः सर्पः विषरोपभीषणोऽपीति भावः । माल्यगुणायते पुष्पस्रगिवाचरति । विषमेव रसो द्रवः प्राणप्रयासहेतुरिति भावः । पीयूषवर्षायते अमृतवृष्टिरिवाचरति । कस्येत्याकांक्षायामाह—यस्य पुंसोऽङ्गेऽखिललोकानामशेषजनानां वल्लभतरमत्यन्तमनोहरं शीलं सत्स्वभावः समुन्मीलति समुल्लसति तस्येति सम्बन्धः । शीलसम्पन्नस्य दुःखहेतवोऽपि सुखहेतवोऽपि सुखहेतव एव भवन्ति । अयमेव परमलाभ इति भावः । अत्र कृत्यर्थदीपम्यप्रतीतेरुपमाभेदः।

१ सम इति पाठान्तरम् ।

" इवादिलोपे द्विविधे णमुलि क्यचि चिण्यपि । तथा वाक्ये समासे च स... धैषा प्रकीर्तिता ॥ " एषा उपमेत्यर्थः ॥ ९० ॥

अग्नि उस पुरुषको जलके समान जान पडता है, समुद्र स्वल्प नदीसा उसको तत्काल दीख पडता है, मेरुपर्वत स्वल्प शिलाके तुल्य बूझ पडता है, सिंह शीघ्रही उसके आगे हिरन बन जाता है, सर्प उसके हेतु फूलकी मालासा बन जाता है और विषरस उस पुरुषको अमृतकी वृष्टिके समान हो जाता है । जिस पुरुषके अंगमें समस्त जगत्का मोहनेवाला शील प्रकाशमान है ॥ ९० ॥

अथैषां कदापि सन्तापो न प्रवर्तत इत्याह—

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न विश्लथेषु लोकेषु ॥९१॥

छिन्न इति ॥ तरुः छिन्नः सन्नपि पुना रोहत्युद्गच्छति । चन्द्रः क्षीणः कृष्णपक्षे दिनक्रमेण कृशः सन्नपि पुनरुपचीयते प्रवर्धते । इत्येवं विमृशन्तो मनसि अनुसन्दधानाः सन्तः शीलसम्पन्ना लोकेषु विश्लथेषु विह्वलेषु सत्स्वपि न सन्तप्यन्ते । किन्तु तरुचन्द्रदृष्टान्तेनाभिवृद्धिमाशंसन्त एव सन्तीत्यर्थः ॥ ९१ ॥

छाँटा हुआ वृक्ष फिर बढकर फैल जाता है, चंद्रमा क्षीण होकर फिर बढकर पूर्ण हो जाता है, इससे विचार करनेवाले संत विपत्तिमें संतापको प्राप्त नहीं होते ॥ ९१ ॥

शीलमेवाशेषभूषणमित्याह—

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमः
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं वरं भूषणम् ॥ ९२ ॥

ऐश्वर्यस्येति ॥ ऐश्वर्यस्य स्वाम्यस्य सुजनता विभूषणं न तु दौर्जन्यम् । शौर्यस्य विक्रान्तत्वस्य वाक्संयमो वाङ्नियमो भूषणं न त्वसंबन्धप्रलापित्वम् ।

१ विश्लथा लोके इति । २ परं इति च पाठान्तरम् ।

ज्ञानस्य कर्तव्याकर्तव्यविवेकस्यात्मविषयकस्य वा उपशमो विषयोपरतिः। विभूषणं न तु लोलुपत्वम्। श्रुतस्य शास्त्रस्य विनयो विभूषणं न तु गर्वोद्रिक्तता। वित्तस्य पात्रे व्ययः सत्पात्रे प्रतिपत्तिः विभूषणं न तु विटनटादिषु। तपसश्चान्द्रायणादेरक्रोधः क्रोधराहित्यम्। कचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। विभूषणं न तु कोपशीलत्वम्। प्रभवितुः समर्थस्य क्षमा सहिष्णुत्वं विभूषणं न तूग्रचण्डता। धर्मस्य सत्पात्रदानस्य निर्व्याजता व्याजराहित्यं विभूषणं न तु द्रव्यनाशदुःखम्। तथा सर्वकारणमैश्वर्यादिसमस्तनिदानमिदं पूर्वोपवर्णितमेकमेव शीलम्। सर्वेषामपि सर्वपुंसां वरं सौजन्याद्यपेक्षयाप्युत्कृष्टं भूषणमलंकारः। अतः सर्वथापि शीलमेवाश्रयणीयमिति तात्पर्यम्॥ ९२॥

ऐश्वर्यका भूषण सज्जनता, शूरताका वाक्यसंयम अर्थात् अभिमानके वचन न कहना, ज्ञानका शांति, शास्त्र पढनेका विनय, धनका पात्रको देना, तपस्याका क्रोध न करना, प्रभुताका क्षमा, धर्मका निश्छलता, अन्य सब गुणोंका भूषण और कारण शील है॥ ९२॥

अथ धैर्यशीलयोरपि दैवायत्तत्वात्तन्निरूपणानन्तरं दैवपद्धतिं निरूपयति—

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वारणः।
इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः सङ्गरे
तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथापौरुषम्॥ ९३॥

नेतेति॥ यस्य बलभिदः नेता शिक्षकः हिताहितोपदेशकर्ता बृहतां वाचां पतिर्बृहस्पतिः न तु यःकश्चित्। "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च" इति सुडागमतलोपौ। प्रहरणमायुधं प्रहारसाधनं तु वज्रं वज्रायुधं पर्वतपक्षच्छेदनेऽप्यकुंठितमिति भावः। न तु यत्किञ्चिदयोमयम्। सैनिकाः सुराः न तु दुर्बललौकिकाः दुर्गं गुप्तिस्थानं स्वर्गः स्वर्गलोकः न तु मृत्पाषाणादिनिर्मितम्। अनुग्रहः परिपालनतात्पर्यं हरेः खलु सकललोकाधीश्वरस्य विष्णोः। ननु तस्यावरजभावेनावतीर्णत्वादिति भावः न तु क्षुद्रदेवतायाः। वारणो गजः ऐरावणः न तु यःकश्चित्कलभः। इत्यनेन प्रकारेण स बलभिदिन्द्रः आश्चर्य-

---

१ दुर्गमनिग्रहः। २ किल। ३ ऐरावतः। ४ ऐश्वर्य। ५ बलिभिर्भग्नः। तद्युक्तं वरमेव दैवशरणं इति च पाठान्तरम्।

चलान्वितोऽसाधारणत्वादद्भुतकरशक्तिसहितोऽपि सङ्गरे रणे परैर्दानवैर्भ विदारितः । तत्तस्मात्कारणात् व्यक्तं स्फुटं यथा तथा दैवमेव शरणं रक्षकं वः पुरुषस्य कर्म पौरुषम् । "हायनांतयुवादिभ्योऽण्" इति युवादित्वादण् । "पौ पुरुषस्योक्तं भावे कर्मणि तेजसि । " इति विश्वः । पौरुषं पुरुषकारं धिग् धि पौनःपुन्येन निन्द्यामित्यर्थः । वृथा व्यर्थमप्रयोजकत्वादिति भावः । धिग्धिगि "नित्यवीप्सयोः" इत्याभीक्ष्ण्ये द्विरुक्तिः। तद्योगात्पौरुषमिति द्वितीया । अ पौरुषस्याकिंचित्करत्वमेवाश्रयणीयमिति भावः । "उद्योगिनं पुरुषसिंहमुपै लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या य कृते यदि न सिध्यति कोऽत्र दोषः॥"इत्यादि वचनस्य अयमेव दत्तजलांजलिरि वेदितव्यम । अत्र साभिप्रायविशेषणत्वात्परिकरालंकारः। तदुक्तम्--"साभि यविशेषणं परिकरः" इति ॥ ९३ ॥

बृहस्पति ऐसे मंत्री, वज्र ऐसा शस्त्र, देवताओंकी सेना ऐ सेना, स्वर्ग ऐसा गढ, ऐरावतसा चढनेको हाथी और तिस विष्णुका पूर्ण अनुग्रह तो भी ऐसी आश्चर्यकी सामग्रीवाला इन्द्र श ओंसे संग्राममें हारताही रहा इससे यह सिद्ध भया कि, दैवही मुख शरण योग्य है, पुरुषार्थ वृथा है और उसको धिक्कार है ॥ ९३ ॥

अथ बंधमोक्षयोर्हानिवृद्ध्योश्चापि दैवमेव कारणमित्याह—

भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाऽऽखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम्॥९४

भग्नाशस्येति ॥ आखुर्मूषकः कर्ता नक्तं रात्रौ विवरं बिलं करंडस्येति भावः । कृत्वा भग्नाशस्य क्षुभत्वाद्भग्नमनोरथस्य करंडे पिण्डिकायाम् । पिंडि पुंजीकृता तनुर्यस्य तथोक्तस्य विहारप्रसारशून्यतयातिकृच्छ्रदशामापन्नस्येत्यर्थः क्षुधा बुभुक्षात्यसनेन म्लानेंद्रियस्य विनष्टेंद्रियपाटवस्य भोगिनः सर्पस्य मुखे स्वयमेव दैववशान्निपतितः। ततोऽसौ भोगी तत्पिशितेन मूषकमांसेन तृप्तः सत्

1 लोकाः पश्यत इति पाठान्तरम् ।

तेनैव पथा विवरेण सत्वरं शीघ्रं यातः बहिर्निर्गत्य पलायितः हे जना इति शेषः । स्वस्थाः स्थिरचित्ताः संतः तिष्ठत । कुतः वृद्धौ क्षये च दैवमेव परमुत्कृष्टं कारणं हि न त्वन्यदतो मूषकभोगिदृष्टान्तेन स्वस्थैर्भाव्यं न तु वृथापौरुषैरिति भावः ॥ ९४ ॥

जिसे जीवनकी आशा नहीं ऐसा एक सर्प पिटारेमें बन्द था और बन्द रहनेसे उसका शरीर पीडित था और क्षुधासे उसकी सब इंद्रियां शिथिल हो रही थीं । मूषक रातको उस पिटारेमें छेद करके आपसे उस सर्पके मुखमें गिरा वह उस मूसेके मांससे तृप्त होकर उसी छेदके रस्ते निकल गया, सो हे लोगो ! स्वस्थ रहो ऐसेही मनुष्योंके क्षय और वृद्धिमें दैवही कारण है ॥ ९४ ॥

साधुवृत्तीनां विपत्तयः अस्थायिन्यो भवन्तीति कन्दुकदृष्टान्तेन दर्शयति—

पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ९५ ॥

पातित इति ॥ यथा करस्य हस्तस्याघातैस्ताडनैः कन्दुकः पातितोऽपि पुनरूर्ध्वमुत्पतत्येव । तथा प्रायो बाहुल्येन साधुवृत्तानां विपत्तयो अस्थायिन्यो भवन्ति । अनुष्टुव्वृत्तम् ॥ ९५ ॥

हाथोंकी ताडनासे गिरायाभी गेंद ऊपरकोही उछलता है इससे यह प्रगट हुआ कि साधु आचरणवालोंकी विपत्ति प्रायः स्थिर नहीं होती॥

इदानीमुद्यमप्राधान्यं वर्णयति—

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
नास्त्युद्यमसमो बन्धुर्यं कृत्वा नावसीदति ॥ ९६ ॥

आलस्यमिति ॥ आलस्यमुद्योगराहित्यं मनुष्याणां शरीरे तिष्ठति शरीरस्थो महान् रिपुः शत्रुः । हि इति निश्चयेनास्ति । उद्यमेनोद्योगेन समो बन्धुर्न । यमुद्यमं कृत्वा मनुष्यो नावसीदति दारिद्र्यादिदुःखं न प्राप्नोति । उद्यमोऽवश्यं कर्तव्य इति भावः ॥ ९६ ॥

आलस्य मनुष्योंके शरीरमें महाशत्रु है, उद्योग समान दूसरा बन्धु नहीं कि जिसके करनेसे दुःख नहीं आता ॥ ९६ ॥

बुद्धिमता सुविचारपूर्वकमेव कार्यं कर्तव्यमित्याह—

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ९७ ॥

कर्मेति ॥ यद्यपि पुंसां फलं सुखदुःखादिकं कर्मायत्तं कर्माधीनमस्ति । तथा बुद्धिः कर्मानुसारिणी कर्मानुगामिनी अस्ति तथापि सुधिया बुद्धिमता सुविचार्यैव कर्म कुर्वता भाव्यम् ॥ ९७ ॥

यद्यपि पुरुषोंको फल कर्मके अनुसार होता है और बुद्धिभी कर्मके अनुसार हो जाती है तोभी पण्डितोंको विचारहीके काम करना चाहिये।

अथ दैवायतिकतदन्ययोरवस्थामाह—

यथा कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ९८ ॥

यथेति ॥ आर्यो दैवायतिकः पतन्नपि कुतश्चित्कारणान्नीचैर्भवन्नपि कन्दुकपातेन दृष्टान्तेन यथोत्पतत्युच्छ्रयं प्राप्नोति तथा तद्वदेव अनार्यः मृत्पिंडपतनं यथा सार्द्रमृत्कपालमिव " इववद्वायथाशब्दौ " इति दण्ड्याचार्यानुशासनात् पतति निलीनो भवतीत्यर्थः ॥ ९८ ॥

आर्य लोग तो गेंदके समान गिरनेपरभी फिर उन्नतिको प्राप्त होते हैं परन्तु अनार्य लोग एक वार मृत्पिण्डके समान गिर जानेपर फिर उन्नतिको प्राप्त नहीं होते ॥ ९८ ॥

दैवोपहतस्य न कुत्रापि सुखप्राप्तिरित्याह—

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
गच्छंन्[1] देशमनातपं द्रुतगतिस्तालस्य[2] मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र दैवहतकस्[3]तत्रैव यान्त्यापदः ॥ ९९ ॥

खल्वाट इति ॥ खल्वाटः स्वभावलुप्तरोमाशिरस्कः मस्तके निजशिरसि दिवसेश्वरस्य सूर्यस्य किरणैः सन्तापिते सति अनातपमातपशून्यं देशं प्राप्

१ वाञ्छन् । २ विधिवशात्तालस्य । ३ भाग्यरहित इति च पाठान्तरम् ।

द्रुतगतिः शीघ्रगमनः गच्छन् तालस्य तालवृक्षस्य मूलं गतः तालाधस्तात्तिष्ठति । तत्र तालमूलेऽपि पतता वृन्ताद्गलता महाफलेन पृथुलतरफलेन अस्य खल्वाटस्य शिरः स्वशिरः शब्देन पटपटायमानेन सहितं सशब्दं यथा तथा भग्नं विदलितम् । ननु कुत एतदित्याशंक्य दैवप्रातिकूल्यादित्याह । दैवहतको दैवोपहतः दैवानुग्रहशून्य इत्यर्थः । यत्र यस्मिन् देशे गच्छति यं देशमुद्दिश्य गच्छति तत्र तमुद्दिश्यैवापद उपद्रवा अपि प्रायो भूम्ना यान्ति। तदेतन्मशकभयाद्ग्रामं विहाय गच्छतोऽरण्ये व्याघ्रग्रहणमभूदित्यर्थः ॥ ९९ ॥

खल्वाट अर्थात् गंजा मस्तकका पुरुष सूर्यकी किरणसे जलने लगा तब वह छायाकी वांछा करता हुआ दैवसंयोगसे तालके वृक्षके नीचे जा खडा हुआ तहां जाते ही शीघ्र बडा फल ऊपरसे गिरा उसका शिर फूटा तिसका बडा शब्द हुआ इससे यह सिद्ध हुआ कि, अभागा पुरुष जहां जाता है वह विपत्ति भी उसके साथ जाती है ॥ ९९ ॥

अतो दैवमेव बलीय इति मम मतिः प्रवर्तत इत्याह—

गजभुजङ्गविहङ्गमबन्धनं
　　शशिदिवाकरयोर्ग्रहपीडनम् ।
मतिमतां च विलोक्य दरिद्रतां
　　विधिरहो बलवानिति मे मतिः ॥ १०० ॥

गजेति ॥ अयं स्पष्टार्थः । यतोऽत्यंतदुर्ग्रहाणां गजादीनां बन्धनं जगत्प्रकाशयोः सूर्याचन्द्रमसोः राहुग्रहपीडनं मतिमतां प्राज्ञानां दरिद्रतामकिञ्चनत्वं च विलोक्य दृष्ट्वापि अहो आश्चर्यम् । अतः सर्वस्यापि दैवबलीयस्त्वं मन्ये दैवमेव मूलमिति तात्पर्यम् ॥ १०० ॥

चन्द्रमा और सूर्यको भी राहुग्रहसे पीडित देखते हैं, हाथी और सर्प इन दोनोंको बन्धनमें देखते हैं और बुद्धिमानोंको दरिद्री देखते हैं इससे हमारे मतमें विधाता ही बलवान् दीख पडता है ॥ १०० ॥

एवं चेद्विधेरप्यज्ञता स्यादित्याशयेनाह—

सृजति तावदशेषगुणाकरं
　　पुरुषरत्नमलङ्करणं भुवः ।

---

१ भुजंगमयोरपि इति पाठान्तरम् ।

तदपि तत्क्षणभङ्गि करोति चे-
दहह कष्टमपण्डितता विधेः ॥ १०१ ॥

सृजतीति ॥ विधिरशेषगुणाकरं सकलसद्गुणाश्रयं भुवोऽलङ्करणं मण्डनं पुरुषश्रेष्ठं सृजति तावन्निर्माति खलु । ततः किमत आह । तदपि तथापि सृजन्नपीत्यर्थः । तत्पुरुषरत्नं क्षणभङ्गि क्षणमात्रेण भंगुरं नश्वरमित्यर्थः । करोति चेत् विधेरपंडितता मौढ्यमहह कष्टमतिकृच्छ्रमिति विषादातिशयाभिद्योतकमहहेति । करोति चेत्तत्पाण्डित्यमेवेत्यर्थः । तथा तादृक्पुरुषरत्नस्य क्षणभंगित्वेनैव निर्माणात् अपण्डित एव विधिरिति परमरहस्यम् ॥ १०१ ॥

पहिले विधाता पुरुषरत्नको सब गुणोंकी खानि और पृथ्वीका भूषण रचता है परन्तु उसका शरीर क्षणभंगुर करता है यह बडे कष्टकी बात है और इसमें विधाताकी मूर्खता जान पडती है ॥ १०१ ॥

कथंचिदपि दैवयोगो न लंघ्य इत्याह—

अयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातः शम्भुमूर्ध्नोऽवतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ १०२ ॥

अयमिति ॥ अयं परिदृश्यमानश्चन्द्रः अमृतस्य निधानं स्थानमपि ओषधीनां सञ्जीविन्यादीनां नायको नेतापि शतभिषजा नक्षत्रेण शतेन भिषग्भिर्वैद्यैश्चानुयातोऽनुसृतोऽपि किं बहुना शम्भोः सकललोकक्षेमंकरस्य शङ्करस्य मूर्ध्नोऽवतंसः शिरोभूषणमप्येनमुक्तविशेषणविशिष्टं शशाङ्कं राजयक्ष्मा क्षयरोगो न विरहयति न त्यजति खलु। अतो हतविधेर्नष्टदैवस्य परिपाको नियोगः केन वा पुंसा लंघनीयो न केनापीत्यर्थः।हतेति निर्वेदानुसन्धानार्थः । राजयक्ष्मेत्यत्र राज्ञश्चन्द्रस्य यक्ष्मा राजा चासौ यक्ष्मेति वा विग्रहः । यथाह वाग्भटः “ अनेकरोगानुगतो बहुरोगपुरोगमः । राजयक्ष्मा क्षयोऽशेषरोगराडिति च स्मृतः॥”इति ॥१०२॥

यह चन्द्र अमृतका स्थान, औषधियोंका नायक, शतभिषग् ( नक्षत्र या सौ वैद्यों ) से युक्त और शंकरके मस्तकका भूषण है तौभी इसको राजयक्ष्मा नहीं छोडता, इससे निश्चित हुआ कि, दैवके नियोगको कोई भी नहीं मिटा सकता ॥ १०२ ॥

विधिलिखितं मार्जितुं कः समर्थ इति करीरवृक्षादेर्दृष्टान्तेन वर्णयति—

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः १०३

पत्रमिति ॥ करीरविटपे करीरवृक्षे यदा पत्रं न भवति तदा वसन्तस्य दोषः किम् । यद्युलूको दिवाभीतो दिवापि दिवसेऽपि नावलोकते तर्हि सूर्यस्य दूषणं किम् । यदि चातकमुखे धारा जलधारा नैव पतन्ति तर्हि मेघस्य दूषणं किम् । यत् यस्मात् विधिना ब्रह्मणा जन्मकाले ललाटे लिखितं तन्मार्जितुं कः क्षमः समर्थः न कोऽपि । प्रारब्धमेव बलीय इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १०३ ॥

करीरवृक्षमें पत्ते नहीं लगते तो इसमें वसन्तऋतुका क्या दोष है, घूघूपक्षी दिनमें नहीं देखता तो सूर्यका इसमें क्या दोष, और जलकी धारा जो चातकपक्षीके मुखमें नहीं पडती तो इसमें मेघका क्या दोष है इससे यह जाना जाता है कि, विधाताने जो प्रथम ललाटमें लिख दिया है उसे मिटानेको किसका सामर्थ्य है ॥ १०३ ॥

मनोनियन्ताप्ययमेवेति सखायं सम्बोधयति—

प्रियसख विपद्दण्डाघातप्रपातपरम्परा-
परिचयबले चिन्ताचक्रे निधाय विधिः खलः ।
मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवत्
भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ १०४ ॥

प्रियेति ॥ प्रियश्चासौ सखा च प्रियसखस्तस्य सम्बुद्धिः हे प्रियसख "राजाहः सखिभ्यष्टच्" इतिटच्प्रत्ययः । खलः शठोऽयं विधिः प्रगल्भकुलालेन तुल्यं प्रगल्भकुलालवत् प्रौढकुम्भकारः इवेत्यर्थः । "तेन तुल्यं क्रिया चेद्वतिः" इति वतिः । मनो मदीयं चित्तं मृदं मृत्तिकामिव बलात्सामर्थ्यात् पिण्डीकृत्य कपालीकृत्य विपदः आपदः दण्डाघाताः मुद्गरघट्टनानीव

तेषां प्रपातानां च याः परंपराः पौनःपुन्येनावृत्तिस्तस्याः यः परिचयः संस्तवो निबिडावयवपरस्परसन्निवेशश्च स एव बलं धाष्टर्य यस्य तस्मिन् चिन्ताचक्रमिव तस्मिन्निधाय भ्रमयति। अत्र भ्रमणे किं विधास्यति किं करिष्यति वा नो जानीमः। कुलालस्तु घटं करिष्यत्ययं तु किं विधास्यति न जानीम इत्यर्थः॥

हे प्रियसख ! यह दैव धृष्ट कुम्हारकी तरह हमारे मनको मृत्पिंडकी तरह पिंडित करके विपत्तिरूप दंडाघातके प्रपातकी परंपराका परिचय है बल जिसमें ऐसे चिन्तारूपी चक्रमें हठसे धरकर घुमाता है सो हम नहीं जानते हैं कि इस दशाको पहुँचाकरभी यह आगे क्या करेगा॥

एवमापत्परंपराचरणे महद्धैर्यध्वंसो भविष्यतीति न मन्तव्यमिति विधिमुलक्षीकृत्योपालभते—

विरम विरमायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अयि जड विधे कल्पापायेऽप्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ १०५ ॥

विरमेति ॥ अयीतिप्रश्ने। "अयि प्रश्नानुनययोः" इति विश्वः। जडेति मान्द्यो। विधे हे दैवेति संबोधनत्रयम्। अस्माद्दुरध्यवसायतो दुराग्रहात् आयासस्तस्माद्विरम विरम आभीक्ष्ण्येन विरतो भव। "नित्यवीप्सयोः" इत्याभीक्ष्ण्ये द्विरुक्तिः। कोऽसावायास इत्याशङ्कायामाह। विपदि त्वत्कृतापदि महतां महात्मनां धैर्यध्वंसं धीरत्वहासमीक्षितुमीहसे कांक्षसे यत्तस्मादायासादिति संबन्धः। तस्यात्यन्तासम्भावितत्वात्त्वदायासस्यैवावशिष्टत्वादिति भावः। कुतो वा सम्भावितत्वमित्याशंक्य दृष्टान्तमुखेन द्रढयति। कल्पापाये कल्पान्तेऽपि अतिसङ्कटेऽपि किमुतान्यदेति भावः। अपेताः विनष्टाः निजक्रमाः स्वमर्यादा येषां ते तथोक्ताः सन्तः एते कुलशिखरिणो महेन्द्रादिसप्तकुलाचला वा जलराशयः सप्तसमुद्रा वा क्षुद्रा नीचा न खलु किं त्वत्यक्तमर्यादा एव वर्तन्ते। अतः दृष्टान्तेन धीरैर्धैर्यध्वंसनस्यातिदुष्करत्वादायास एवावशिष्टो न तु फललाभ इति भावः। "महेन्द्रो मलयः सह्यः सानुमान् ऋक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥" "लवणेक्षुसुरासर्पिर्दधिक्षीरजलार्णवाः।" इति॥ १०५॥

हे जड विधे ! यदि तू विपत्कालमें महात्माओंके धैर्यके ध्वंसको देखनेकी इच्छा करता होगा तो ऐसा हठसे कष्ट मत कर क्योंकि ये महात्मा कल्पांतमेंभी अपनी मर्यादाको न छोडनेवाले कुलाचलोंके समान हैं, कुछ क्षुद्र समुद्रोंके समान नहीं हैं ॥ १०५ ॥

तथापि दैवमेव शरणमित्याह—

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः १०६

दैवेनेति ॥ प्रभुणा समर्थेन दैवेन जगति लोके यस्य पुंसो यद्वस्तु प्रमाणीकृतं निर्दिष्टं तद्वस्तु तस्योपनमेत्सङ्गच्छेत् । महानाश्रयो मनागीषदपि नैव कारणं न साधनं हि । बहुफलप्राप्ताविति शेषः । तत्र दृष्टान्तः । सर्वाशापरिपूरके सकललोकमनोरथपरिपूरके सकलदिगन्तव्याप्तफलके वा जलधरेऽम्बुवाहे । पचाद्यच् । अहन्यहनि प्रत्यहम् । "अव्ययं विभक्ति०" इत्यादिना यथार्थेऽव्ययीभावः । अतश्च "नपुंसकवदन्यतरस्याम्" इति समासान्तः । वर्षति सत्यपि चातकस्य स्तोकपक्षिणो मुखे चञ्चुपुटे सूक्ष्मा अणव एव तथापि द्वौ वा त्रयो वा द्वित्रा एव । "संख्ययाव्ययासन्ना०" इत्यादिना बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच्प्रत्ययः । पयोबिन्दवो जलकणाः पतन्ति न त्वाश्रयमहत्तया बहुफललाभस्तत्रापि दैवस्यैव नियन्तृत्वादिति भावः । तस्मात्सर्वथा दैवमेव शरणमिति तात्पर्यम् । "स्तोकश्चातकः समाः" इत्यमरः ॥ १०६ ॥

स्वयं इस समर्थ दैवने इस जगत्में जिस पुरुषके लिये जो निर्दिष्ट किया है सो उसको अवश्य प्राप्त होगा, उसके लिये कुछ आश्रय साधन नहीं है। देखो, सबकी आशा पूर्ण करनेवाला यह मेघ सब जगह प्रतिदिन जल बरसाता है परन्तु चातकके मुँहमें उस जलकी दो तीन बूँदेंही गिरती हैं ॥ १०६ ॥

येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।
तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १०७ ॥

येनेति ॥ निशि रात्रौ चन्द्रमा येनैव यावता चाम्बरखण्डेन वस्त्रशकलेन संवीतः आच्छादितो भवतीति शेषः । दिवाह्नि तेनैव तावता चाम्बरखण्डेन भानुः सूर्यः संवीतो भवति । अत एतयोश्चन्द्रसूर्ययोर्दौर्गत्यं दुर्गतित्वं प्रकाशकत्वेऽप्यम्बरखण्डमात्रसंच्छादितत्वादित्यर्थः । अहो इत्याश्चर्ये । एतच्चापि दैवकृतचोद्यमेवेत्यवगन्तव्यम् ॥ १०७ ॥

जिस अंबर ( आकाश वा वस्त्र ) के एक खण्डको ओढकर चंद्रमा रात्रिको व्यतीत करता है, उसीको ओढकर सूर्य दिनको व्यतीत करता है, जब इनकी ऐसी दुर्गति है तो हम क्षुद्रजनोंका क्या कहना है १०७

यदुक्तं दैवेन प्रभुणेत्यादिसन्दर्भेण दैवस्यैवात्यन्तावश्यकत्वं तस्यापि कर्मनियम्यत्वेनास्वातन्त्र्यादित्याशयेन दैवपद्धतिनिरूपणानन्तर्येण कर्मपद्धतिं निरूपयिष्यंस्तत्रापि सर्वदेवनियामकत्वेन विधेस्तन्नियामकत्वेन कर्मणः प्राबल्यमिति परम्परामनुविदधाति—

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा-
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किमपरैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ १०८ ॥

नमस्याम इति ॥ देवानिन्द्रादीन्नमस्यामोऽभिवादयामः न त्वेकान्ततस्तेषामेवाभिवाद्यत्वमेतन्नियामकस्य कस्यचिद्विधेः विद्यमानत्वात् सोऽप्यभिवाद्य एवेत्याशयेनाह । ते देवा अपि हतो यो विधिर्ब्रह्मा तस्य वशगा ननु नियम्याः खलु । हतो विधिरपि वन्द्यः न त्वस्यापि स्वातन्त्र्यमित्याह । सोऽपि विधिरपि प्रतिनियतं यत्कर्मण एकं फलं तद्ददातीति तथोक्तः यत्फलं कर्मणा प्रतिनियतं तत्प्रदो न तु स्वतन्त्र इत्यर्थः । तथा च फलं कर्मायत्तं यदि कर्माधीनं चेदपरैः देवैः किं विधिना च किम् ? न किंचिदपीत्यर्थः । तस्यैव फलदानस्वाम्यादिति भावः । तत्तस्मात् कर्मभ्यो ज्योतिष्टोमतपोदानादिरूपेभ्यो नमः । यतः विधिरपि येभ्यः कर्मभ्यो न प्रभवति न समर्थो भवति । स्वातन्त्र्येण प्रवृत्तेरभावादिति भावः । अत्र पूर्वपूर्वस्योत्तरोत्तरं प्रत्युत्कर्षावहत्वान्मालादीपकाख्योऽलंकारः । लक्षणं तूक्तम् ॥ १०८ ॥

१ किममरगैणः इति प ठान्तरम् ।

देवताओंको हम नमस्कार करते हैं परन्तु उनको विधाताके वशमें देखते हैं, इसलिये विधाताको नमस्कार करते हैं, पर विधाताभी हमारे पूर्वनिश्चितकर्मके अनुसार फल देता है फिर जब फल और विधाता दोनों कर्मके अधीन हैं तो देवता और विधातासे क्या काम है ? इस कारणसे कर्महीको नमस्कार है क्योंकि, विधाताका भी सामर्थ्य जिसपर नहीं चलता ॥ १०८ ॥

यदुक्तं विधिरपि न येभ्यः प्रभवतीति तत् प्रपञ्चयति—

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे १०९

ब्रह्मेति ॥ येन कर्मणा कर्त्रा ब्रह्मा चतुर्मुखो ब्रह्मांडमेव भाण्डं तस्योदरे कुलालेन कुंभकारेण तुल्यं कुलालवन्नियमितः। विविधवस्तुनिर्माणकर्मत्वेन नियोजितः। येन विष्णुः कुक्षिस्थाखिलभुवनोऽपि महासंकटेऽतिकृच्छ्रतरे दशावतारा एव गहनमरण्यानी तत्र क्षिप्तो निर्दिष्टः। येन कर्मणा रुद्रो मृत्युंजयोऽपीति भावः। कपालं ब्रह्मशिरस्तदेव पाणिपुटके करतलस्थभिक्षाहरणोचितभाजनं तत्र भिक्षाटनं सेवते कपालस्थभिक्षान्नं भुंक्त इत्यर्थः। किं च येन सूर्योऽपि सकललोकप्रकाशकोऽपीति भावः। नियमित इति शेषः। गगनेऽन्तरिक्षे नित्यमेव न तु क्षणमात्रमपि विश्रमावकाशमिति भावः। भ्राम्यति परिवर्तते। "वा भ्राश०" इत्यादिना विकल्पात् श्यन्प्रत्ययः। तस्मै सकलनियंत्रे कर्मणे नमः। तथाभूतस्यैवाभिवादनौचित्यादिति भावः ॥ १०९ ॥

जिस कर्मने ब्रह्माको कुम्हारके समान निरंतर ब्रह्मांडरचनाके हेतु बनाया और विष्णुको वारंवार दश अवतार ग्रहण करनेके संकटमें डाला और रुद्रको कपाल हाथमें लेकर भिक्षा मांगनेके कष्टमें रक्खा और सूर्यको आकाशमें नित्यभ्रमणचक्रमें डाला उस कर्मको प्रणाम है १०९

---

१ पात्रपुटके। इति पाठांतरम्।

एवं श्लोकद्वयेन सकलनियामकत्वकथनपूर्वकमभिवादनीयत्वोपयोगात्स्वयम- भिवाद्य संप्रति बहुश्रेयोहेतुत्वात्तस्योपादेयतामाह—

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ११०

येति ॥ या सत्क्रिया खलांश्च दुर्जनानपि साधून् करोति । मूर्खानज्ञानिनोऽपि विदुषः पंडितान् करोति । द्वेषिणोऽपि हितान् सुहृदः करोति । परोक्षमतीन्द्रियमपि वस्तु प्रत्यक्षमिन्द्रियगोचरं कुरुते । तथा हालाहलं विषमपि तत्क्षणात् सद्य एवामृतं करोति । तादृक्सामर्थ्यसंभवादिति भावः । अतः हे साधो सज्जन निपुणेति वा । "साधुः समर्थो निपुणो वा" इति काशिकायाम् । वाञ्छितमभिलषितं फलं भोक्तुमिच्छसि चेदिति शेषः । भगवतीं तां सत्क्रियां सत्कर्माराधय । तस्या अशेषफलदायकत्वादिति भावः । किन्तु व्यसनैर्विपुलेष्वापद्व्यियिष्वेषु रजस्तमःप्रभृतिषु वृथा व्यर्थमास्थामासक्तिं मा कृथाः मा विधेहि । तस्याः क्लेशैकफलकत्वादिति भावः । करोतेर्लुङ् । "न माङ्योगे" इत्यट्प्रतिषेधः । अत्र खलादीनां साधुत्वादिकरणादशक्यवस्तुकरणरूपो विशेषालंकारः ॥ ११० ॥

जो सत्क्रिया खलोंको साधुता देती है और मूर्खोंको पंडितता, शत्रुओंको मित्रता, गुप्तविषयोंको प्रगट और विषको अमृत कर देती है उस सत्क्रियारूपी भगवतीकी आराधना करो । हे साधो ! यदि वांछित फल भोगा चाहो तो कष्ट और हठसे बहुतसे गुणोंके साधनमें वृथा श्रम न करो ॥ ११० ॥

वृद्धिहान्योरप्येतन्मूलकत्वमेवेत्याह—

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् १११

शुभ्रमिति ॥ चिरं चिरकालमारभ्यानुस्यूतेऽनुवर्तमानेऽपि " षिवु तंतुसन्ताने " इति धातोः कर्तरिक्तः । " छ्वोः शूडनुनासिके च " इति ऊठि यणादेशः । शुभे कर्मणि पुराकृतविशेषे संभवति सतीत्यर्थः । शुभ्रं सद्म सौधादिकं सविभ्रमाः सविलासा युवतयस्तरुण्यः श्वेतातपत्रेणैकश्वेतच्छत्रेणोज्ज्वला लक्ष्मीः राज्यश्रीरित्येतदखिलमित्यर्थः । अनुभूयतेऽनुभुज्यते । जन्मान्तरीयफलहेतुत्वात्तस्येति भावः । विच्छिन्ने शुभकर्मणि विनष्टे सति नितरामतिशयेन अनङ्गकलहो रतिरणः स एव क्रीडा केलिस्तया हेतुना त्रुटन् भिदुरस्तन्तुर्यस्य तत्तथोक्तम् । शेषे कप्प्रत्ययः । मुक्ताजालमिव भ्रश्यन् सन् सद्मादिकमिति शेषः । झटिति द्रागिदशो याति ।"यत्र यत्र स्थितं गेहे तत्र तत्र विनश्यति ।"इति न्यायादिति भावः । दृश्यतां विलोक्यतामित्यर्थः । अन्वयव्यतिरेकाभ्यां वृद्धिहान्योरस्यैव कारणत्वं द्रष्टव्यमिति भावः ॥ १११ ॥

स्वच्छ गृह, उत्तम हावभावयुक्त युवती, श्वेतछत्रसहित शोभायमान लक्ष्मी तबही स्थिरतासे भोगी जाती है जब कि पुण्यकी वृद्धि होती है । परंतु पुण्यके क्षीण होनेपर संपूर्ण भोगविलास कामदेवकी क्रीडाके कलहसे टूटे हुए हारके मोतियोंके समान भ्रष्ट होकर देशांतरोंमें लुप्त हो जाते हैं ॥ १११ ॥

अथैषामाचरणप्रकारमाह–

गुणवदगुणवद्वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ११२ ॥

गुणवदिति॥गुणवद्गुणयुक्तमगुणवद्गुणरहितं वा यत्कार्यजातं तत्कुर्वतानुष्ठीयमानेन पण्डितेन परिज्ञात्रा परिणतिः परिपाकावस्था यत्नतः अतिप्रयत्नेन सावधानेनेति यावत् । अवधार्याऽनुसंधेया । यत्नत एव कर्मजातमारब्धव्यं समालोच्य परिणतिपर्यन्तमित्यर्थः । अन्यथानर्थमाह । अतिरभसकृतानां सहसानुष्ठितानां कर्मणां गुणवतां चेति शेषः । आविपत्तेर्निष्पत्तिपर्यन्तम् । विक-

---

१ उचितमनुचितं वा कुर्वताकार्यमादौ इति पाठान्तरम् ।

त्पादाङ्को समासः । विपूर्वात्पचतेर्निष्पत्त्यर्थत्वमुपसर्गवशाद्धातूनामनेकार्थत्वा-दित्यवगन्तव्यम् । हृदयदाही मनःसन्तापकारी कुतः शल्यतुल्यः शल्यप्राये विपाकः परिपाकदशा भवति । अतः सावधानेनैव कर्मजातमारम्भणीयं तद-भूतस्यैव चित्तसमाधायकत्वादिति भावः ॥ ११२ ॥

कोई कार्य योग्य हो अथवा अयोग्य हो परन्तु करनेवाले पंडितको उसका परिणाम पहिलेसे विचार लेना चाहिये । विना विचारे अति शीघ्रतासे काम कियेका फल मरणपर्यन्त हृदयको कंटकके समान दाहता है ॥ ११२ ॥

अतः सत्कर्माननुष्ठातुर्दुर्मेधस्कतामाह—

स्थाल्यां वैदूर्यमय्यां पचति तिलखलं चान्दनैरिन्धनौघैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्तात्
प्राप्येमां कर्मभूमिं न भजति मनुजो यस्तपो मन्दभाग्यः ११३

स्थाल्यामिति ॥ स मनुजः इह लोके विदूरात्प्रभवति वैदूर्यं वालवायजमणिः। "वैदूर्यं वालवायजम्" इत्यमरः। "विदूराञ्ञ्यः" इति ञ्यप्रत्ययः।अत्र विदूरशब्दे वालवायस्यादेशः पर्यायो वा तत्रोपचरितो वा तेन वालवायाद्रिरसौ प्रभावति स विदूरान्नगरात् तत्र संस्कृत इत्याक्षेपः प्रत्युक्तः । "वालवायो विदूरं च प्रदे-शान्तरमेव वा । न चेत्तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥" वैदूर्यमय्यां वैदू-र्यमणिविकारायाम् । विकारार्थे मयट् । स्थाल्यां पात्रे चान्दनैश्चंदनतरुसंबन्धिभि-रिन्धनौघैः काष्ठभारैस्तिलखलं तिलपिष्टं पचति । तथा सौवर्णैः सुवर्णविकारैः लाँगलाग्रैर्हलमुखैरर्कतूलस्य हेतोरर्काख्यवृक्षतूलार्थमित्यर्थः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । वसुधां भुवं विलखति कर्षति । तथा कर्पूरखंडान् कर्पूरकदलीका-डाञ्छित्त्वा कोद्रवाणां कोरदूषकाख्यसस्यविशेषाणाम् । "कोरदूषस्तु कोद्रवः" इत्यमरः। समंतात्सर्वतोऽधिकमित्यर्थः । वृतिमावरणं कुरुते । कोऽसावीदृशो दुर्भग इत्याशंकायामाह । इमां कर्मभूमिं कर्माचरणयोग्यभूमिं प्राप्य मंदभाग्यो निर्भाग्यो मनुजस्तपश्चान्द्रायणादि कर्म न भजति न सेवते स इति संबन्धः ।

१ च लशुनं, तिलकणां । २ मूलस्य । ३ चरति इति च पाठान्तरम् ।

वैदूर्यपात्रे तिलपिष्टपचनादिप्रायं कर्मभुव्यस्यां तपोऽननुष्ठानमित्यर्थः । अतः सर्वथा सत्कर्मानुष्ठेयं श्रेयस्कामेनेति तात्पर्यम् । अत्र यस्तपो न भजति स तिल-खलं पचतीत्यादिविशिष्टभजनपचनाद्योर्वाक्यार्थयोर्निर्दिष्टैकत्वासंभवात्सादृश्य-लक्षणायामसंभवद्वस्तुसंबंधा वाक्यार्थवृत्तिर्निदर्शनाभेद इत्येतत्सर्वं मूर्खपद्धतौ व्याख्यातमितीहोपरम्यते ॥ ११३ ॥

वह पुरुष मानो मरकतमणिके बरतनमें तिलखलको चंदनके ईंध-नसे पकाता है और खेतमें सोनेका हल चलाकर आकवृक्षकी तूलको जलानेके हेतु निकालता है और कर्पूरके टुकडे काटकर कोदोंके चारों ओर दंडवार बनाता है जो मंदभागी मनुष्य इस कर्मभूमिमें आके तप नहीं करता ॥ ११३ ॥

पुण्यविशेष एव फलं न त्वन्यदित्याह–

नैवाकृतिः फलति नैव कुलं न शीलं
विद्याऽपि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ११४ ॥

नेति ॥ आकृतिराकारसम्पत्तिर्नैव फलति । फलकारणं न भवतीत्यर्थः । कुलं सद्वंशो वा नैव फलति । शीलं सत्स्वभावो वा न फलति । विद्यापि वेद-वेदाङ्गात्मिकापि नैव फलति । यत्नकृता प्रयत्नानुष्ठिता सेवा राजादिपरिचर्या च न फलति। किंतु पूर्वतपसा पुराकृतसुकृतेन सञ्चितानि संपादितानि पुरुषस्य संबंधीनि भाग्यानि वृक्षा यथा वृक्षा इवेत्यर्थः । "इववद्वायथाशब्दौ" इति दण्ड्याचार्यानुशासनात् । काले परिपाकसमय एव फलन्ति खलु । तपोजनि-तभाग्यविशेषव्यतिरेकेण फलजनकं न किंचिदस्तीत्यर्थः ॥ ११४ ॥

पुरुषकी सुंदर आकृति कुछ फल नहीं देती और उत्तम कुल शील विद्या और बडे यत्नसेभी हुई सेवाभी फल नहीं देती एक पूर्वतप-स्यासे संचित किये हुए भाग्यही मनुष्योंको समयसमयपर वृक्षके तुल्य फल देते हैं ॥ ११४ ॥

सर्वदापि भाव्यभाविनोरावश्यकत्वं कर्मवशादेवेत्याह—

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याः कलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ ११५

मज्जत्विति ॥ अम्भसि मज्जतु मग्नो भवतु । जलस्तंभादिनेति भावः । मेरु शिखरं यातु गच्छतु । योगानुसन्धानादिनेति भावः । आहवे युद्धे शत्रून् जयतु वाणिज्यं क्रयविक्रयादि, कृषिः कर्षणं, सेवनं परिचर्या दौत्यादिनेति भावः । वे कृषिसेवने च तथा सकलाः समस्ताः विद्याः वेदवेदांगादयः । "अंगानि वेदा श्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥" इत्येताश्चतुर्दश विद्याः कला इतिहासागमप्रभृतिचतुःषष्टिकलाश्च शिक्षतु अभ्य स्यतु । तथा परमुत्कृष्टं प्रयत्नं पादुकासिद्ध्यात्मकं कृत्वा खगवत्खगेन तुल्यं विपुलमाकाशं प्रयातु । तथापि कर्मवशतो धर्माधर्मात्मककर्मवशादिहास्मि लोके अभाव्यमभावि फलं न भवति । तथा भाव्यस्यावश्यंभाविनः फलस्य नाशः कुतः । तस्य ब्रह्मणापि निवारयितुमशक्यत्वात् । "यद्भावि तद्भ वत्येव यदभावि न तद्भवेत्" इति न्यायादिति भावः । अत्राम्भोमज्जनादीनां चतुःषष्टिकलास्वेवान्तर्भूतत्वमवगन्तव्यम् । ताश्च कला मदीयशृङ्गारशृङ्गाटके संख्यातास्तत्रैव द्रष्टव्या इतीहोपरम्यते ॥ ११५ ॥

चाहे समुद्रमें डूबो, चाहे सुमेरुके शिरपर चढ जाओ, चाहे घोर संग्राममें शत्रुओंको जीतो, चाहे और वणिज खेती सेवा आदि विद्या और नाना कला करो और आकाशमें पक्षीके समान बडे यत्नसे उडो फिरो पर अनहोनी नहीं होती और जो कर्मवश होनी है सो नहीं टलती ॥ ११५ ॥

अतिसङ्कटस्थस्यापि प्राचीनपुण्यसद्भावे तु न क्षतिरित्याह—

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।

सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥ ११६ ॥

वन इति ॥ अयं तु स्पष्टोऽर्थः ॥ ११६ ॥

वन, रण, शत्रु, जल और अग्निमें, समुद्रमें, पर्वतके शिखरमें सोते हुए, असावधान और विषम अवस्थामें पुरुषकी पूर्वजन्मके पुण्यही रक्षा करते हैं ॥ ११ ॥

किं बहुना सुकृतिनस्तावत्सर्वमप्यानुकूल्यमेव प्रयातीति निगमयति–

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः स्वजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ११७ ॥

भीममिति ॥ यस्य पुंसः भीमं हिंस्रादिप्राचुर्येण भयङ्करं वनमरण्यानां कर्तृप्रधानं नियतपुरं भवति तद्वदशेषभोगसाधनं भवतीत्यर्थः। तस्य सर्वोऽशेषोऽपि जनः स्वजनतां किंकरतामुपयाति। तस्य कृत्स्ना चतुःसमुद्रान्ता भूः सन्निधिभिः समीचीनैर्महापद्मादिनवनिधानैर्निक्षेपैर्वा रत्नैः श्रेष्ठवस्तुभिश्च पूर्णा भवति समस्तफलानि प्रसूत इत्यर्थः। कस्येत्यत आह। यस्य नरस्य विपुलं बहुलं पूर्वसुकृतं पुराकृतसत्कर्मसंजातं पुण्यमस्ति वर्तते तस्येति संबन्धः। अतः सत्कर्माचरणतत्परेणैव भवितव्यं श्रेयस्कामेनेति संदर्भाभिप्रायः ॥ १२७ ॥

भयानक वन उस पुरुषके लिये अच्छा नगर हो जाता है और सब जन उसके मित्र हो जाते हैं और सम्पूर्ण पृथ्वी उसके निकट रत्नोंसे पूर्ण होती है जिस पुरुषका पूर्व जन्मका बहुतसा पुण्य है ११७

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं

१ सुजनतां इति पाठान्तरम् ।

विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ ११८॥

क इति ॥ लाभः कः ? गुणिसंगमः, असुखं किम् ? प्राज्ञादितरे मूर्खास्तैः सह संगतिः, हानिः का ? समयच्युतिः यस्मिन् समये यदवश्यं कर्तव्यमेव तत्र कृतं समयो गतः सैव हानिः, निपुणता ज्ञातृता का ? या धर्मतत्त्वे रतिः प्रीतिः, शूरः कः ? विजितानीन्द्रियाणि येनासौ, प्रियतमा का ? यानुव्रता पतिव्रता, धनं किं ? विद्या, सुखं किम् ? अप्रवासगमनम्, राज्यं किम् ? आज्ञाफलं ययाज्ञया सर्वं शुभाशुभं भवति तदेव राज्यम् ॥ ११८ ॥

लाभ क्या है गुणियोंकी संगति, दुःख क्या मूर्खोंका संग, हानि क्या समयपर चूकना, निपुणता क्या ? धर्ममें रति होना, शूर कौन है ? जिसने इंद्रियोंको वशमें किया, स्त्री कौन अच्छी है ? जो अनुकूल हो, धन क्या है ? विद्या, सुख क्या है ? प्रवास न होना, राज्य क्या है ? अपनी आज्ञाका चलना ॥ ११८ ॥

मनस्विनो द्वे गती भवत इति मालतीकुसुमदृष्टांतेन वर्णयति—

मालतीकुसुमस्येव द्वे गतीह मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ११९ ॥

मालतीति ॥ मालत्याः कुसुमं पुष्पं तस्येव मनस्विनो विवेकिनः पुरुषस्य द्वे गती दशे स्तः । यथा कुसुमेन सर्वलोकस्य मूर्ध्नि मस्तके स्थीयतेऽथवा वन एव शीर्यते शीर्णीभूयते तद्वन्मनस्विनः पुरुषा लोकमान्या गृहे वा वनेऽरण्यवासिनो भवन्तीत्यर्थः ॥ ११९ ॥

मालतीके फूलोंके समान मनस्वी ( धीर ) पुरुषकी दो वृत्ति होती हैं या तो सब लोगोंके मस्तकपर रहे अथवा वनमेंही नष्ट हो जाय ॥ ११९ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ १२० ॥

अप्रियेति ॥ अप्रियवचनदरिद्रैः अप्रियवचनेषु दरिद्रास्तैः प्रियवचनेषु आढ्याः सम्पन्नास्तैः स्वदारेषु परितुष्टैः परापवादात्परनिन्दाया निवृत्ता एवमादिभिर्गुणैर्युक्तैः पुरुषैः क्वचित्क्वचित्स्थले वसुधा मण्डिता शोभायमाना ॥ १२० ॥

अप्रियवचनके दरिद्री, प्रियवचनोंसे संपन्न, अपनीही स्त्रीसे संतुष्ट

और पराई निंदासे रहित जो पुरुष हैं उनसे कहीं कहीं ही पृथ्वी शोभायमान है अर्थात् ऐसे पुरुष सब ठौर नहीं होते ॥ १२० ॥

लज्जागुणौघजननीं जननीमिव स्वा-
मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।
तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १२१ ॥

इति भर्तृहरिकृतं नीतिशतकम् सम्पूर्णम् ॥ १ ॥

लज्जेति ॥ सत्यमेव व्रतं तदेव व्यसनं येषां ते प्रतिज्ञां न त्यजन्ति पुनरन्यां न कुर्वन्ति । कथंभूतां प्रतिज्ञां लज्जायाः ये गुणास्तेषामोघः समुदायस्तस्य जननीम् । पुनः कथंभूतां स्वां स्वकीयां जननीमिव अत्यन्तशुद्धहृदयामनुवर्तमानाम् अतस्तेजस्विनः सुखमसून्प्राणानपि त्यजन्ति ॥ १२१ ॥

इति भर्तृहरिकृतनीतिशतकव्याख्याने नीतिशतकं संपूर्णम् ॥ १ ॥

लज्जादि गुणोंके समूहको उत्पन्न करनेवाली और अपनी माताके समान शुद्धहृदय और स्वाधीन रहनेवाली प्रतिज्ञाको तेजस्वी और सत्यव्रतके धारण करनेवाले पुरुष नहीं छोडते परन्तु अपना प्राणभी सुखसे त्याग करदेते हैं ॥ १२१ ॥

इति भर्तृहरिकृतनीतिशतकभाषाटीकायां नीतिशतकं संपूर्णम् ॥ १ ॥



श्रीः ॥

# अथ शृङ्गारशतकम् ।



शम्भुस्वयंभुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकुंभदासाः ।
वाचामगोचरचरित्रविचित्रिताय
तस्मै नमो भगवते मकरध्वजाय ॥ १ ॥

शंभ्विति ॥ अत्र स्वयंभुशब्दस्य शंभुशब्दवदौणादिकडुप्रत्ययांतत्वमवगन्तव्यम् ॥ न तु "भुवः संज्ञान्तरयोः क्विप्" इति क्विप्रत्ययांतत्वम् । अन्यथा स्वयंभूर्देवोऽसावयमित्येव दीर्घप्रसंगात् । तथा च येन मकरध्वजेन शम्भुस्वयंभुहरयो हरविरंचिमुरारयः संहारसृष्टिस्थितिकर्तृत्वेन सकलभुवनाधीश्वरा अपीति भावः । हरिणेक्षणानां हरिणवन्मनोहरलोचनानां पार्वतीसरस्वतीश्रीदेवीनां सततम् । "समो वा हिततयोः" इति वचनात् । समो मकारस्य लोपः । गृहे कुम्भदासाः जलकुंभभारवाहकभृत्या अक्रियन्त । तासु तादृङ्मोहमुत्पाद्य तथाविधेयीकृता इत्यर्थः । किमुतान्ये इति भावः । कृञः कर्मणि क्यङ् तङ् । अर्धनारीश्वरत्वाच्छंभोः स्वयंभुवश्च सरस्वतीनिकेतनीकृतमुखत्वात् हरेर्वक्षःस्थलस्थापितलक्ष्मीकत्वाच्चैवमुक्तमित्यवगंतव्यम् । अत एव वाचामगोचरमवाङ्मानसगोचरं यच्चरित्रं माहात्म्यं तेन विचित्रवत्कृतो विचित्रितः तस्मै अत्यंताश्चर्यकारकायेत्यर्थः । "विस्मयोऽद्भुतमाश्चर्यं चित्रम्" इत्यमरः । विचित्रशब्दात् "तत्करोति॰" इति ण्यंतात्कर्मणिक्तः । णाविष्ठवद्भावे विन्मतोर्लुक् । भगवते सकललोकाराध्याय । यद्वा चतुर्व्यूहमध्यप्रविष्टत्वात्प्रद्युम्नरूपेण भगवत्पुत्रत्वाद्वा तद्रूपायेत्यर्थः । "आत्मा वै पुत्रनामासि । पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥" इत्यादिश्रुतेः । तस्मै मकरध्वजाय मकरकेतनाय कामदेवसार्वभौमाय नमः । "नमःस्वस्ति॰" इत्यादिना चतुर्थी । वसन्ततिलका वृत्तम् ॥ १ ॥

---

१ कर्ता । इति । २ कुसुमायुधाय इति च पाठान्तरम् ।

जिसने शिव ब्रह्मा और विष्णुकोभी स्त्रियोंके कार्य करनेके लिये दास बना रक्खा है और विचित्र चतुर जिसका वर्णन नहीं हो सकता ऐसे पुष्पायुध कामदेवको नमस्कार है ॥ १ ॥

तत्रालम्बनविभावयोः स्त्रीपुरुषयोर्मध्ये स्त्रीणां प्रशस्तत्वाद्विंशतिश्लोकैः प्रथमं स्त्रीप्रशंसां चिकीर्षुस्तत्रादौ तावत्तासां बन्धनहेतुत्वमाह–

स्मितेन भावेन च लज्जया भिया
पराङ्मुखैरर्द्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥ २ ॥

स्मितेनेति ॥ स्मितेन यौवनादिमदविकारजनिताकास्मिकमन्दहासेन । " आकस्मिकं तु हसितं यौवनादिविकारजम् । " इति वचनात् । बाल्ययौवनसन्धावुत्पन्नः। शृङ्गारविषयः प्रथमान्तःकरणविकारो भावस्तेन च। तदुक्तम् चित्तस्य विकृते कारणे सति । " ततोऽर्वाङ् विकृतभावो बीजस्यादिविकारवत् । " इति । हावेनेति पाठे " ईषद्दृष्टविकारः स्याद्भावो हावः प्रकीर्तितः" इत्युक्तलक्षणेन चेष्टाविशेषेण च । लज्जया कुचकुम्भदोर्मूलाच्छादनवदनविनमनदरनिमीलितनयनत्वानुभावकमनःसङ्कोचनरूपव्रीडया च " वदनसङ्कोचनं व्रीडानङ्गरागस्तनादिभिः । " इति लक्षणात् । भिया आकस्मिकभयजनितत्रासेनेत्यर्थः । तदुक्तम् । " आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्तितः । " इति । लज्जया गुणैरिति पाठे आसामेवालम्बनभूतरूपयौवनादिगुणैरित्यर्थः"आलंबनगुणो रूपयौवनादिरुदाहृतः । " इत्युक्तत्वात् । पराङ्मुखैः ह्रियैवार्धस्फुटप्रसारिभिरित्यर्थः । अर्धकटाक्षवीक्षणैरसमग्रापाङ्गावलोकनैश्च । कटाक्षलक्षणं तु सङ्गीतरत्नाकरे–"यद्गतागतविश्रान्तवैचित्र्येण विवर्तनम् ॥तारकायाः कलाभिज्ञास्तत् कटाक्षं प्रचक्षते ॥"इति। वचोभिः शुककोकिलमधुरतरमृदुलालापैश्च । ईर्ष्यया परोत्कर्षासहनरूपासूयया यः कलहस्तेन च " परोत्कर्षासहिष्णुत्वमीर्ष्यां प्राहुर्मनीषिणः " इति लक्षणात् । यद्वा ईर्ष्यया कलहेन प्रणयकलहेन चेति द्वंद्वैकवद्भावः।"सर्वो द्वन्द्वो विभाषयैकवद्भवति" इत्यनुशासनात् । लीलया वागादिभिः प्रियानुकरणरूपाविलासविशेषेण च । "लीला

१ हावेन । २ गुणैः इति च पाठान्तरम् ।

प्रियानुकरणं वाग्भिर्गत्याथ चेष्टया।" इति लक्षणात्। किं बहुना समस्तभावैः स्तंभरोमांचस्वेदादिसात्त्विकभावैः हर्षौत्सुक्यावहित्थादिसंचारिभावैश्चेत्यर्थः। स्त्रियः बन्धनं खलु पुंसां संसारबन्धहेतवः खल्वित्यर्थः। लिङ्गवचनव्यत्ययो नित्यनपुंसकत्वेन जात्यभिप्रायेण च वेदाः प्रमाणमितिवद्द्रष्टव्यः। अत्र स्मित-कटाक्षालापा अनुभावाः।"कार्यभूतोऽनुभावः स्यात्कटाक्षादिः शरीरजः।"इत्यु-क्तत्वात्। लज्जाभयेर्ष्याः सञ्चारिभावाः। भावलीले शृङ्गारचेष्टाविशेषाविति द्रष्टव्यम्। तदुक्तम्। "भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि। लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्। मोट्टायितं कुट्टमितं बिब्बोको ललितं तथा। कुतूहलं च चकितं विहृतं हास इत्यपि॥ एवं शृङ्गारचेष्टाः स्युर-ष्टादशविधा मताः।" इति। ईदृक्साधनसम्पन्नानां स्त्रीणां बन्धनहेतुत्वं किं वक्तव्यमिति भावः। तथा चैतासां शृङ्गारनायिकानां मध्ये भावलज्जाभयवत्यो मुग्धाः। स्मितार्धकटाक्षमधुरालापवत्यो मध्यमाः। ईर्ष्याकलहलीलावत्यः प्रौढाश्चेति विवेकस्तदुक्तम्। "उद्यद्यौवना मुग्धा लज्जाविजितमन्मथा। लज्जामन्मथमध्यस्था मध्यमोदितयौवना॥ स्मरमन्दीकृता व्रीडा प्रौढा सम्पूर्ण-यौवना।" इति। वंशस्थवृत्तम्॥ २॥

मन्द मुसुकाना, लज्जित होना, मुख फेर लेना, अर्धकटाक्षसे देखना, मधुरवचनसे बोलना, ईर्ष्यासे कलह करना और अनेक चरित्र दिखाना इन सब प्रकारोंसे स्त्री बन्धनरूपही हैं॥ २॥

उक्तमर्थं प्रकारान्तरेणाह—

भ्रूचातुर्यात्कुञ्चिताक्षाः कटाक्षाः
स्निग्धा वाचो लज्जितान्ताश्च हासाः।
लीलामन्दं प्रस्थितं च स्थितं च
स्त्रीणामेतद्भूषणं चायुधं च॥ ३॥

भ्रूचातुर्यादिति॥ भ्रुवोश्चातुर्याल्ललिताक्षेपवैचित्र्यात् कुञ्चितानि कूणीकृता-न्यक्षीणि येषां ते तथोक्ताः। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इति षच्। कटाक्षा अपाङ्गेक्षणानि च एतेन रचितभ्रुकुट्याख्यौ व्यापारविशेषावुक्तौ।

---

१ भ्रूचातुर्यात्कुञ्चि०। २ लज्जितार्थंद इति च पाठान्तरम्।

तदुक्तम् ' " स्याद्भ्रुवोर्ललिताक्षेप एकस्या एकरेचितम् । द्वयोर्मूलसमक्षेपकौटिल्याद्भ्रुकुटिं विदुः ॥ " इति । स्निग्धाः स्नेहपरिप्लुता वाचश्च । स्नेहलक्षणं तु " विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥ " इति । लज्जितमन्तं येषां ते लज्जितान्ता लज्जावसाना हासाश्च। तथाभूतहासानामेव मोहनत्वात् । अन्यथा हास्यरसपर्यवसानादिति भावः। लीलामन्दं लीलामधुरं प्रस्थितं प्रस्थानं गमनमिति यावत् । स्थितमवस्थानं च। इत्युभयत्रापि भावे क्तः । इत्येतत्सर्वं स्त्रीणां भूषणं च. चातुर्यातिशयहेतुत्वादायुधं शस्त्रं च । युवजनविषयसाधनत्वादिति भावः । अत्र कटाक्षादीनां लक्षणानि प्रागेवोक्तानि। लज्जितसञ्चारिलीलाशृङ्गारचेष्टाभ्रुकुट्यादयोऽन्येऽनुभावा इति ज्ञेयम् । तथा लीलामन्थरगमनस्य पद्मिनीनियतलक्षणात् प्रायेणैतासां लज्जातिशयत्वं सूच्यते । तदुक्तं रतिरहस्ये । "व्रजति मृदु सलीलं राजहंसीव तन्वी त्रिवलिललितमध्या हंसवाणी सुवेषा । मृदु शुचि लघु भुंक्ते मानिनी गाढलज्जा धवलकुसुमवासोवल्लभा पद्मिनी स्यात् ॥ " अत्र भ्रुकुट्यादिसमुदाये भूषणत्वायुधत्वरूपणाद्रूपकालङ्कारः । शालिनीवृत्तम् ॥ ३ ॥

भौंह फेरनेकी चतुराई, अर्द्धनेत्रसे कटाक्ष चलाना, मीठीं बातें बोलना, लज्जित हो हसना,लीलासे मन्द मन्द चलना और घूमते खडे हो जाना स्त्रियोंके ये सहज गुण और शस्त्र अर्थात् इन्हीं भावोंसे पुरुषोंको मारती हैं ॥ ३ ॥

अथ शृङ्गारानुभावद्दग्विलासान् सपरिकरं वर्णयति—

क्वचित्सभ्रूभङ्गैः क्वचिदपि च लज्जापरिगतैः
क्वचिद्भूरित्रस्तैः क्वचिदपि च लीलाविलसितैः ।
कुमारीणामेतैर्मदनसुभगैर्नेत्रवलितैः
स्फुरन्नीलाब्जानां प्रकरपरिकीर्णा इव दिशः ॥ ४ ॥

क्वचिदिति॥क्वचित् कुत्रचित् सभ्रूभंगैः भ्रुकुटिरेचिताख्यभ्रूव्यापारसहितैः । क्वचिदपि च लज्जया परिगतैः प्रत्यावृत्तैश्च स्वानुकूल्यप्रकाशकैरित्यर्थः । तदु-

१ परिणतैः।२भीतित्रस्तैः।३नवोढानां।४भिर्मदनकमलैः।५त्रचलितैः।६परिपूर्णाः।७दशः इति०।

कम्—" सव्रीडालोकनेनैव स्वानुकूल्यप्रकाशनम् ।" इति । कचिद्भूरित्रस्तैः बहुलभयसंभ्रान्तैः। कचिदपि च लीलाभिर्गतप्रत्यागतविलासविशेषैर्हेतुना विलसितैः कमनीयैः उज्ज्वलैर्वा । तथा मदनेन सुभगैर्मनोहरैः विरक्तस्यापि चित्तक्षोभकैरित्यर्थः । " यद्दर्शनाद्विरक्तोऽपि क्षुभ्यत्येतत्समन्मथम् । " इति लक्षणात् । एतैरुक्तप्रकारैः कुमारीणां तरुणीनामुत्पलाक्षीणामिति भावः । " वयसि प्रथमे" इति ङीप् । नेत्रवलितैर्नयनविलासैर्दिशः स्फुरतां विकसितानां नीलाब्जानां नीलोत्पलानां प्रकरैर्निकुरम्बैः परिकीर्णा इव व्याक्षिप्ता इव लक्ष्यन्त इति शेषः । प्रसिद्धक्रियाध्याहारदोष इत्याह वामनः लिङ्गाध्याहार इत्यत्र । अत्र नयनविलासानां प्रियजनादिरम्यवस्तुदर्शनचापलं विना असम्भवात् कुतूहलं नाम शृङ्गारचेष्टितं सूच्यते। " कुतूहलं रम्यदृष्टौ चावलं परिकीर्तितम् ।" इति लक्षणात् । भ्रुकुट्यादीनां लक्षणं प्रागेवोक्तम् । तथा नयनवलनक्रियया विकीर्णत्वोत्प्रेक्षणाद्गुणक्रियानिमित्तक्रियास्वरूपोत्प्रेक्षा । " यत्रान्यदपि सम्बन्धादन्यत्वेनोपकीर्त्तितम् । प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ॥ " इति लक्षणात् । तथा च नयनानां नीलोत्पलसाम्यं गम्यते तेन चोपमा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । शिखरिणीवृत्तम् ॥ ४ ॥

किसी समय सुन्दर भौंहसे कटाक्ष करता, कभी लज्जासे शोभायमान दिखाई पडता, कभी भयसे भीत होता और कभी लीलाहीसे विलासोंको धारण करता है इस भांति नेत्रोंसे शोभित नवीन स्त्रियोंका जो मुखकमल है उससे दृष्टि ऐसी व्याप्त हो रही है जैसे नील कमलके समूहसे ॥ ४ ॥

अथ यदुक्तमुद्दीपनविभावश्चतुर्विध इति तत्र प्रथमोद्दिष्टालम्बनगुणकथनमुत्तरत्र करिष्य इत्युत्प्रेक्ष्य स्मितेनेत्यादिश्लोकत्रयेण काश्चिच्छृङ्गारचेष्टाः केचिदनुभावाः सञ्चारिणश्च वर्णिताः । इदानीं तु तदलङ्करणं विवक्षुस्तस्य नैसर्गिकाहार्यभेदेन द्वैविध्याहार्यकमनुपदमेव लक्ष्यत इति मनसि कृत्वा सम्प्रति नैसर्गिकं मण्डनमाह—

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः ।
वक्षोजाविभकुम्भविभ्रमहरौ[1] गुर्वी नितम्बस्थली

---

१ सम्भ्रम० इति पाठान्तरम् ।

वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ५ ॥

वक्त्रमिति ॥ चन्द्रवद्विकसति ताच्छील्येन इति चन्द्रविकासि सुन्दरमित्यर्थः। ताच्छील्ये णिनिः । वक्त्रं वदनं च । पङ्कजानां पद्मानां परीहासक्षमे अवहेलनसमर्थे तत्सदृशी इति यावत् । लोचने नयने । परीहासेत्यत्र " उपसर्गस्य घञ्यमनुष्ये बहुलम् " इति दीर्घः । स्वर्णमपाकरिष्णुः स्वर्णम् । " पुष्पमूलेषु बहुलम् " इति लुक् । तदपाकरिष्णुः तत्सदृश इत्यर्थः । एतेन पद्मिनीत्वं सूच्यते । " कापि चांपेयगौरी " इति लक्षणात् । वर्णो देहकान्तिश्च । तथा अलिनीनां भृङ्गाङ्गनानां जिष्णुर्जयशीलः तत्सन्निभ इत्यर्थः । " ग्लाजिस्थश्च ग्स्नुः " इति ग्स्नुप्रत्ययः । कचानां चयः केशपाशश्च । इभकुम्भयोर्विभ्रमहरौ विलासहारिणौ करिवरशिरःपिण्डकल्पावित्यर्थः । "कुम्भौ तु शिरसः पिण्डौ" इत्यमरः । वक्षोजौ कुचकुम्भौ च । गुर्वी दुर्भरा । " वोतो गुणवचनात् " इति ङीप् । नितम्बस्थली कटिपश्चाद्भागश्च । " पश्चान्नितम्बः स्त्रीकट्याः " इत्यमरः । " जानपद० " इत्यादिना अकृत्रिमार्थे ङीप् । हरतीति हारि मनोहरम् । पूर्ववण्णिनिः । वाचां मार्दवं वाङ्माधुर्यं मधुरकोमलालापश्चेत्यर्थः । एतत्सर्वं युवतिषु तरुणीषु स्वाभाविकं स्वभावसिद्धम् । " तत आगतः " इति ठक् । मण्डनं तरुणीनामेतन्नैसर्गिकालङ्करणमित्यर्थः । अत्र चन्द्रविकासीत्यादिशब्दाः प्रायशः सादृश्यवाचकाः अत एवोपमालङ्कारः । तदुक्तमाचार्यदण्डिना । " स्पर्धते जयति द्वेष्टि हसतीर्ष्यत्यसूयति । तदन्वेत्यनुबध्नाति तच्छीलति निषेधति । तत्र वानुकरोतीति शब्दाः सादृश्यवाचकाः ॥ " इति । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

चन्द्रमाको फीका करनेवाला मुख, कमलको हँसनेवाले नेत्र, सुवर्णकी दमकको मन्द करनेवाली देहकी कांति, भौंरोंके पुंजको जीतनेवाले केश, गजमस्तककी शोभा हरनेवाले स्तन और विशाल भारी दोनों नितंब और मन हरनेवाली कोमलवाणी ये सब स्त्रियोंमें स्वाभाविक भूषण हैं ॥ ५ ॥

अथालम्बनगुणयौवनमाह–

स्मितं किञ्चिन्मुग्धं सरलतरलो दृष्टिविभवः

---

१ वक्त्रे इति पाठांतरम् ।

परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिवं न हि रम्यं मृगदृशः ॥ ६ ॥

स्मितमिति ॥ स्मितं मन्दहासः किंचिदीपन्मुग्धं सुन्दरं भवतीति यथायोग्यमध्याहार्यम् । " मुग्धः सुन्दरमूढयोः " इत्यमरः । बाल्ययौवनमध्यस्थत्वेन तरुण्याः प्रागल्भ्याभावान् स्मितस्येपन्मुग्धत्वमुक्तामित्यवगन्तव्यम । दृष्टिविभवः विलोकनसम्पत्तिः सरलमकुटिलं यथा तथा तरलश्चञ्चलो भवति। वाचां परिस्पन्दो वाग्व्यापारोऽपि । अभिनवा नूतना विलासा यासां वा या उक्तयः वचनानि ताभिः सरसो रसयुक्तः रुचिर इति यावत् । भवति । गतानां गतीनाम् । कर्तरि क्तः । आरम्भ उपक्रमः किसलयितः पल्लवितः । तारकादित्वादितच् । लीलापरिकरो विलाससमृद्धिर्यस्य स तथोक्तः विलाससम्बन्धबन्धुरो भवतीत्यर्थः । अतस्तारुण्यं यौवनं स्पृशन्त्याः मृगदृशः तरुण्याः सम्बन्धि किमिव किंवा रम्यं मनोहरं न हि भवति सर्वमपि रम्यमेव भवतीत्यर्थः । इयं मुग्धनायिका । " उदययौवना मुग्धा लज्जाविजितमन्मथा । " इति लक्षणात् । अत्र श्लोकद्वयेऽपि श्लाघ्यविशेपणयोगादुदात्तता नाम गुणः । " श्लाघ्यैर्विशेपणैर्योगो यस्याश्च स्यादुदात्तता ॥ " इति लक्षणात् । शिखरिणीवृत्तम् ॥

मन्द मुसुकुराता हुआ मुख, सीधे और चंचल दृष्टिपात करना, नये नये विलास उक्तिसे सरस बात करना, लीलासे कमलके समान मन्द मन्द गतिसे गमनका आरम्भ करना, युवा अवस्था चढतेही क्या क्या सुन्दर हावभाव स्त्रियोंमें नहीं उत्पन्न होते ॥ ६ ॥

अथ चक्षुःप्रभृतिपडिन्द्रियाणामत्रैव लोकोत्तरप्रविनियतविषयान् वर्णयति-

द्रष्टव्येषु किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः ।
किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपु-
र्ध्येयं किं नवयौवनं सहृदयैः सर्वत्र तद्विभ्रमाः ॥ ७ ॥

---

१ परिष्यन्दः। २ किमिद। ३ मृगदृशां। ४ तत्तनु० इति च पाठांतरम्।

द्रष्टव्येष्विति ॥ अत्र प्रश्नोत्तरमालिकयान्वयः कार्यः । द्रष्टुं योग्यानि द्रष्टव्यानि तेषु दर्शनीयेषु वस्तुषु । योग्यार्थे तव्यप्रत्ययः । श्रेष्ठं वस्तु किमिति प्रश्नः । प्रेमप्रसन्नमनुरागविकसितं प्रेमदायीत्यर्थः । "द्रवीभूतं मनो यत्र दर्शने प्रेमदायिनि ।" इति लक्षणात् । मृगदृशस्तरुण्याः मुखं वदनमित्यर्थः । एवमुत्तरत्रापि चक्षुःप्रीतिकरत्वादि भावः । घ्रातव्येषु आघ्रातव्येषु किमुत्तममिति प्रश्नः । तदास्यपवनः तस्यास्तरुण्याः आस्यपवनो मुखमारुतः । तस्यैव घ्राणतर्पणत्वादिति भावः । यद्यपि घ्राणेन्द्रियविषयो गन्धः न तु पवनस्तथापि तस्याः पद्मिनीजातित्वात्तदास्यगन्धस्य तस्य संक्रमणाद्वीणाः श्रूयन्ते भेर्यः श्रूयन्ते पुष्पाण्याघ्रायन्त इत्यादिवद्गन्धसम्बन्धिनि पवने तद्धर्मस्योपचरितत्वान्न विरोधः । श्राव्येषु श्रोतव्येषु । अत्र योग्यार्थे यत्प्रत्ययः । एवमुत्तरत्रापि । उत्तमं किं ? तद्वचः तस्यास्तरुण्या वचः मृदु मधुरभाषणम् । तस्यैव श्रवणानन्दकरत्वादिति भावः । स्वाद्येष्वनुभवयोग्येषु उत्तमं किं ? तस्या ओष्ठः पल्लव इव तस्य रसः । अधरामृतमित्यर्थः । तस्यैव रसनेन्द्रियतृप्तिहेतुत्वादिति भावः । स्पृश्येषु स्पर्शनयोग्येषु वस्तुषु उत्तमं किं ? तस्या वपुः कुसुमसुकुमारशरीरमित्यर्थः । तस्यैव निरुपमत्वागिन्द्रियसौख्यावहत्वादिति भावः । उत्तमं ध्येयं ध्यानार्हं किं ध्यातव्येष्विति शेषः । नवयौवनं तरुणीनवतारुण्यमेव तस्यैवात्यन्तमनोरञ्जकत्वादिति भावः । अथ सर्वदा मुख्यं ध्येयमाह—सहृदयैः हृदयालुभिः रसिकजनैरित्यर्थः। सर्वत्र सर्वदेशेषु सकलकालेषु वा तस्यास्तरुण्या विभ्रमा विलासाः ध्येया इति शेषः । अत्र तत्तत्प्रसिद्धविषयाणामेकत्र समष्टिवर्णनान्महान् शृङ्गारपरितोषातिशय उक्तः । एतेनास्या लोकोत्तरमाभिरूप्यं सूच्यते । तथा चोत्तमविषयाकांक्षिभिर्विशिष्टतरुणीसम्भोग एव कर्तव्य इति फलितार्थः । अत्र प्रश्नोत्तरयोश्चातुर्यातिशयार्थमसकृन्निबन्धनादुत्तरालङ्कारभेदः । "उत्तरात्प्रश्न उन्नेयो यत्र प्रश्नोत्तरे तथा । यद्धुथा च निबध्येते तदुत्तरमुदीर्यते ॥" इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

रसिकोंके देखने योग्य वस्तुओंमें उत्तम वस्तु क्या है ? मृगनयनी नायिकोंका प्रेमसे प्रसन्नवदन, सूंघनेकी वस्तुमें उनके मुखकी भाफ सुननेमें मधुरवाणी, स्वादिष्ठ वस्तुमें उनके अधरपल्लवका रस, स्पर्शकी वस्तुमें उनका शरीर और ध्यान करनेके योग्य उनका यौवन और विलास है ॥ ७ ॥

अथासां मुखाद्यलङ्करणवर्णनद्वारा सकललोकसम्मोहकत्वमाह द्वाभ्याम्—

एताश्चलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुरपराजितराजहंस्यः।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ८ ॥

एता इति ॥ चलन्त्यौ गतिवैचित्र्याद्वलमाने ये वलयसंहतिमेखले वलयसंहतिः कङ्कणश्रेणिः। मेखलाशब्देन काञ्चीवाचिना तान्नियद्धाः किङ्किण्यो लक्ष्यन्ते। तदुत्थस्तदुत्पन्नो यो झङ्कारः झणझणस्वेन नूपुराभ्यां मञ्जुलनिनादमञ्जीराभ्यां च पराजितास्तिरस्कृता राजहंस्यः कलहंसाङ्गना याभिस्ताः कलनादसुन्दरमन्दगमनराजहंसरमणीया इत्यर्थः। "राजहंसो नृपश्रेष्ठे कादम्बकलहंसयोः।" इति विश्वः। "जातेरस्त्रीविषयादयोपधात्" इति ङीप्। शैषिकस्य षपो वैभाषिकत्वान्न प्रयोगः। एताः पूर्वोक्तास्तरुण्यः किञ्चिदूनविंशतिवार्षिकाः स्त्रिय इत्यर्थः। वित्रस्ता चकिता मुग्धा प्रौढा च या हरिणी कुरङ्गी तत्सदृशैस्तद्विलोकननिभैरित्यर्थः। कटाक्षैरपाङ्गवीक्षणैः। एतेनैतासां पद्मिनीत्वं सूच्यते। "चकितमृगदृगाभे प्रान्तरक्ते च नेत्रे" इति लक्षणात्। कस्य मनो विवशं सम्मोहितं न कुर्वन्ति कुर्वन्त्येवेत्यर्थः। तरुणीलक्षणमुक्तं रतिरहस्ये। "बाला स्यात् षोडशाब्दा तदुपरि तरुणी त्रिंशतेर्यावदूर्ध्वं प्रौढा स्यात् पञ्चपञ्चाशदवधि परतो वृद्धतामेति नारी।" वयोलक्षणमुक्तम्। "निदाघशरदोर्बाला पथ्या विषयिणो भवेत्। हेमन्ते तरुणी योग्या प्रौढा वर्षावसन्तयोः। सततं सेव्यमानापि बाला प्रथयते बलम् ॥" इति। अत्र राजहंसीपराजयस्य सादृश्यपर्यवसानादेका उपमा। हरिणीसदृशैरित्यत्र चान्या। अनयोः परस्परनैरपेक्ष्यात्सजातीयसंसृष्टिः। एताश्च मध्यमनायिकाः। "लज्जामन्मथमध्यस्था मध्यमोदितयौवना।" इति लक्षणात्। वसन्ततिलकावृत्तम् ॥ ८ ॥

ऐसी स्त्रियां जिसके चंचल कंकणोंके शब्द क्षुद्रघंटिका (काँधनी) की ध्वनि और नूपुरके झनकारने राजहंसिनियोंकी चाल जीत ली है

---

१ एताः स्खलद्‌। २ स्वाहत च इति पाठान्तरम्।

वें तरुणी भडकी हारिणीके समान नेत्रपात कर किसके मनको विवश नहीं करतीं ॥ ८ ॥

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ ९ ॥

कुंकुमेति ॥ कुंकुमपङ्केन काश्मीरजकर्दमेन । "अथ कुंकुमम् । काश्मीरजन्माग्निशिखम्, पङ्कोऽस्त्री शादकर्दमौ" इति चोभयत्राप्यमरः । अथवा घुसृणापरपर्यायकुंकुमकुसुमरञ्जितचन्दनपङ्केन । "कुंकुमं घुसृणम्" इत्यभिधानरत्नमालायाम् । यद्वा कुंकुमेन चम्पकेन च सिन्दूरापरनामशृङ्गारभूषणाख्यद्रवद्रव्यविशेषेण च । "सिन्दूरं नागसम्भवम् । चीनपिष्टं च गान्धं पङ्कं शृङ्गारभूषणम्" इत्यमरः । कलङ्कितः चिह्नितो देहो यस्याः सा कुंकुमसिन्दूरादिरञ्जकद्रव्यशृङ्गारिताकारेत्यर्थः । अत एव गौरयोररुणयोर्यद्वा पाण्डिमत्वात् श्रीफलसच्छाययोः । "स्तनयुगलमनिन्द्यं श्रीफलश्रीविडम्बि" इति लक्षणात् । पयोधरयोः कुचकुम्भयोः कम्पिताश्चलिता हारा मुक्तावल्यो यस्याः सा तथोक्ता । नूपुरौ मञ्जीरौ एव हंसौ हंसाविव नूपुरौ वा ताभ्यां रणन्ती शब्दायमाने पदे एव पद्मे, पद्मे इव पदे वा यस्याः सा अत एव रूपकोपमयोः साधकबाधकप्रमाणाभावात्सन्देहसंकरः । रामा सुन्दरी भुवि कं पुरुषं न वशीकुरुते न स्वायत्तीकुरुते । जितेन्द्रियमपि स्वायत्तीकुरुत एवेत्यर्थः । "वश आयत्ततायां च" इति विश्वः । अभूततद्भावे च्विः । "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञायां "कुगतिप्रादयः" इति समासः । अत्र सुसुपेत्यनुवर्तते । अत्र हाराणां कम्पितत्वविशेषणेन पयोधरयोरत्यन्तपटुत्वं सूच्यते । अन्यथा कम्पनायोगात् । तेन चात्युत्कटयौवनसम्पत्तिश्च गम्यते । पयोधरयोश्च गौरत्वविशेषणेन रूपसमृद्धिर्व्यज्यते । एतेनालम्बनगुणलाभ उक्तः । एवं कुंकुमपङ्केत्यनेन तटस्थोद्दीपनभावः कथितः । तथा हारनूपुरात्मकालम्बनालङ्करणमप्युट्टंकितम् । रणत्पदपद्मेत्यनेन सूचितो लीलागतिविशेषरूपानुभावश्च । तदेवंविधसामग्रीसमुल्लसितेन "आभिरूप्यमकाठिन्यमङ्गानां चातिमार्दवम् । एवमादिगुणावस्था प्रथमे यौवने भवेत् ॥" इत्युक्त्या "कृताधराङ्गसंस्कारा सखीकेलिषु लालसा ।" इत्युक्तचेष्टाविशिष्टयौवनपरिपूर्णेन रमयतीति रामेति व्युत्पत्त्या लोकोत्तरलावण्यसम्पन्नेन आलम्बनविभावेनोदिते शृंगाररसार्णवे को वा न निमज्जतीति भावः । अत्र श्लाघ्यविशेषणयोगादुदात्तता नाम गुणः । लक्षणं तूक्तम् । तथात्यन्तसुकुमारार्थसन्दर्भितत्वात्कैशिकी वृत्तिः । "अत्यन्त

सुकुमारार्थसन्दर्भा कैशिकी मता ।" इति लक्षणात् । दोधकवृत्तम् । "दोधकवृत्तमिदं भभभा गौ" इति लक्षणात् ॥ ९ ॥

केशर और चन्द्रनसे जिसका देह शोभित है गोरे स्तनोंपर हार झूमता है और चरणकमलमें हंससे नूपुर बोलते हैं ऐसी सुन्दर स्त्री इस पृथ्वीपर किस पुरुषका मन नहीं मोह लेती ॥ ८ ॥

अथैतासां प्रागल्भ्यं वर्णयति–

नूनं हि ते कविवरा विपरीतवांचो
ये नित्यमाहुरबला इति कामिनीस्ताः ।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः ॥१०॥

नूनमिति ॥ ते कविवराः कवीश्वराः विपरीतवाचो व्यत्यस्तवचनाः नूनं सत्यं हि । ते क इत्याशङ्कायामाह । ये कविवरास्ताः प्रसिद्धाः कामिनीरबला दुर्बला इति नित्यमाहुः । ब्रुवते· वर्णयन्तीत्यर्थः । त इति सम्बन्धः । "ब्रुवः पञ्चानामादित आहो ब्रुवः" इति उसादेशः ब्रुव आहादेशश्च । कथं विपरीतवाक्यमित्याशंक्य तासां प्रागल्भ्यं साधयति । याभिः कामिनीभिः विलोलतरा अतितरलास्तारकाः कनीनिका येषु ते तथोक्ता ये दृष्टिपाताः लोचनप्रसारास्तैः दृक्प्रेरणैः । "कर्तृकरणयोस्तृतीया" इति तृतीया।"तारकाक्ष्णः कनीनिका" इत्यमरः । शक्रादय इन्द्रादयोऽपि किमुतान्य इति भावः । विजिताः निर्जिताः स्वायत्तीकृता इत्यर्थः । तास्तु कामिन्यः कथमबलाः कुतो वा दुर्बलाः किंतु प्रबला एवेत्यर्थः।वीक्षणमात्रेणैवेन्द्रादिजयिनीनां बलिष्ठत्वं किं वक्तव्यमत एतासां दौर्बल्यप्रतिपादकाः कवय एव दुर्बलवाचो न तु ता इति भावः।अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थसमर्थकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः।"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।" इति लक्षणात् । वसन्ततिलका वृत्तम् ॥१०॥

वे श्रेष्ठ कवि निश्चित उलटी समझवाले हैं जिन्होंने स्त्रियोंका नाम अबला रक्खा है । जिनकी चंचल पुतलियोंके कटाक्षसे इन्द्रादिकभी हार मानते हैं भला कहो तो वे अबला कैसे हैं ॥ १० ॥

---

१ बोधा । २ कामिनीनाम् इति च पाठान्तरम् ।

अथ कामदेवस्य कामिनीकिंकरत्वमुत्प्रेक्षते—

नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः ।
यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ११ ॥

नूनमिति ॥ मकरध्वजः कामदेवस्तस्याः प्रसिद्धायाः पूर्वोक्तायाः वा सुभ्रु कामिन्याः जातावेकवचनम् । सुभ्रुवामित्यर्थः। आज्ञां करोतीत्याज्ञाकरः किङ्कर "कृञो हेतु०" इत्यादिना टप्रत्ययः । नूनमित्युत्प्रेक्षायाम् । कुतः यतः कारण तस्याः सुभ्रुवो नेत्रसंचारेण दृष्टिप्रसारेण सूचितेषु संज्ञापितेषु प्रवर्तते । य लोके स्वामिदृष्टिसूचिते भृत्यः प्रवर्तते तद्वदित्यर्थः । अतः कामिनीनां नूनं किङ्कर इति भावः । कामिनीकटाक्षमात्रेणैव जनस्य मन्मथावेशसंभवादियं त्प्रेक्षा । सा च नूनमिति व्यञ्जकसद्भावाद्वाच्या । तदुक्तम् । " मन्ये शङ्के ध्रु नूनं प्राय इत्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥" इति । एतेनैतासामप्रतिहतजगद्वशीकरणसामर्थ्यरूपं व्यज्यते। अनुष्टुप् ॥११॥

कामदेव निश्चय करके स्त्रियोंका आज्ञाकारी सेतवक है,क्योंकि जि वह आखोंसे सैन कर देती हैं उसी पुरुषको वह दबा लेता है ॥११॥

अथ रागिणः श्लेषवैचित्र्यात् कामिनीप्रशंसापरं वचनं संबोधनमभिधा द्वाभ्याम्—

केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः ।
मुक्तानां सतताधिवासरुचिरौ वक्षोजकुम्भाविमा-
वित्थं तन्वि वपुः प्रशान्तमपि ते रागं करोत्येव नः ॥ १२॥

केशा इति ॥ केशाः शिरोरुहाः संयमिनः संयताः । सम्यक् नियमवन्तश्च लोचने अपि श्रुतेः परं पारं कर्णान्तविश्रान्तत्वं वेदान्तपरिशीलनतात्पर्यं गम्यते। अन्तर्वक्त्रं वक्त्राभ्यन्तरमपि स्वभावतो निसर्गाच्छुचिभिः शुभैः पवित्रैश्च द्विजानां विप्राणां च । " दन्तविप्राण्डजा द्विजाः " इत्यमरः । गणैः कीर्णं व्याप्तम् । इमावेताविति हस्तनिर्देशः । वक्षोजकुंभौ कुचकुंभौ च मुक्तानां

१ रुचिरं । २ कुम्भद्वयमित्थम् । ३ क्षोभं इति च पाठान्तरम् ।

मौक्तिकहाराणां जीवन्मुक्तानां च सतताधिवासेन निरन्तरावस्थानेन सन्ततनिवासेन च रुचिरौ। "मुक्ता तु मौक्तिके मुक्तः, प्राप्तमुक्तौ तु मोचितः।" इत्युभयत्रापि विश्वः। अतः हे तन्वि, इत्थमुक्तप्रकारेण ते वपुः शरीरं प्रशान्तं प्रसन्नं वैराग्यसाधनसंपत्तिमदपीति यावत्। "वा दान्त०"इत्यादिना निपातः। नोऽस्माकं रागमनुरक्तिं संभोगाभिलापमेवेति यावत्। करोत्युत्पादयति न तु वैराग्यमिति विरोधः। स चोक्तरीत्या आभासितत्वाद्विरोधाभासोऽलंकारः। "आभासत्वे विरोधस्य विरोधाभास इष्यते।" इति लक्षणात्। स च श्लेषप्रतिभोत्थापितयोरङ्गाङ्गिभावेन संकरः। लोचने अन्तर्वक्त्रमित्यत्र प्रगृह्यत्वात्प्रकृतिभावः।" ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञा। वृत्तमुक्तम्॥ १२॥

केश संयमी हैं अर्थात् सुगंधित तेलयुत कंघीसे संवारे हैं नेत्र दोनों श्रुतिके पार हो गयेहैं अर्थात् कानोंतक अत्यन्त विशाल हैं मुख अन्तरमें सहजही शुचि अर्थात् निमल द्विजोंके समूहसे भरा अर्थात् दाँतोंकी पंक्तिके किरणसे चमकता और दोनों स्तनकलश मुक्ताका वास निरंतर अर्थात् मोतियोंकी मालासे शोभित स्त्री सूक्ष्मांगी! तेरा शरीर शांत स्वरूपभी है अर्थात् संयमी नियमी श्रुति वेदका पारगामी शुचि पवित्र द्विज ब्राह्मण और मुक्त विरक्त पुरुप इनसे युक्त हैं, पर मुझे तो अनुरागही उत्पन्न करता है॥ १२॥

मुग्धे धानुष्कता केयमपूर्वा त्वयि दृश्यते।
यया विध्यसि चेतांसि गुणैरेव न सायकैः॥ १३॥

मुग्धे इति॥ धनुःप्रहरणमस्य धानुष्को धन्वी। "प्रहरणम्"इति ठक्। "इसुसुक्तान्तात्कः" "धन्वी धनुष्मान् धानुष्कः" इत्यमरः। तस्य भावस्तत्ता। हे मुग्धे सुन्दरि! "मुग्धः सुन्दरमूढयोः" इत्यमरः। यद्वा हे उदययौवनभावे इति। त्वयि अपूर्वा अदृष्टचरा असाधारणीति यावत्। धानुष्कता दृश्यते। इयं धानुष्कता का कीदृशी न ज्ञायत इत्यर्थः। कुतो यया धानुष्कतया हेतुना चेतांसि युवजनमनांसि दुर्लक्ष्याण्यपीति भावः। गुणा मौर्व्यः रूपयौवनादयश्च तैरेव विध्यसि सम्प्रहरसि।सायकैर्बाणैस्तु न विध्यसि। यतो लोके

१ यथा हरसि शंत पाठान्तरम्।

धानुष्काः प्रौढा एव सुलक्ष्याण्येव लक्ष्याणि बाणैरेव विध्यन्ति । त्वं तु मुग्धा दुर्लक्ष्याण्यपि लक्ष्याणि मौर्वीभिरेव विध्यसीति कृत्वा त्वदीयधानुष्कताया अ-त्वादज्ञेयत्वमिति भावः । स्त्रीणां रूपयौवनगुणसंपत्तिरेव प्रहरणसाधन-फलितार्थः । अत्र पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थितत्वाद्वाक्यार्थहेतुकं काव्य-लिङ्गम् तच्च गुणयोः श्लेषभित्तिकाभेदाध्यवसायमालातिशयोक्तिनिर्व्यूढमित-योरंगांगिभावेन संकरः । तेन च प्रसिद्धाद्धानुष्कादुपमानादुपमेयीभूतमुग्ध-यामाधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलङ्कारध्वनिः ॥ १३ ॥

हे सुंदरी ! तेरी यह धनुषविद्यामें कुशलता विचित्र देख पडती है जो चित्तको गुण अर्थात् प्रत्यंचा वा चतुराईहीसे बींधती है बाणसे नहीं ॥ १३ ॥

अथाविंशतिसमाप्ति कामिन्युद्देशेनोक्तान्यत्यन्तानुरागिणां प्रशंसावचनान्याह

सति प्रदीपे सत्यग्नौ सत्सु तारामणीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १४ ॥

सतीति ॥ प्रदीपे अर्थप्रकाशे दीपार्चिषि सति विद्यमानेऽपि अग्नौ तथा वह्नौ च सत्यपि । सत्यर्क इति पाठे त्रिलोकप्रकाशके सूर्ये सत्यपि । त-तारामणीन्दुषु तिमिरनिरासकत्वेन प्रसिद्धेषु नक्षत्रपद्मरागादिमाणिक्यचन्द्रे-सत्स्वपि । तया प्रसिद्धया पूर्वानुभूतया वा मृगशावस्य बालहरिणस्येवाक्षिणी यस्यास्तया प्रियतमया विना । "बहुव्रीहौ सक्थ्यक्ष्णोः स्वांगात् षच्, षिद्गौ-रादिभ्यश्च" इति ङीप् । इदं जगत् तमोभूतमन्धकारमयं लक्ष्यत इति शेषः तस्या एव मम नयनज्योतिष्ट्वादिति. भावः । अत्रान्धकारनिराकरणसमर्थत्वेन प्रसिद्धे प्रदीपादिकारणसमुदाये सत्यपि तन्निरासरूपकार्यानुत्थानाद्विशेषोक्त्य-लङ्कारः । " तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते । " इति लक्षणात् । तथा प्रदीपादिसद्भावेऽपि तमोभूतत्वमिति विरोधश्च व्यज्यते । तेन चास्य महामोहा-न्धत्वं वस्तु गम्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १४ ॥

दीपक अग्नि तारे सूर्य और चन्द्रमा ये सब हैं परन्तु एक मृगन-यनी स्त्री विना मुझे जब जगत्में अंधेरा है ॥ १४ ॥

---

१ तारार्कचन्द्रेषु इति पाठान्तरम् ।

उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागाधिष्ठितमोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम्।
सौभाग्याक्षरमालिकेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावलिः केन वा ॥ १५॥

उद्वृत्त इति ॥ उद्वृत्तोऽत्यन्तवर्तुल उत्पथगतश्च। एष इति पुरोवर्तिनो हस्तनिर्देशः। स्तनभारश्च। तरले लीलाविलोले चपले चेति गम्यते। नेत्रे च। चले रेचितादिविलासचंचले स्थैर्यविहीने भ्रूलते च। रागेण लौहित्येन मात्सर्येण चाधिष्ठितं तद्भूयिष्ठमित्यर्थः। "रागश्च रक्तो मात्सर्ये क्लेशादौ लौहितेष्विति।" इत्युभयत्रापि शाश्वतविश्वप्रकाशौ। इदमिति निर्देशः। ओष्ठपल्लवमधरकिसलयं चेत्येतानीति शेषः। व्यथां मनःपीडां कुर्वन्तु नाम। नामेति कुत्सायाम्। खलानां परपीडाकरणस्य स्वाभाविकत्वादिति भावः। किंतु पुष्पायुधेन कामदेवेन स्वयं स्वहस्तेन लिखिता सौभाग्याक्षरमालिका सौभाग्यव्यञ्जकपुण्यवर्णपंक्तिरिव स्थितेत्युत्प्रेक्षा। तथा मध्यस्था अवलग्नप्रदेशावलग्ना तटस्थापि च सा रोमावलिः रोमराजिः केन वा हेतुना अधिकं तापं करोति मनः संतापयति। विशिष्टतटस्थस्य परसंतापकरणानौचित्यादिति भावः। तत्र पूर्वार्धे उद्वृत्तत्वादिपदार्थानां श्लेषभंग्या स्वाभाव्येन च विशेषणगत्या पीडाकरणपदार्थं प्रति हेतुत्वकथनात्पदार्थहेतुकमेकं काव्यलिङ्गम्। उत्तरार्धे तु तटस्थपदार्थस्य श्लेषभंग्यैव केन सन्तापयतीत्याक्षेपपदार्थं प्रति हेतुत्वकथनादपरं च। तच्चोत्प्रेक्षया सापेक्षितत्वात्संकीर्णं सत्पूर्ववाक्यकाव्यलिङ्गेन नैरपेक्ष्यात्संसृज्यत इत्यनयोः सजातीयसंसृष्टिः। एतेन स्तनभारादेर्लोकोत्तरलावण्यसंपन्नत्वमत्यंतजनसंमोहकत्वेन सूच्यते। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

उन्नत स्तनके भार चञ्चल नेत्र और भ्रूलता और राग भरे नवीन पत्तोंसे दोनों अधरपल्लव ये रागसे अंधे रसिकोंके शरीरमें पीडा करें तो करें क्योंकि कामदेवके हाथकी लिखी तेरे मस्तकमें सौभाग्यके अक्षरोंकी पंक्ति है परन्तु मध्यस्थ रोमावली क्यों अधिक ताप देती है तात्पर्य यह कि, उन्नत, चंचल, रागवान् प्रायः पीडा देता ही है परन्तु

---

१ यद्वृत्तः उद्धृतः। २ रागांधेषु तदोष्ठ। ३ पंक्तिकेव, पांक्तिरेव। ४ सा इति च पाठां०

मध्यस्थ जिसका काम छुडा देनेका है वह रोमावली क्यों अधिक पीडा देती है अर्थात् विपरीत करती है ॥ १५ ॥

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः ।
कराभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ १६ ॥

मुखेनेति ॥ चन्द्रकान्तेनेन्दुसुन्दरेण चन्द्रकान्तमणिरूपेण चेति गम्यते । मुखेन च । महानीलैरतिमेचकैः सिंहलद्वीपसंभवेन्द्रनीलैश्च शिरोरुहैः कुन्तलैश्च । " सिंहलस्याकरोद्भूता महानीलास्तु ते स्मृताः । " इति भगवानगस्त्यः । पद्मस्य राग इव रागो ययोस्तौ ताभ्यां पद्मरागरूपाभ्यां च कराभ्यां च सा सुन्दरी रत्नमयी रत्नरूपेव रेजे । " तत्प्रकृतवचने मयट् " ' टिड्ढाणञ्० ' इत्यादिना ङीप् । अनुष्टुप् ॥ १६ ॥

चन्द्रकांत मुख, महानील केश और दोनों पद्मराग हाथोंसे ऐसी रत्नमय वह स्त्री शोभा देती है अर्थात् चन्द्रकान्त, महानील, पद्मराग, तीन प्रकारकी मणिरूप स्त्री शोभित होती है ॥ १६ ॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १७ ॥

गुरुणेति ॥ गुरुणा दुर्भरेण गीष्पतिरूपेण च । " गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे । " इत्युभयत्रापि शब्दार्णवः । स्तनभारेण च । भास्वता प्रकाशवता भास्करेण च । " भास्वान् भास्वरसूर्ययोः " इति विश्वः । मुखमेव चन्द्रस्तेन च शनैश्चराभ्यां मन्दगमनाभ्यां शनैश्चराख्यग्रहाभ्यां च सा ग्रहमयीव रेजे । प्रक्रिया पूर्ववत् । अत्र श्लोकद्वयेऽपि श्लेषमहिम्ना रत्नग्रहमयत्वोत्प्रेक्षणात् श्लेषसंकीर्णेयमुत्प्रेक्षा तया चास्या लोकोत्तराकाररूपलावण्यसौन्दर्यकान्तिविदग्धभाग्यसौभाग्यादिसकलकल्याणगुणाभिरामत्वं गम्यते । एतच्च मदीयशृङ्गारनाटके रुक्मिणीवल्लभव्याख्याने निधिमयी ग्रहमयीत्यत्र विस्तरेण प्रपञ्चितमितीहोपरम्यते ॥ १७ ॥

स्तनोंके भारसे गुरु, प्रकाशमान मुखसे चन्द्र और दोनों चरणोंसे मन्दगामी ग्रहमयी वह स्त्री शोभा देती है अर्थात् गुरु बृहस्पति मन्दगामी शनि चन्द्र प्रसिद्धही हैं इन ग्रहोंका नामभी प्रकाशित है॥ १७॥

१ पाणिभ्यां इति पाठान्तरम् ।

तस्याः स्तनौ यदि घनौ जघनं चं हारि
वक्त्रं च चारु तव चित्त किमाकुलत्वम् ।
पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १८ ॥

तस्या इति ॥ तस्यास्तरुण्याः स्तनौ निबिडौ यद्यपि जघनं कटिपुरोभागश्च हारि-मनोहारि । "स्त्रीकट्याः क्लीबे तु जघनं पुरः" इत्यमरः । वक्त्रं च चारु मनोज्ञं यद्यपि हे चित्त, तव आकुलत्वं लोलुपत्वं किं किमर्थ मास्त्वित्यर्थः। तावन्मात्रेण सम्भवादिति भावः । तर्हि किं कर्तव्यमित्यत आह । तेषु स्तनादिषु तव वाञ्छा संभोगाभिलाषोऽस्ति यदि वर्तते चेत् तर्हि पुण्यं सत्कर्म कुरुष्व समाचर । कुतः पुण्यैर्विना समीहितार्था वाञ्छितार्थाः न भवन्ति हि खलु । ज्योतिष्टोमादिसत्कर्माचरणेन रम्भासम्भोगवत् केनचित् पुण्यविशेषेण तवापि तत्सम्भोगः सम्भाविष्यतीति भावः । अर्थान्तरन्यासालंकारः । वसन्ततिलकावृत्तम् ॥ १८ ॥

जिस स्त्रीके स्तन पुष्ट और जघन विहार करने योग्य हैं और मुख सुन्दर है उन्हें देखकर हे चित्त! क्यों व्याकुल होता है यदि उनमें तेरी वांछा होय तो पुण्य कर क्योंकि, पुण्य विना मनोरथ सिद्ध नहीं होते ॥ १८ ॥

अथ विलासवर्णनं निगमयति-

इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरत-
प्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः ।
चिरं चेतश्चोरा अभिनवविकारैकगुरवो
विलासव्यापाराः किमपि विजयन्ते मृगदृशाम् ॥ १९ ॥

इम इति ॥ तारुण्यश्रियो यौवनसम्पदः नवपरिमलाः नूतनपरिमलप्रायाः । तदुद्दविभञ्जका इत्यर्थः । यद्वा तारुण्यश्रिया नवः अपूर्वः परिमलः सौभाग्य-

१ विहारि इति पाठान्तरम् ।

विशेषो येषां ते तथोक्ताः । प्रौढसुरतं प्रचण्डरतिः तत्र यः प्रतापः सामर्थ्यं तस्य प्रारम्भाः उपक्रमाः । स्मरस्य जगज्जित्वरस्य मन्मथस्य विजयदाने प्रतिभुवो लग्नकाः । " स्युर्लग्नकाः प्रतिभुवः " इत्यमरः । यथा प्रतिभुवः अधमर्णाद्धनमुद्धृत्य उत्तमर्णाय दातुं समर्था इत्यर्थः । चिरं चिरकालमारभ्य चेतश्चोराश्चित्ताकर्षका मनोहरा इति यावत् । अभिनवविकारैराकस्मिकभयकम्पानुकरणादिप्रत्ययैर्यौवनविकारैरेकगुरवोऽत्यन्तभूयिष्ठमृगदृशां तरुणीनां सम्बन्धिनः इमे पूर्वोपवर्णिता विलासव्यापाराः शृङ्गारचेष्टाविशेषाः किमप्यनिर्वाच्यतया विजयन्ते सर्वोत्कर्षेण वर्तन्ते । " विपराभ्यां जेः " इत्यात्मनेपदम् । शिखरिणीवृत्तम् ॥ १९ ॥

यौवनश्रीके अपूर्व परिमलप्राय, प्रचंड रतिसंबंधी सामर्थ्यके आरंभ, मन्मथको विजय देनेमें प्रतिभू ( जामिन ), चिरकालसे चित्तके चोर आकस्मिक भयकंपादि नूतन यौवनविकारोंसे युक्त ऐसे ये तरुण स्त्रियोंके विलास ( शृङ्गारचेष्टा ) उत्कर्षतासेही वर्तते हैं ॥ १९ ॥

प्रणयमधुरा प्रेमोद्गारा रसाश्रयतां गताः
फणितिमधुरा मुग्धप्रायाः प्रकाशितसंमदाः ।
प्रकृतिसुभगा विस्रंभार्द्राः स्मरोदयदायिनो
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ २० ॥

प्रणयेति ॥ " विस्रम्भे परमां काष्ठामारूढे दर्शनादिभिः । येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥ " इत्युक्तलक्षणः स्नेहः प्रणयशब्देन विवक्षितस्तेन प्रणयेन मधुराः सन्तापहराः । " शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् " इति लक्षणात् । प्रेम्णानुरागविशेषेणोदारा रम्या मनोहरा इति यावत् । रसाश्रयतां शृङ्गारास्पदत्वं गताः । शृङ्गाररसप्रसरोल्लसिताः इत्यर्थः फणित्या सन्दर्भविशेषेण मधुरा माधुर्यगुणयुक्ताः अमृतप्राया इत्यर्थः । मुग्धप्रायाः सौकुमार्यभरिताः श्रुतिरञ्जका इत्यर्थः । प्रकाशितोऽभिव्यञ्जितः संमदः संभोगौत्सुक्यं यैस्ते तथोक्ताः । प्रकृतिसुभगाः स्वभावरुचिरा विस्रंभार्द्रा विश्वासपरिप्लुता अत एव स्मरोदयदायिनो जितेन्द्रियस्यापि मन्मथोद्रेकावहाः मृगीदृशां सम्बन्धिनः स्वैरालापा नर्मोक्तय इति यावत् । किमपि हरन्ति । यद्वा रहसि स्वैरा-

१ प्रेमोद्गारा । २ रसादवसरास्तथा । ३ भणिति । ४ विस्रंभार्द्रा इति च पाठान्तरम् ।

लापा इत्यन्वयः । किमपि हरन्ति । यद्वा अनिर्वाच्यतया मनोहरा भवन्तीत्यर्थः । अत्र श्लोकद्वयेऽपि समर्थसहिष्णोः शृङ्गारस्य पाठसमयेऽप्यास्वाद्यमानत्वादन्तर्बहिःस्फुरणेन । "द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः ।" इति लक्षणात् । तथा श्लेषप्रसादादयो दण्डयाचार्योक्ता दश प्राणाश्च प्रायेणात्र सन्ति निपुणैरुन्नेया इति संक्षेपः । प्रकरणेऽस्मिन् प्रायशो नायका अनुकूला दक्षिणाश्चानुसंधेयाः । "एकायत्तोऽनुकूलः स्यात्तुल्योऽनेकत्र दक्षिणः ।" इति लक्षणात् । हरिणीवृत्तम् ॥ २० ॥

सुशीलतासे मीठे, प्रेमरसकी पूर्णतासे ढीले, स्वरसे सुखदाई सुननेमें सुंदर, आनन्द प्रकाश करनेवाले, सहजही सुडौल, विश्वासके योग्य अर्थात् कामदेवके उदय करनेवाले ऐसे एकांतमें स्त्रियोंके स्वच्छन्द सुभाषण मनको हरण करलेते हैं ॥ २० ॥

अथ सम्भोगविप्रलंभभेदविभिन्नयोः शृङ्गारयोर्मध्ये सम्भोगशृङ्गारं सप्रपञ्चमुत्तरत्र वर्णयिष्यन्नादौ विप्रलंभशृङ्गारमेकेनाह—

विश्रम्य विश्रम्य वनद्रुमाणां
छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन
निवारयन्ती शशिनो मयूखान् ॥ २१ ॥

विश्रम्येति ॥ काचित्तन्वी कृशाङ्गी वनद्रुमाणां छायासु चन्द्रातपरहिताधःप्रदेशेषु विश्रम्य विश्रम्य पुनः पुनः श्रममपनीय । वीप्सायां द्विर्भावः । "छाया त्वनातपे कान्तौ" इति विश्वः । विचचार सञ्चचार । केलिवनसञ्चारस्य विरहिजनविनोदोपायत्वादिति भावः । कथंभूता सती करोद्धृतेन हस्तोत्क्षिप्तेन स्तनोत्तरीयेण कुचकुम्भाच्छादनपटाञ्चलेन शशिनश्चन्द्रस्य मयूखान् किरणान् आतपानिति यावत् । निवारयन्ती निराकुर्वन्ती ग्रीष्मोष्मणो व्यजनेनेवेति भावः चन्द्रकिरणानां विरहिणीजनसन्तापकरत्वात्तन्निवारणोक्तिः । एतेन दशावस्थापक्षे षष्ठी मन्मथावस्था तथा च चतुर्थी जागरावस्था । तथोत्तरीयेण शशिमयूखानामनिवारणीयत्वविवेकाभावाच्चित्तविभ्रमप्रतीतेः । कामशास्त्रोक्तदशावस्थापक्षे दशमी उन्मादावस्था सूच्यते । तन्वीत्यनेन कार्श्यावस्था च कथिता ।

तदुक्तम्—" दृङ्मनःसङ्गसङ्कल्पो जागरः कृशतारतिः । ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दश ॥ " इति । कामशास्त्रोक्तास्तु—" चक्षुःप्रीतिर्मनःसङ्गः सङ्कल्पोऽथ प्रलापिता । जागरः कार्श्यमरतिर्लज्जात्यागोऽथ सज्वरः ॥ उन्मादो मूर्छनं चैव मरणं चरमं विदुः ॥ " इति । इयं च विरहोत्कण्ठिता । " चिरयत्यधिकं कान्ते विरहोत्कण्ठितोन्मनाः । " इति लक्षणात् । उपजातिवृत्तम् ॥

वनके वृक्षोंकी छायामें विश्राम लेती २ कोई एक स्त्री हाथसे अपने स्तनोंके आंचलोंको उठाये चन्द्रमाकी किरणोंको रोकती हुई जाती है। यहां कृष्णाभिसारिका नायिका जानो ॥ २१ ॥

अथ सम्भोगशृङ्गारः । स च बाह्याभ्यन्तरभेदेन द्विविधः । वात्स्यायनेनाप्यस्य द्विविधस्यापि प्रकारान्तरेण द्विविधत्वमुक्तम् । " बाह्यमाभ्यन्तरं चेति सुरतं द्विविधं स्मृतम् । तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम् । द्वितीयं सुरतं साक्षान्नानाकरणकल्पितम् ॥ " इति । तत्र प्रथमालिङ्गनरूपं सोपस्करमाह द्वाभ्याम्—

अदर्शने दर्शनमात्रकामा[१]
दृष्ट्वा परिष्वङ्गसुखैकलोला[२] ।
आलिङ्गितायां पुनरायताक्ष्या-
माशास्महे विग्रहयोरभेदम् ॥ २२ ॥

अदर्शन इति ॥ अत्र यत्तच्छब्दाध्याहारेणान्वयः कार्यः । अदर्शने प्रियतमविषयकदर्शनाभावे सति । क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । यथा अदर्शनमश्रवणमभाषणमनुच्चारणमित्याद्यभियुक्तोक्तेः । दर्शनमात्र एव कामोऽभिलाषो यस्याः सा तथोक्ता तावन्मात्राभिलाषिणीत्यर्थः । ततो दृष्ट्वा प्रियतममिति शेषः । परिष्वङ्गसुखे आलिङ्गनजनितसुखे एकं मुख्यं यथा तथा लोला सतृष्णा । " लोलश्चलसतृष्णयोः " इत्यमरः । या आयताक्षीति शेषः । तस्यामायताक्ष्यां कर्णान्तविश्रान्तलोचनायां प्रियतमायां सम्परिष्वक्तायां सत्यां विग्रहयोः शरीरयोः । " शरीरं वर्ष्म विग्रहः " इत्यमरः । अभेदमैक्यमाशास्महे तादृग्गाढालिङ्गनसुखमनुभवितुमभिलाषास्महे इत्यर्थः । तद्यथा । " प्रियया

१ कामाः । २ रसैकलोलाः इति च पाठान्तरम् ।

स्त्रिया स परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेव वायं पुरुषः" इत्यादि श्रुतेः। प्रियतमगाढालिङ्गनपरिष्वङ्गे विगलितवेद्यान्तरत्वेन ब्रह्मानन्दसब्रह्मचारिसुखविशेषसम्भवात्तथाविधालिङ्गनाशंसनं युक्तमेवेति भावः । तदुक्तं रतिरहस्ये—"तत्सौख्यं परतत्त्ववेदनमहानन्दोपमं मूढधीः को वा निन्दति सूक्ष्ममन्मथकलावैचित्र्यमूढो जनः ।" इति । अन्यत्राप्युक्तम्—"प्रौढालिङ्गनचुम्बनामितसुखं प्रच्छन्नवेद्यान्तरम्" इति । वृत्तं पूर्ववत् ॥ २२ ॥

जबतक हम स्त्रीको नहीं देखते तबतक तो देखनेहीकी इच्छा रहती है, देखते हैं तब उससे आलिंगनरसका सुख चाहते हैं और लिपटनेपर यह अभिलाषा रखते हैं कि, यह मृगनयनी हमारे शरीरसे विलग न हो ॥ २२ ॥

एवं परमानन्दानुसन्धायकत्वेन परिष्वङ्गस्यापवर्गरूपत्वमुक्त्वा सम्प्रति स्वर्गरूपत्वमाह—

मालती शिरसि जृम्भणं मुखे
चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मदालसा
स्वर्ग एष परिशिष्ट आगमः ॥ २३ ॥

मालतीति ॥ शिरसि मालती जातिकुसुममालिकेत्यर्थः । "सुमना मालती जातिः" "पुष्पे जातिप्रभृतयः" इत्युभयत्राप्यमरः । "पुष्पमूलेषु बहुलम्" इति लुक् । मुखे जृम्भणं मदनमदजनितजृम्भश्च । "जृम्भस्तु त्रिपु जृम्भणम्" इत्यमरः । यद्वा सम्भोगौत्सुक्यसूचकरागविलासस्फूर्तिश्च । वपुषि कुङ्कुमाविलं काश्मीरजमिश्रितं घुसृणरससम्मृणितं वा । चन्दनं पाटीरपङ्कं च । वक्षसि मदालसा मदेन मन्थरा प्रियतमा गाढालिङ्गितमत्तकाशिनी चेत्येषोऽयं समुदायः स्वर्गः स्वर्गशब्दवाच्य आगम एतद्व्यतिरिक्तस्वर्गाभिधायकशास्त्रं तु परिशिष्टः सारानभिज्ञत्वादमुख्यः स्वर्गपदवाच्यमुख्यार्थबोधशून्य इत्यर्थः । अन्यथैतत्परत्वेनैव वदन्तीति भावः । स्वर्गसमानसौख्यप्रदोऽयमेवेति परमार्थः । रथोद्धतावृत्तम् । "रो नराविह रथोद्धता लगौ" इति लक्षणात् ॥ २३ ॥

---

१ जृम्भणोन्मुखी । २ कुंकुमान्वितम् । ३ मनोहरा । ४ आगतः । इति च पाठान्तरम् ।

शीघ्र खिलनेवाली मालतीकी कलियोंकी माला माथेमें पहिने हो, केशरयुक्त चन्दन अंगमें लगाये हो और सुन्दर प्यारी स्त्रियोंकी छातीसे लिपटाये हों तो यह जानो कि, शेष स्वर्गका भोग यहां प्राप्त हुआ है ॥ २३ ॥

अथाभ्यन्तरसम्भोगं वर्णयितुमुपक्रमते—

प्राङ्मामेति मनागनागतरसं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यममथ प्रध्वस्तधैर्यं पुनः ।
प्रेमार्द्रं स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो
निःसङ्गाङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ २४ ॥

प्रागिति॥प्राक्प्रारम्भे मनागल्पं मामेति मास्तु मास्त्विति निषेधवचनेन अनागतोऽनुत्पन्नो रसोऽनुरागविशेषो यस्मिन् तत् । मौग्ध्यादिति भावः। ततो निषेधानन्तरं जातोऽङ्कुरितोऽभिलाषो वाञ्छा यस्मिन् तत्तथोक्तम् । तदन्वभिलाषानन्तरम् । "अनुर्लक्षणे" इति कर्मप्रवचनीयत्वाद् द्वितीया । नीवीविस्रंसनादिषु मन्दोद्यमनभावो व्रीडा तया सह सव्रीडम् । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । "वोपसर्जनस्य" इति सहभावस्य सत्वम् । अथ व्रीडानन्तरम् श्लथोद्यमं निराकरणे शिथिलप्रयत्नम् । पुनरुद्यमनाभावानन्तरम् । पुनःशब्दोऽत्रानन्तरार्थकः । प्रध्वस्तं विगलितं धैर्यं प्रातिलोम्यलक्षणं यस्मिन् तत्तथोक्तम् । अङ्गीकृताभिमुख्यमित्यर्थः । ततः प्रेमार्द्रं प्रणयरसपरिप्लुतं ततः स्पृहणीया अन्योन्यमभिलषणीया निर्भरा उद्वेलाश्च याः रहःक्रीडा एकान्तकेल्यः । विस्रम्भविहारा इति यावत् । ताभिः प्रगल्भं प्रौढं ततो निःसङ्गनातिबन्धेन अङ्गविकर्षणेन कुचाद्यवयवमर्दनेनाधिकं सुखं परमानन्दो यस्मिन् तत्तथोक्तं कुलस्त्रीरतं स्वस्त्रीसम्भोगः रम्यं सुन्दरमत्यन्तमनोहरमिति यावत् । एतच्च प्रथमसमागमपरत्वेन द्रष्टव्यमन्यथोक्तव्यवहारासम्भवादिति भावः । कुलशब्दव्यावृत्तिसम्भोगस्यादित आरभ्य प्रागल्भ्यघटितत्वेनोक्तविलक्षणत्वादन्यादृशो द्रष्टव्यः । नायिका तु मुग्धा नायकस्तूत्तमोऽनुकूलः कामतन्त्रेषु निपुणोऽन्यथोक्तक्रमसम्भोगासम्भवादिति मन्तव्यम् । सम्भोगलक्षणमुक्तं रतिरहस्ये-

---

१ मनागमानितगुणम् । २ श्लथोद्यतमनुप्रयस्त० । ३ प्रेमार्द्रस्पृ० । ४ प्रगल्भा । ५ निःसङ्गांगविकर्षणादिक० इति च पाठान्तरम् ।

"अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स सम्भोग उदाहृतः ॥" इति । अत्र मा मेति वागारम्भसूचितैरनुभावैर्जाताभिलापभित्युक्तेन रताख्यस्थायिभावेन सव्रीडमित्यनेनोपलक्षितैः सञ्चारिभावैरविशिष्टैर्विशेषणैर्यथार्थं मानैरनुभावादिविशेषैः कुलस्त्री इत्युक्तेनालम्बनविभावेन प्रलीयमानो रससार्वभौमः शृङ्गारो निःसङ्गाङ्गविकर्षणाधिकसुखमित्यनेन परितोषातिशयं प्राप्नोतीति वेदितव्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

पहिले तो नहीं नहीं करना यह मनोहर गुण उसमें है फिर अभिलाषा उत्पन्न होना और लज्जासे शरीरको ढील देना, धैर्य छोडना, प्रेमरसमेंभी विशेष सराहने योग्य एकान्तक्रीडाका चातुर्य, विस्तार करना, फिर निडर हो अंग खैंचनेका अधिक सुख लाभ करना इससें निश्चय जानो कि, कुलस्त्रीकीही रति अच्छी होती है ॥ २४ ॥

अथ यदुक्तं नानाकरणकल्पितमिति तत्र नानाकरणानि धेनुकादिबन्धविशेषास्तेषां मध्ये एकं बन्धविशेषं विवक्षुस्तदनुकूलमुपरिसुरतमाह—

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किञ्चिदुन्मीलितानाम् ।
उपरिसुरतखेदस्विन्नगण्डस्थलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ २५ ॥

उरसीति ॥ उरसि निपतितानां पुरुषायितबन्धवशाद्वक्षःस्थलमधिष्ठितानामत एव स्रस्तधम्मिल्लकानां रतिरभसविश्लथकचप्रचयानाम् । "धम्मिल्लः संयताः कचाः" इत्यमरः । मुकुलितनयनानां सुखपारवश्याल्लज्जानुभावानुकरणाद्वा निमीलितलोचनानामपि तथापि किञ्चिदुन्मीलितानामीषन्मुकुलितलोचनानाम् । अन्यथाऽनौचित्यादिति भावः । अत एव उपरिसुरते यः खेदः श्रमस्तेन स्विन्नानि स्वेदार्द्राणि गण्डस्थलानि यासां तासाम् । "श्रमः खेदो हि रत्यादेर्जातः स्वेदादि भूमिकृत् ।" इति लक्षणात् । वधूनां प्रियतमानां सम्बन्धि अधरमधु अधरामृतं भाग्यशालिनः पिबन्ति । पुंसः स्त्रीमुखस्य

१ सुरतजनितखेदस्वार्द्र० । इति पाठान्तरम् ।

निजमुखसांमुख्यादङ्कशेनाधरं चुम्बन्तीत्यर्थः । एतच्च पुण्यकृतामेव सम्भवति न त्वन्येषामत एव भाग्यवन्त इत्युक्तम् । तथा बाह्यसुरतविशेषरूपमपि चुम्बनमारभ्याभ्यन्तराङ्गतया कथितमित्यवगन्तव्यम् । पुरुषायितलक्षणमुक्तं रतिरहस्ये–"स्वेच्छया श्रमिणि वल्लभे तथा योषिदाचरति पूरुषायितम् ।" इति । नायिकास्तु प्रगल्भाः–"स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना ।" इति लक्षणात् । नायिकाः कामतन्त्रकुशला अनुकूलाश्च । स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।" इति लक्षणात्। मालिनीवृत्तम् ॥ २५ ॥

छातीपर लेटी हुई हैं और सुगंधित केश उनके बिखरे हुए हैं आधे नेत्र मूँदे हुए हैं, कुछ कुछ हिल रही हैं, मैथुनके श्रमसे उनके गालों पर पसीने झलक रहे हैं ऐसी स्त्रियोंके अधरमधुको भाग्यवान्ही पुरुष पान करते हैं ॥ २५ ॥

अथ ज्ञानपूर्वक एव सुरतानुभवः सार्थको न त्वन्य इत्याह—

आमीलितनयनानां यः सुरतरसोऽनुसंविदं भाति[1] ।
मिथुनैर्मिथोऽवधारितमवितथमिदमेव कामनिर्वहणम् २६॥

आमीलितेति ॥ आमीलितनयनानां सुखपारवश्यादरमुकुलितनयनानां यूनां यः सुरतरसः सुरतास्वादः संविदमनुसृत्य भाति । अयमेतादृश इति ज्ञानगोचरतया प्रतिभातीत्यर्थः । इदमेव ज्ञानपूर्वकसुरतानुभवप्रतिभानमेवावितथमव्यर्थं सार्थकमित्यर्थः । कामस्य मन्मथस्य कामपुरुषार्थस्य वा निर्वहणं प्रतिष्ठापनमुज्जीवनमिति यावत् । न त्वन्यदाभासत्वादिति भावः । मिथुनै रसज्ञैः स्त्रीपुरुषैः । "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरः । मिथोऽन्योन्यमवधारितं निश्चितम् । अनुभविनामेवार्थनिश्चयसम्भवादिति भावः । ज्ञानपूर्वकसुरतानुभव एव कामपुरुषार्थ इति फलितार्थः । अत इत्थम्भूतसुरतमेव कर्तव्यम् न त्वन्यादृशं तस्य क्लेशमात्रफलकत्वादिति तात्पर्यम् । आर्यावृत्तभेदः ॥ २६ ॥

आलस्य भरे नेत्रवाली स्त्रियोंका कामसे तृप्त होना यही स्त्री पुरुष दोनोंका परस्पर कामपूजन है ॥ २६ ॥

[1] कुरुते इति पाठान्तरम् ।

अथ सुरतावधिं कथयन्निगमयति—

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मान्मथा विकाराः।
तदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥ २७ ॥

इदमिति ॥ इहास्मिन् लोके पुंसामिदमनुचितमन्यायमक्रमो निर्मर्यादा च। किमिदमित्याशङ्कायामाह। जरासु वार्धकावस्थास्वपीत्यर्थः। मान्मथा विकाराः सुरतव्यासङ्गाः कृता इति यत् इदमिति सम्बन्धः। किं तु यौवनावधिकसुरतमेव न्याय्यं मर्यादागोचरं चेत्यर्थः। तदुपरिवर्तनसुरतस्याभासत्वादिति भावः। तथा नितम्बिनीनां स्त्रीणां च तदनुचितम्। किं तदित्यत आह। स्तनपतनमवधिर्मर्यादा यस्य तत्तथोक्तं जीवितं जीवनं वा रतं सुरतं वा न कृतमिति यत् ब्रह्मणेति शेषः। तदिति सम्बन्धः। स्त्रीणां तावत् स्तनपतनावधिकमेव जीवनं कर्तव्यं सुरतमपि तदवधिकमेवान्यथा। "तारुण्यं पञ्चपञ्चाशदवधि परतो वृद्धतामेति नारी" इति कामशास्त्रोक्तेर्वृद्धानां सम्भोगानर्हत्वात्। "त्यजेदन्त्यकुलोद्भूतां वृद्धस्त्रीं कन्यकां त्यजेत्" इति निषेधस्मरणात्। "आलिङ्गनं लम्बपयोधराणां स्त्रीणां च दुःखं त्रयमेव भूमौ।" इति लम्बस्तननितम्बिनीसम्भोगस्य दुःखरूपत्वाच्चेति भावः। यथाह माघः—अयमतिजरठाः प्रकामगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः। सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्बिभर्ति ॥" इति। अत्र स्त्रीणां पुरुषाणां च यौवनकृतसुरतमेव रमणीयामिति तात्पर्यम्। पुष्पिताग्रावृत्तम्। "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।" इति लक्षणात् ॥ २७ ॥

यह विधाताने पुरुषोंमें बडी अनुचित और उलटी बात उत्पन्न की है कि बुढापेमेंभी कामका विकार प्रगट होता है ऐसाही स्त्रियोंकाभी नहीं किया कि,जबलों स्तन न गिरें तभीलों जिये और काम चेष्टा रक्खे॥

लोके स्त्रीपुरुषयोरेकचित्तता एव कामफलमित्याह—

एतत्कामफलं लोके यद् द्वयोरेकचित्तता।
अन्यचित्तकृते कामे शवयोरिव सङ्गमः ॥ २८ ॥

एतदिति ॥ लोके यत्त द्वयोः स्त्रीपुरुषयोरेकचित्तता, एकचित्तत्वमेवदेव कामस्य फलमस्ति । अन्यस्मिन् पुरुषे अन्यस्यां योषिति यच्चित्तं तेन कृते कामे सति शवयोः मृतयोः सङ्गम इव भवतीति शेषः ॥ २८ ॥

स्त्री और पुरुषके समागममें एकचित्त हो जाना कामदेवका यही मुख्य फल है । यदि काममें दोनोंका चित्त और ठौर रहा तो मृतकोंकासा संगम होता है ॥ २८ ॥

यदुक्तं सुरतानुगुण्येन यौवनस्यात्यन्तावश्यकत्वं त्रिभिर्वर्णयति । तत्रादौ चिरप्रवासनिर्विण्णानां राजसेवातत्पराणां यूनां वचनमेतत्—

राजंस्तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानं
को वार्थोऽर्थैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ।
गच्छामः सद्म तावद्विकसितकुमुदेन्दीवरालोकिनीना—
माक्रम्याक्रम्य रूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥ २९ ॥

राजन्निति ॥ हे राजन् ! जगत्यस्मिन् लोके कश्चिदेव कश्चिदपि पुमान् तृष्णा धनलिप्सा स एवाम्बुराशिः समुद्रस्तस्यावसानं पारं न गतः हि न प्राप्तः खलु किन्तु मग्न एवेत्यर्थः । तृष्णाया अपरिच्छिन्नत्वादम्बुराशित्वरूपणम् । अथ यावत्कांक्षितार्थलाभेऽपि न तैः प्रयोजनसिद्धिरित्याहुः । प्रभूतैः प्रचुरैः "प्रभूतं प्रचुरं प्राज्यम्" इत्यमरः । अर्थैर्धनैः को वार्थः किं प्रयोजनं न कोऽपीत्यर्थः । अकिञ्चित्करत्वादिति भावः । "अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिषु" । इत्यमरः । कस्मिन् कथम्भूते सति । स्ववपुषि निजशरीरे अधिकरणे सानुरागे सम्भोगेच्छाजनके अनुरागसहिते वा यौवने गलिते सति कोऽर्थ इति सम्बन्धः । धनलाभादपि यौवनमेवास्माकं बलीय इत्यर्थः । अतस्तावत्तत्पूर्वमेव सद्म स्वगृहं प्रति गच्छामो यास्यामः । यावद्यदा विकसितान्युत्फुल्लानि कुमुदानि कैरवाणि इन्दीवराणि नीलोत्पलानि च तत्सदृशान्यालोकानि नेत्राण्यासां सन्तीति तथोक्तानां सितासिताब्जदलमनोहरनयनानामित्यर्थः । "सिते कुमुदकैरवे" "इन्दीवरं च नीलेऽस्मिन्" इत्युभयत्राप्यमरः । प्रेयसीनां प्रियतमानां सम्बन्धि रूपं यौवनप्रयुक्तसौन्दर्यं जरयाक्रम्याक्रम्याभीक्ष्णमाक्रम्य

१ नयनेन्दीवरलोकिनानां । २ यावदाक्रम्य इति च पाठान्तरम् ।

झटित्यञ्जसा । " द्राग्झटित्यञ्जसाह्नाय " इत्यमरः । न विलुप्यते न ह्रियते तावदिति सम्बन्धः । अन्यथा शशकापाये विलक्षनवद्गमनवैफल्याद्वृद्धस्त्रीग्रसननिषेधाच्चेति भावः । " यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे । " इत्यमरः । स्रग्धरावृत्तम् ॥ २९ ॥

हे महाराज ! इस तृष्णारूपी समुद्रके कोई पार न गया और जब हमारी अनुरागभरी युवा अवस्था देहहीमें जीर्ण हो गई तब अधिक द्रव्यही प्राप्त करके हमको क्या करना है तो शीघ्रही अपने घर चले जांय ऐसा न हो कि विकसित कुमुद और कमल ऐसे नेत्रवाली हमारी प्यारियोंका रूप वृद्धावस्था घुला २ बिगाड न डाले, यहां कुमुद रात्रिविकासी और कमल दिनविकासीसे अभिप्राय है इससे यह सूचना होती है कि, वे रातदिन हमारा मार्ग देखती होंगी ॥ २९ ॥

अथान्यानर्थमूलत्वमाह—

रागस्यागारमेकं नरकशतमहादुःखसंप्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।
कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्न ह्यनर्थव्रजकुलभवनं यौवनादन्यदस्ति ॥ ३० ॥

रागस्येति ॥ रागस्य मात्सर्यस्यैकमगारं मुख्यायतनमनुरागैकस्थानमिति वा । तथा नरकशतेषु निरयपरंपरासु यानि महादुःखानि तीव्रयातनास्तेषां प्राप्तिहेतुः प्राप्तिसाधनम् । अगम्यागमनादिदुष्कर्मप्रवर्तकत्वादिति भावः । मोहस्य स्त्र्यंतरासक्तिरूपस्य जन्मोत्पत्तिर्बीजं जन्मकारणम् । " हेतुर्ना कारणं बीजम् " इत्यमरः । ज्ञानताराधिपस्य प्रबोधचन्द्रस्य जलधरपटलमभ्रवृन्दम् । ज्ञानप्रकाशप्रतिबन्धकमित्यर्थः । कन्दर्पस्य कामदेवस्य एकं मित्रं मुख्यबन्धुस्तदुद्रेकमित्यर्थः । प्रकटितः प्रवृद्धो विविधो नानाविधः स्पष्टः प्रकाशश्च दोषप्रबन्धः पातकसंबन्धो यस्य तत्तथोक्तं यद्यौवनमिति शेषः।अतोऽस्मिन् लोके तस्माद्यौवनादन्यदितरत् अनर्थानामुक्तविधानां व्रजस्य समूहस्य कुलभवनमुत्पत्तिनिकेतनं नास्ति हि।इदमेवात्यन्तानर्थमूलमित्यर्थः। तदुक्तम्।"यौवनं धन(रूप)सम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥" वृत्तं पूर्ववत् ॥ ३० ॥

---

१ नर्थं निजकुलदहनं दारि पाठान्तरम् ।

अनुरागका घर, सैकडों नरकोंके दुःख प्राप्त होनेका हेतु, मोहकी उत्पत्तिका बीज, ज्ञानरूपी चंद्रमाके ढाकनेका मेघ, कामदेवका एकही मित्र, अनेक दोषोंका प्रगट करनेवाला और वैराग्य और नीतिका हरण करनेवाला इस लोकमें युवा अवस्थाके व्यतिरिक्त भिन्न दूसरा अनर्थ नहीं है ॥ ३० ॥

इत्थंभूते यौवने कश्चिदेव निर्विक्रिय इत्याह—

शृङ्गारद्रुमनीरदे प्रसृमरक्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरवाङ्मुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपार्वणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने॥ ३१॥

शृङ्गारेति ॥ शृङ्गारः सम्भोगविप्रलम्भरूपशृङ्गाररस एव द्रुमो वृक्षस्तस्य नीरदे अम्बुवाहे अंकुरितत्वकन्दलितत्वपल्लवितत्वपुष्पितावस्थाभिः परिपोषावह इत्यर्थः । प्रसृमरो व्यापनशीलो यः क्रीडारसः मन्मथकेलिरसस्तस्य स्रोतसि प्रवाहे अविच्छेदेन प्रवर्तक इत्यर्थः । अथवा प्रसृतमरक्रीडानां रसस्रोतसि रसप्रवाहे यथेच्छाविहारान्वित इत्यर्थः । प्रसृमरेत्यत्र "सृघस्यदः क्मरच्" । प्रद्युम्नस्य कन्दर्पस्य प्रियबांधवे आप्तबंधौ । स्वार्थेऽण्प्रत्ययः । "प्रद्युम्नो मीनकेतनः । कन्दर्पो दर्पकोऽनङ्गः" इत्यमरः । चतुरवाचो निपुणवाक्यान्येव मुक्ताफलानि मौक्तिकमणयस्तेषामुदन्वति समुद्रे सरससँल्लापोत्पत्तिनिकेतनभूत इत्यर्थः । "उदन्वानुदधौ च" इति निपातनात्साधुः । समुद्रस्य मुक्ताकरत्वमुक्तं रत्नशास्त्रे । "करीक्षुजीमूतवराहशंखमत्स्यादिशुक्त्यर्णववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥" इति । तन्वीनां विलासिनीनां नेत्राण्येव चकोराश्चन्द्रिकापायिपक्षिविशेषास्तेषां पार्वणविधौ पूर्णचन्द्रे तदुल्लासक इत्यर्थः । पर्वणि भवः पार्वण इति विग्रहः । "विधुर्विष्णौ चन्द्रमसि" इत्यमरः । सौभाग्यलक्ष्म्याः सौन्दर्यसम्पदो निधौ निधाने कदाचिदपि स्वावस्थानन्ददशायां सौन्दर्यलक्ष्मीर्न क्षीयते इत्यर्थः । नवयौवने नूतनवयसि प्राप्ते सति कोऽपि धन्यः कश्चिदेव सुकृती विक्रियां

१ प्रचुरतः । २ चतुरता । ३ पारणाविधौ इति च पाठांतरम् ।

मन्मथविकारं न कलयति न प्राप्नोति । ईदृशस्तु विरल इति भावः । श्लोकद्वयेऽपि निरवयवरूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

शृङ्गाररूपी वृक्षोंका सींचनेहारा मेघ, विस्तारित क्रीडारसका सोता, कामदेवका प्यारा भ्राता, चतुरतारूपी मोतियोंका समुद्र, स्त्रियोंके नेत्ररूपी चकोरका पूर्ण चन्द्र और सौभाग्यलक्ष्मीका एक पात्र ऐसी युवा अवस्था पाकर जो पुरुष विकारको नहीं प्राप्त होता सो धन्य है ३१

यदुक्तं यौवनस्यानर्थमूलत्वं तत् कामिनीपरित्यागेऽत्यन्तदुरापास्तमित्याशंक्य तासामपरित्याज्यतां त्रिभिर्वर्णयति—

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवाकलङ्क-
व्यासङ्गव्यस्तधैर्यं कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिसिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभाजस्तरुण्यः ॥ ३२ ॥

संसार इति ॥ अमलधियो निर्मलमतयो महान्तः मानसं निजं मनः असारे निःसारे अस्मिन् परिवर्तमाने संसारे कलत्रादिपोषणव्यासङ्गरूपे कुनृपतिभवनद्वारस्य कुत्सितराजमन्दिरस्य प्रतीहारस्य सेवा अनुवर्तनमेव कलङ्कोऽपवादस्तत्र यो व्यासङ्गोऽत्यासक्तिस्तेन व्यस्तं धैर्यं धीरत्वं यस्य तत्तथोक्तम् । ईदृक्कष्टकर्मासक्तिमलिनमित्यर्थः । कथं संविदध्युः कुर्युः न कथंचिदपीत्यर्थः । किं न स्याच्चेदित्यत आह । प्रोद्यन्नुदिततरो य इन्दुस्तस्य द्युतिरिव द्युतिर्येषां तानि चन्द्रधवलानि माञ्जिष्ठानि वा । उभयविशेषणसामर्थ्यात् तानि सिचयान्यंशुकानि बिभ्रतीति तथोक्ताः । अम्भोजे इव नेत्रे यासां ताः पद्मपलाशविशाललोचना इत्यर्थः । प्रेङ्खत्काञ्च्यः कणद्रशना एव कलापाः भूषणानि यासां ताः । यद्वा कांच्यो भूषणानि यासां ताः । " कलापो भूषणे बर्हे " इत्यमरः । स्तनभरेण कुचकुम्भगौरवेण विनमन्ति अवनतानि मध्यान्यवलग्नानि भजन्तीति तथोक्ताः । पीवरकुचाः कृशोदर्यश्चेत्यर्थः । एतेन सौन्दर्यातिशय उक्तः । एताः प्रसिद्धास्तरुण्यो युवतयो न भवेयुर्यदि तर्हि कथं संविदध्युरिति सम्बन्धः । अतः विशिष्टतरुणीनां विद्यमानत्वादेव सुधियोऽप्येवंभूता भवन्तीत्यर्थः । तस्मात्तरुण्यो

---

१ सेवावमलब्ध० २ सिचय । ३ भागास्त० इति च पाठान्तरम् ।

दुष्परिहरा इति भावः । तदुक्तम् । " असाधाविह संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का वा स्यात्परिकल्पना ॥ " इति । अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थसमर्थकहेतुत्वात्काव्यलिङ्गभेदः । स्रग्धरावृत्तम् ॥ ३२ ॥

उदित चन्द्रमाकीसी कांतिधारी, कमलनेत्रवाली, झुलती हुई करधनीकी लरियोंवाली और स्तनभारसे झुकी कटिवाली युवती स्त्री यदि न हो अर्थात् इनसे स्नेह न होय तो इस असारसंसारमें निर्मल बुद्धिवाले मनुष्य खोटे राजोंके द्वारकी सेवा नानाभांतिके कलंकसे अधीर चित्त होकर क्यों करें ? ॥ ३२ ॥

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावरुग्णद्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ।
कः कुर्वीत शिरःप्रणाममलिनं म्लानं मनस्वी जनो
यद्वित्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥ ३३ ॥

सिद्धेति ॥ सिद्धैर्योगिभिरध्यासिता अधिष्ठिता कन्दरा गुहा यस्मिन् तत्तथोक्ते । एतेन तपःसिद्धिहेतुत्वं सूच्यते । हरस्य नित्यसन्निहितस्य यो वृषो वाहनभूतो महोक्षस्तस्य स्कन्धेन अंसपीठेन ककुदेति यावत् । अवरुग्णा भग्ना द्रुमास्तत्तथोक्तम् । " रुजो भङ्गे " कर्माणि क्तः । " ओदितश्च " इति निष्ठानत्वे णत्वम् । एतेनाखिलश्रेयःप्रदशिवसान्निध्यमुक्तम् । गङ्गाधौतानि गङ्गाप्रक्षालितानि शिलातलानि यस्मिन् तत्तथोक्तम् । एतेनात्यन्तपवित्रत्वमुक्तम् । अत एव श्रेयसि श्रेष्ठे श्रेयस्करे वा । हिमवतो गिरेः सम्बन्धिनि स्थाने प्रदेशे स्थिते सति को वा मनस्वी सुमेधाः धीरो जनः । प्रशंसायामिनिः । शिरो निजोत्तमाङ्गं प्रणामेन कुनृपतिपादवन्दनेन मलिनं कलङ्कितमत एव म्लानमुत्कर्षहीनं कुर्वीत । मलिनं मानमिति पाठे मानं निजाभिमानं कर्म शिरःप्रणामेन निजोत्तमांगविनमनेन मलिनं प्रतिष्ठाहीनं कुर्वीत । न कोऽपीत्यर्थः । कुतः यद्यस्मात्कारणात् वित्रस्तकुरङ्गशावनयनाः पद्मिनीजातित्वाचकितबालहरिणेक्षणाः अत एव स्मरास्त्रं महावीरस्य जगद्विजयसाधनभूतबाण इत्यर्थः । लिङ्गवचनव्यत्ययो नित्यनपुंसकत्वेन जात्याभिप्रायेण वा । वेदाः प्रमाणं तन्तवः पटस्य

१ गाढ । २ मानं । ३ यद्यत्रस्त इति च पाठान्तरम् ।

समवायिकारणमित्यादिवद्द्रष्टव्य इत्युक्तम् । प्राक् स्त्रियो न स्युश्चेत् । अतः अमोघमदनशस्त्रभूतस्त्रीणामपरित्याज्यतया विद्यमानत्वादेव मनस्विनामपीदृग्दुरवस्थापत्तिरस्ति भावः । वृत्तमुक्तम् ॥ ३३ ॥

सिद्ध लोग जिस कंदरामें बैठे हैं और महादेवजीका बैल जहां वृक्षोंमें कंधा रगडता फिरता है और गंगाजलसे जहांके पाषाण धोये जाते हैं, ऐसा हिमालयका स्थान कल्याणदायक छोडकर कौन मनुष्य स्त्रीपुरुषलोगोंके समीप जाकर माथा झुकाय प्रणाम कर अपने मानको मलीन करता यदि भीतियुक्त हरिणशावकनयन कामास्त्रस्वरूप कामिनी घरमें न होती ॥ ३२ ॥

संसार तव पर्यन्तपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्युर्यदि ते मदिरेक्षणाः ॥ ३४ ॥

संसारेति ॥ हे संसार! तव पर्यन्तपदवी अवसानसीमा न दवीयसी न दविष्ठा भवति न दूरतरेति यावत् । किं तु नेदीयस्येवेत्यर्थः । दूरशब्दादीयसुनि "उगितश्च" इति ङीप् । "स्थूलदूर०" इत्यादिना पूर्वयणादिपरलोपः कुतस्ते तव अन्तरा मध्ये दुस्तरा महानद्य इव तरितुमशक्याः । "ईषद्दुः०" इत्यादिना खल् प्रत्ययः । मदिरेक्षणाः स्त्रियः न स्युर्यदि न संभाविताश्चेत् न दवीयसीति संबन्धः । संभावितत्वादेव दवीयसीत्यर्थः । एतेन संसारपारगमनप्रतिबन्धिन्यः स्त्रिय इत्युक्तम् । तत्परित्यागे तु श्रेयःसंभव इति भावः । पूर्वश्लोकेऽत्रापि च पूर्ववत्-श्लोकत्ववृत्तमुन्नेयम् ॥ ३४ ॥

हे संसार! तुझसे पार होना कुछ दुस्तर न था यदि अच्छे नेत्रवाली कठिन स्त्रियां बीचमें बाधक न होतीं ॥ ३४ ॥

इत्थं स्त्रीणां परिहर्तुमशक्यत्वे तदासक्तस्य कुतः श्रेयःप्राप्तिरित्याशंकायां तदत्यन्तात्यागवैराग्ययोरप्यैहिकामुष्मिकफलसाधनत्वमेवेति मनसि कृत्वा तदुभयमिदानीं तावन्निरूपयितुं प्रतिजानीते । अथ पक्षद्वयनिरूपणमिति । अथ स्त्रीणामपरित्याज्यकथनानन्तरं पक्षयोः विरक्त्यनुरक्तिरूपपक्षयोर्द्वयोर्निरूपणं क्रियत इति शेषः । तत्प्रकारमाविंशतिसमाप्तेर्वर्णयति--

---

१ निस्तार । २ रे इति च पाठान्तरम् ।

दिश वनहरिणीभ्यो वंशकाण्डच्छवीनां
कवलमुपलकोटिच्छिन्नमूलं कुशानाम् ।
शकयुवतिकपोलापाण्डुताम्बूलवल्ली-
दलमरुणनखाग्रैः पाटितं वा वधूभ्यः ॥ ३५ ॥

दिशेति ॥ हे जनेत्यध्याहार्यम् । वने पुण्यारण्ये हरिणीभ्यः कुरङ्गीभ्यः तपःप्रसक्त्या निर्भीतत्वेन तासां समीपवर्तित्वादिति भावः । उपलकोटया निशितपापाणप्रान्तेन छिन्नानि लूनानि मूलानि यस्य तथोक्तम् । तत्र लवित्रादिसाधनान्तरासम्भावान्मूलानामुपलकोटिच्छिन्नत्वमुक्तम् । वंशकांडस्य वंशकरीरस्य छविरिव छविर्येषां तेषाम् । सरसानामित्यर्थः । कुशानां कवलनं ग्रासं वा दिश । तपश्चरणानुसमय इति शेषः । अथवा वधूभ्यः प्रियतमाभ्यः अरुणनखानामग्रैः पाटितं शकलितं शकयुवतीनां शकाख्यदेशीयतरुणीनां कपोलवदापांडु आसमन्ताद्धवलं यत्तांबूलवल्लीदलं नागवल्लीपत्रं तद्वा दिश संसरणसमय इति शेषः । उक्तोभयमेव परमसौख्यनिदानमुभयत्र स्यादिति भावः। एवमुत्तरत्रापि यथायोगमूहनीयम् । अत्र नखानामारुण्यग्रहणं महाभाग्यलक्षणत्वेन सुखित्वद्योतनार्थम् । तदुक्तं सामुद्रिके । "पाणिपादतले रक्ते नेत्रान्तौ च नखस्तथा । तालुजिह्वाधरोष्ठं च सप्तरक्तः सुखी भवेत् ॥" इति । मालिनीवृत्तम् ॥ ३५ ॥

हे मनुष्यो ! तुम या तो वनमृगियोंके लिये बाँसके दंडके समान छविवाले पत्थरके अग्रभागसे कटे हुए दर्भोंके ग्रास दो अथवा उत्तम स्त्रियोंके लिये अरुण नखोंसे तोडे हुए शकदेशीययुवतीके कपोलके समान किंचित् पांडुवर्णवाले तांबूल दो ॥ ३५ ॥

असाराः सर्वे ते विरतिविरसाः पापविषया
जुगुप्स्यन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्येतद्भूमौ न हि परहितात्पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ ४५ ॥

१ सन्त्वेते । २ विरलायासविषया । ३ जुगुप्सतां। ४ तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबलस्तदीयोऽनाख्येयः स्फुरति हृदये कोऽपि महिमा । इति च पाठान्तरम् ।

असारा इति ॥ ननु हे जनेति ते प्रसिद्धाः सर्वे पापहेतुत्वात्पापाः विषयाः शब्दादयः स्रक्चन्दनवनितादयो वा असारा अस्थिरा निःसारा इति वा । "सारो बले स्थिरांशे च" इत्यभिधानात्। तथा विरतौ परिणतिसमये विरसा अनर्थकरा इति वा । यद्वा सकलदोषास्पदं रागद्वेषमोहाद्यशेषदोषा इति वा । "आस्पदं प्रतिष्ठायाम्" इति निपातनात्सुडागमः । लिङ्गवचनव्यत्ययस्तु पूर्ववद्द्रष्टव्यः । जुगुप्स्यन्तां परित्यज्यन्ताम्। परित्यागे परमसुखलाभादिति भावः। तथा च वक्ष्यति । "स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति" इति । "गुपेर्निन्दायाम्" इति सन्नन्तात्कर्मणि यकिविधौ लोटि तङ् । तथाप्युक्तप्रकारेण विषयाणां जुगुप्स्यत्वेऽप्येतद्भूमौ अस्यां भुवि परहितात्परोपकारकरणादधिकमतिरिक्तं पुण्यं न हि नास्ति खलु "श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । परोपकारः पुण्याय पापाय परपीडनम् ॥" इति वचनादिदमेवात्यन्तपुण्यमित्यर्थः । अथास्मिन् संसारे च कुवलयदृश उत्पलाक्ष्याः । "अन्यारादितरर्ते०" इत्यादिना पञ्चमी । अपरमन्यद्द्रव्यं वस्तु नास्ति । इयमेवात्यंतमनोहरेत्यर्थः । अतः द्विपदष्टया विषयान् परित्यज्य शमसुखानुभवतात्पर्येण वा स्थातव्यमन्यथा परहिताचरणत्वेन सांसारिकतया वा वर्तितव्यम् । न तु प्रकारान्तरेणेति भावः। शिखरिणी वृत्तम् ॥ ३६ ॥

यह सब भोगविषय असार और वैराग्यमें विरस करनेवाले हों और इन्हें सब दोषोंका गृह समझकर यदि लोग निंदाभी करें तथापि हम यह ठीक निवेदन करते हैं कि इस संसारमें पराया हित करनेसे अधिक दूसरा पुण्य नहीं और कमलनयनी स्त्रियोंसे अधिक सुन्दर वस्तु नहीं॥

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्यादमिदं वदन्तु ।
सेव्या नितम्बाः किमु भूधराणा-
मुत स्मरस्मेरविलासिनीनाम् ॥ ३७ ॥

मात्सर्यमिति ॥ आर्याः पण्डिताः मात्सर्यमसूयां पक्षपातमिति यावत् । उत्सार्य निराकृत्य तस्य यथार्थकथनप्रतिबन्धकत्वादिति भावः । कार्यं कर्तुं योग्यं विधेयमित्यर्थः । विचार्य ऊहापोहाभ्यां सम्यगालोच्य ततः मर्यादया सन्मार्गानतिक्रमणेन सहितं यथा भवति तथा इदमेतत् वदन्तु कथयन्तु । किमिदमि-

१ किल इति पाठान्तरम्।

स्यत्र आह । धरन्तीति धराः। पचाद्यच्। भुवो धरा भूधरास्तेषां भूधराणां नितम्बाः कटिप्रदेशाः सेव्याः किमु । आश्रयणीया वा ? उत अथवा स्मरस्मेराः स्मरोद्दीपिताः मदनमदोत्कटा इत्यर्थः । यद्वा स्मरेण मन्मथावेशेन हेतुना स्मेराः सम्भोगौत्सुक्यसूचकमन्दस्मितसुन्दरवदनारविन्दा इत्यर्थः। "स्मिङ् ईपद्धसने" इति धातोः "नमिकम्पि०" इत्यादिना रप्रत्ययः । अथवा विषयमात्रविश्रान्तिविरहेण विशृङ्खलव्यापृतित्वमदमन्दादिगुणविशिष्टकटाक्षवीक्षणानि स्मेरशब्दविवक्षितानि । तदुक्तं भावप्रकाशे—" अपरिच्छिन्नविषयं मदमन्थरमीलितम् । स्फुरद्भ्रूपक्षतायुक्तं तत्स्मेरमिति कथ्यते॥"इति। तानि च स्मरप्रधानानि यासां ताः स्मरस्मेराणां विलासिनीनां विलसनशीलानां तरुणीनाम् । "वीकपलस०"इत्यादिना घिनुण्प्रत्ययः । नितम्बाः कटिप्रदेशा आश्रयणीया वा ? इदं वदन्त्विति सम्बन्धः । यदि वैराग्यं स्यात्तर्हि गिरिनितम्बाः सेव्याः । अन्यथा विलासिनीनितम्बा इति त्वदीयप्रश्नस्येदमुत्तरं न त्वन्यदस्तीति भावः । " कटकोऽस्त्री नितम्बोऽद्रेः " " पश्चान्नितम्बः स्त्रीकट्याः " इति चोभयत्राप्यमरः । अत्र पूर्वार्धे एकवर्णस्य पुनःपुनरावृत्तेः वृत्त्यनुप्रासः शब्दालङ्कारभेदः । " एकद्वित्रिभृतीनां तु व्यञ्जनानां यथा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते॥" इति लक्षणात् । अयं च नितम्बा इत्यत्र द्वयानामपि नितम्बानां प्रकृतत्वात्केवलप्रकृतत्वगोचरेण एकनालालम्बिफलद्वयवदेकशब्दादर्थद्वयप्रतीतेः केवलार्थप्रवणेन विजातीयेनोत्तरवाक्यस्थेन श्लेषेण तिलतण्डुलवत्परस्परनैरपेक्ष्यात्संसृष्टिः। कश्चिच्चमत्कारातिशयमावहतीति काव्यस्य महानुत्कर्षः प्रतिपादित इति रहस्यम् । वृत्तमुपजातिः॥ ३७ ॥

हे पण्डितो ! मत्सरता त्याग और मर्यादासहित विचार कर कहो कै तो पर्वतहीके नितम्ब सेवन योग्य हैं कि कामदेवकी उमंगसे मुसुकाती विलासिनी स्त्रियोंके नितम्बही सेवने योग्य हैं । नितम्ब पर्वतके मध्यभाग और स्त्रियोंकी कटिके पश्चाद्भागको कहते हैं ॥ ३७ ॥

संसारे स्वमसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःप्लुवैर्ललितधियां यातु कालः कथंचित् ।
नो चेन्मुग्धाङ्गनानां स्तनघनजघनाभोगसम्भोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलीलोद्यमानाम्॥ ३८॥

१ संसारेऽस्मिन्नसारे । २ प्लुत । ३ कदा । ४ स्तनजघनभरा । ५ लोलोद्यतानाम् इति० ।

संसार इति ।। स्वप्नस्य सार इव सारो यस्मिन् स मिथ्याभूत इत्यर्थः । "सप्तम्युपमाने" इत्यादिना बहुव्रीहिः । तथा परिणामावस्थायां तरले अस्थिरे अशाश्वत इत्यर्थः । संसारे संसृतौ पण्डितानां परिज्ञातॄणां द्वे गती अवस्थे विद्येते इति शेषः । के द्वे इत्याशंकायामाह । तत्त्वज्ञानमेव अमृताम्भः अमृतप्रायजलं तत्र प्लव इव ललिता रुचिरा । यद्वा तत्त्वज्ञानामृताम्भसि प्लवः प्लवनम् क्रीडेति यावत् । तत्र ललिता उल्लासवती धीर्येषां तत्त्वज्ञानोल्लसितबुद्धीनां सतामित्यर्थः । कथञ्चिदतिप्रयत्नेन कालः यातु गच्छतु अतिक्रामत्वित्यर्थः । "कथमादि तथाप्यन्तर्यत्नगौरवबाढयोः ।" इत्यमरः । कालः कदाचिदित्यपि पाठः । इयमेकावस्था । नोचेदेवं न स्याच्चेत्तर्हि स्तनयोर्घनजघने विपुलकटिपुरोभागे च । आभोगसम्भोगिनीनां विस्तृतसम्भोगेच्छावतीनाम् । यद्वा स्तनयोर्घनजघनस्य निविडतरजघनस्य च य आभोगो विस्तारस्तत्र सम्भोगिनीनां कुचमर्दननिधुवनरूपबाह्याभ्यन्तरसम्भोगाकांक्षिणीनामित्यर्थः । एतेन समानुरागित्वमुक्तम् । अन्यथा आभासप्रसङ्गात् । तदुक्तम् । "एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा । योषितो बहुसक्तिश्च रसाभासस्त्रिधा मतः ।।" इति । मुग्धाङ्गनानां सुन्दरस्त्रीणां नवयौवनानां वा । "उद्यद्यौवना मुग्धा" इति लक्षणात् । स्थूलोपस्थस्थलीषु वर्तुलोच्छूनमदनसदनप्रदेशेषु । "जानपद०" इत्यादिना अकृत्रिमार्थे ङीप् । स्थगितमाच्छादितं यत्करतलं तस्य स्पर्शः सम्पर्कः स एव लीला तत्र उद्यम उद्योगो येषां तेषां सताम् । कामिनीमोहनोपस्थस्पर्शसुखमनुभवतां सतामित्यर्थः । कालो यातु । इयं चैकावस्था इमे द्वे एवोत्तमे गती न त्वेतद्व्यतिरिक्तं गत्यन्तरमस्तीत्यर्थः । सर्वदा ज्ञाननिष्ठया वा कामगोष्ठ्या वा पण्डितानां कालो यापयितव्यः। न त्वन्यथेति भावः। स्थूलोपस्थेत्यनेन आसां चित्रिणीजातित्वं सूचितम् । तदुक्तं रतिरहस्ये । "मदनसदनमस्या वर्तुलोच्छूनमन्तर्मृदु मदनजलाढ्यं रोमभिर्नातिसान्द्रैः । प्रकृतिचपलदृष्टिर्बाह्यसम्भोगरक्ता रसयति मधुराल्पं चित्रिणी चित्ररक्ता ।।" इति । एतज्जात्यनुकूलसुरतनियतयामोऽपि तत्रैवोक्तः । "व्रजति रतिसुखार्थं चित्रिणीमग्रयामे भजति दिनरजन्योर्हस्तिनीं च द्वितीये । रमयति च तृतीये शंखिनीमार्द्रभावां रमयति रमणीयां पद्मिनीं तुर्ययामे ।।" इति । मतान्तरे तु द्वितीययाम इत्युक्तम् । "घनकुचनखभेदैर्मुष्टिघातैश्च मध्ये रतिनियतकरैश्च प्रीतियुक्तैर्वचोभिः । अनृततरकथाभिस्तत्र यामे द्वितीये सुगुणसहितमन्तश्चित्रिणीं संलभेत ।।" इति । स्रग्धरा वृत्तम् ।। ३८ ।।

- यह असार संसार जिसकी अंत अवस्था अति चंचल है उसमें पंडितोंके हेतु दोही सुलभ गति हैं एक तो तत्त्वज्ञानरूपी अमृतरसमें स्नान करनेवाली जिनकी निर्मल बुद्धि है उनका काल अच्छा व्यतीत होता है अथवा सुन्दर कामिनीके पुष्टस्तन और जघनसे भोगमें सुख पाई जो स्त्री उनके शरीरपर हाथ दिये लीलासे उद्योगमें जो तत्पर हैं उनका काल भलीभाँति व्यतीत होता है ॥ ३८ ॥

आवासः क्रियतां गाङ्गे पापहारिणि वारिणि ।
स्तनद्वये तरुण्या वा मनोहारिणि हारिणि ॥ ३९ ॥

आवास इति ॥ पापानि हरत्यभीक्ष्णमिति पापहारि । " गाङ्गं वारि मनोहारि मुरारिचरणच्युतम् । त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥ पापापहारि दुरितारि तरङ्गधारि दूरप्रसारि गिरिराजगुहाविहारि । झङ्कारकारि हरिपादरजोविहारि गाङ्गं पुनातु परितः शुभकारि वारि ॥ " इत्यादिना समस्तपापक्षयकर इत्यर्थः । " बहुलमाभीक्ष्ण्ये " णिनिः । गाङ्गे गङ्गासम्बन्धिनि । " तस्येदम् " इत्यण्प्रत्ययः । वारिणि आवासः क्रियतां स्नानपानादिना बाह्याभ्यन्तरशुद्धिसम्पादनद्वारा स्वर्गापवर्गप्राप्त्यर्थं तत्र निवासो विधीयतामित्यर्थः । तथा च श्रुतिः । " सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति । ये वै तन्वं विसृजन्ति धीरास्ते जनासोऽमृतत्वं भजन्ते ॥ " इति । स्मृतिश्च । " गङ्गा तुङ्गतरङ्गिणी भवभयक्लेशापहा सर्वदा मर्त्यानामवगाहनात्सकृदपि स्वर्गेऽपि संस्थापिनी ।" इत्यादि । अथवा मनोहारिणि अत्यन्तमनोहरे । पूर्ववण्णिनिः । कुतः हारिणि मुक्ताहारवति । अत्र मत्वर्थीय इनिप्रत्ययः । तरुण्या नवयौवनायाः स्तनद्वये आवासः परिशीलनतात्पर्यं क्रियताम् । तरुणीस्तनाश्रयस्यैव निरतिशयसुखावहत्वादिति भावः । अत्र तरुणीग्रहणं स्तनद्वयस्य पतनाभावेन पाटवातिशयद्योतनार्थमन्यथाभावप्रसङ्गात् । एतेन मणिहिरण्मयकङ्कणयोरिव स्तनद्वयहारयोरप्यन्योन्यरामणीयकप्रकाशपरिपोषावहत्वेन विशिष्टस्तनद्वयस्याश्रयणयोग्यत्वं सूचितमित्यवगन्तव्यम् । यथाह श्रीहर्षः । " तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् । " इति । अत्र पूर्वोत्तरवाक्यस्थयोरनुप्रासयमकयोः शब्दालङ्कारयोः संसृष्टिः स्पष्टा ॥ ३९ ॥

---

१ पापवारिणि । २ मध्ये । इति च पाठान्तरम् ।

पाप हरनेवाला है जल जिसका ऐसी श्रीगंगाजीके तटपर वसे अथवा युवा स्त्रीके उन स्तनोंके मध्यमें वसे जो मनको वशमें कर लेते हैं और जिनपर हार पडा है ॥ ३९ ॥

अथ द्वाभ्यां निगमयति—

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम्।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ४० ॥

किमिति ॥ इहास्मिन्नर्थे बहुभिरपरिमितैर्युक्तिशून्यैर्निःसारैरुक्तैरुदितैः प्रलापैरनर्थकवचनैः किं फलमिति शेषः। वाचो विज्ञापनं विना न किञ्चित्फलमस्तीत्यर्थः। "प्रलापोऽनर्थकं वचः" इत्यमरः। किं त्विहास्मिन् लोके पुरुषाणां द्वय सर्वदा निरन्तरम्। सर्वथेति पाठः। सेवनीयम् किं तद्द्वयमत आह। अभिनवा नूतना या मदलीला मन्मथावेशजनितविलासास्तासु लालसं लोलुपमत्यासक्तमित्यर्थः। स्तनभरेण कुचकलशभारेण परिखिन्नं परिश्रान्तमुभयत्रापि यौवनवतीधर्मो यौवन उपचर्यते। सुन्दरीणां यौवनं वा। न त्वसुन्दरीणामिति भावः। उत वनं पुण्यारण्यं वा सेवनीयमिति सम्बन्धः। एतयोरेव परमसुखनिदानत्वादिति भावः। मालिनी वृत्तम् ॥ ४० ॥

युक्तिशून्य प्रलाप अर्थात् बकवादसे क्या प्रयोजन है ? पुरुषोंको दोही वस्तु सर्वदा सेवने योग्य हैं, नवीन मदांधलीलाके अभिलाषी और स्तनभारसे खिन्न ऐसे सुन्दरियोंका यौवन अथवा वन ॥ ४० ॥

इदानीं निष्कृष्टमर्थमाह—

सत्यं जना वच्मि न पक्षपाता-
ल्लोकेषु सप्तस्वपि तथ्यमेतत्।
नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदन्यः ॥ ४१ ॥

---

१ सर्वथा २ सर्वेषु च। इति च पाठान्तरम्।

सत्यमिति ॥ किं बहुना हे जनाः ! सत्यं वच्मि यथार्थं ब्रवीमि । पक्षपाताद्वैपम्यान्न वच्मि सप्तसु लोकेष्वप्येतदेव सत्यमित्यर्थः । किमेतदित्यत आह । नितम्बिनीभ्यस्तरुणीभ्यो मनोहारि मनोहरं वस्तु नास्ति । तथा ताभ्योऽन्य इतरः दुःखानामेकहेतुर्मुख्यकारणं च नास्ति । "को भोगो रमणीं विना" इत्यादिना भोगैकसाधकत्वात् । " बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ।" इत्यनर्थकमूलत्वाच्च नितम्बिनीनामेव परमसुखदुःखैकनिदानत्वादिति भावः । अत्र सप्तश्लोक्या पक्षद्वयनिरूपणस्यायमभिप्रायः । अखण्डनिरतिशयानन्दावाप्तिलक्षणत्वेनाभ्यर्हितत्वान्मुख्यो मोक्षः पुरुषार्थ इति सकलमतसिद्धान्तः । प्रसूतिभाजो विश्वस्य स्त्रीपुंसाभ्यामेव निष्पन्नत्वात्कामस्य पितृऋणविमोचनहेतुभूततया सततं महापुरुषपरिग्रहात्पुरुषार्थत्वमिति नन्दिकेश्वरश्वेतकेतुपाञ्चालवात्स्यायनादिपूर्वसिद्धान्तः । एवं च सति " पूर्वालाभे परः परः " इति न्यायान्मुख्यकल्पालाभेऽनुकल्पस्यापि विहितत्वान्मोक्षपुरुषार्थसाधनप्रवृत्त्यलाभे कामपुरुषार्थसाधनेषु वा अवश्यं प्रवृत्तिः कर्त्तव्येत्यनुसन्धायैवमुपन्यस्तमिति । तत्र नितम्बिन्यतिरिक्तरम्यवस्त्वनर्थहेत्वोः सत्यपि सम्बन्धेऽप्यसम्बन्धोक्तेऽतिशयोक्तिभेदः । इन्द्रवज्रा वृत्तम् ॥ ४१ ॥

हे लोगो ! यह हम सत्य कहते हैं इसमें कुछभी पक्षपात नहीं करते। संसारमें यह विदित है कि, स्त्रियोंसे अन्य मन हरण करनेवाली और दुःखदाई कोईभी वस्तु नहीं है ॥ ४१ ॥

यदुक्तं " दुःखैकहेतुर्न च कश्चिदन्यः " इति तदेव प्रपञ्चयितुमिदानीं कामिनीगर्हणमारभते । अथ कामिनीगर्हणम् । अत्र सम्भोगनिरूपणानन्तरं कामिनीगर्हणं कामिनीनिन्दा आविंशतिसमाप्ति क्रियते इति शेषः । ननु शृङ्गारालम्बनत्वेन प्रसिद्धानां कामिनीनां गर्हणे शृङ्गारवर्णनप्रतिज्ञाभङ्गः प्रसज्येतेति चेन्न, शिशुपालादिकृतभगवद्गर्हणस्य पुरुषार्थपर्यवसानवत्कामिनीगर्हणस्यापि यथाकथंचिच्छृङ्गारवर्णन एव पर्यवसानान्न कोऽपि विरोध इति मन्तव्यम् । तत्प्रकारमेव विवृणोति—

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।

---

१ त्युत्सुकः इति पाठान्तरम् ।

दृष्ट्वा माद्यंति[1] मोदतेऽभिरमंते[2] प्रस्तौति विद्वानपि[3]
प्रत्याक्षाशुचि[4]भस्त्रिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥ ४२ ॥

कान्तेति ॥ वेत्तीति विद्वान् सारासारविचारचतुरः ज्ञानवानपीत्यर्थः । किमुतान्य इति भावः । " विदेः शतुर्वसुः " इति वस्वादेशः । प्रत्यक्षेणाशुचिभास्त्रिकामपवित्रचर्मपुटम् । स्वार्थे कः । " प्रत्ययस्थात्कात्पूर्वस्य० ". इत्यादिना इकारादेशः " भस्त्रैपाजाज्ञा० " इत्यादिना वैकल्पिकः । पुत्तिकामिति पाठे अशुचिपाञ्चालिकाम् । अत्यन्तजुगुप्सितस्वरूपामित्यर्थः । तदुक्तम् । " ह्रासोऽस्थिसंदर्शनमाक्षियुग्ममत्युज्ज्वलं तत्कलुषावसायाः । स्तनौ च पीनौ पिशितास्रपिण्डौ स्थानान्तरे किं नरके न योषित् ॥ " इति । इत्थम्भूतां स्त्रियम् । "वाम्शसोः" इति विकल्पादियङादेशः । दृष्ट्वा कान्ता कमनीयेति । "कान्तं मनोहरं रुच्यम् " इत्यमरः । उत्पले इन्दीवरे इव लोचने यस्याः सा तथोक्तेति । विपुलश्रोणीभरा पृथुनितम्बाबिम्बेति । उन्नमन्तावूर्ध्वमुत्पतन्ताविव स्थितौ कुतः पीनौ पीवरौ उत्तुङ्गौ उन्नतौ च पयोधरौ स्तनौ यस्याः सा तथोक्तेति । " स्त्रीस्तनाब्दौ पयोधरौ " इत्यमरः । सुमुखाम्भोजा सुन्दरवदनारविन्देति । शोभने मदनकार्मुकरुचिरे भ्रुवौ यस्याः सा तथो[illegible]ति च । माद्यति मत्तो भवति, मोदते हृष्यति, अभिरमते क्रीडते । अभिपूर्वाद्रमतेर्लटि तङ् । व्याङ्परिपूर्वस्यैव परस्मैपदित्वनियमात् । प्रस्तौति उक्तप्रकारेण प्रकारान्तरेण वा अभिष्टौति । अतो मोहस्याविद्याया दुश्चेष्टितं दुर्विलसितम । अहो विद्वांसमपीदृगवस्थापन्नं करोतीत्याश्चर्यमित्यर्थः। एतत्सर्वं व्यामोहमूलमेव तस्य दुरवच्छेदत्वादिति भावः। यद्यपि "अमेध्यपूर्णं कृमिजन्तुसंकुलं स्वभावदुर्गन्धमशौचमध्रुवम् । कलेवरे मूत्रपुरीषभाजने रमेत मूढो न रमेत पण्डितः ॥ " इति वचनात्पण्डितस्येत्थं जुगुप्सितकामिनीकलेवरे रमणमेव नास्ति । तथापि मोहस्यात्यंतप्राबल्यप्रकटनार्थमित्थमुक्तमित्यवगन्तव्यम् । अत्र क्रियाणां बह्वीनां समुच्चितत्वात् क्रियासमुच्चयालंकार एकविषयः । "गुणाक्रियायौगपद्यमलङ्कारः समुच्चयः । " इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

कांता, कमलनयनी, बडे नितम्बवाली, पुष्ट और उत्तुंग ( ऊंचे ) स्तनवाली,सुन्दर कमलमुखी और सुन्दर भौंहवाली यों कह कह पण्डि-

---

१ माद्यति । २ अतिरमते । ३ जानन्नपि । ४ पुत्तिकां इति च पाठान्तरम् ।

तलोगभी स्तुति करते हैं और देखके मोहित होते हैं, आनन्द पावें, रमण करते और उत्कण्ठित होते हैं, प्रत्यक्षही अपवित्रताकी पुतलीरूप स्त्री है उसपर देखो यह मोहकी क्या खोटी चेष्टा है ॥ ४२ ॥

अथ त्रिभिरानुष्टुभैः स्वरूपं दूषयति—

**स्मृता भवति तापाय दृष्टा चोन्मादकारिणी ।**
**स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ४३ ॥**

स्मृतेति ॥ या स्मृता सदृशादृष्टचिन्तादिस्मृतिबीजोद्बोधकसद्भाववशात्स्वत एव कदाचित्स्मरणविषयीकृता सती तापाय भवतीत्यर्थः । ततो दृष्टा सती उन्मादकारिणी चित्तविभ्रमकरी भवति । स्पृष्टा आलिङ्गिता सती मोहाय भवति । बहिःप्रपञ्चविस्मरणकारिणी भवति । अतः सा वधूः कथं नाम कुतो वा दयिता प्रियतमा न कथंचिदपीत्यर्थः । किं तु उक्तबहुनर्थकहेतुभूतत्वादप्रियतमैवेति भावः । अत्र " स्मृता भवति तापाय " इति पदार्थानां विशेषणगत्या तुरीयपादस्थपदार्थं प्रति हेतुत्वात्काव्यलिङ्गभेदः ॥ ४३ ॥

जो स्मरणसे सन्ताप देती है, देखनेसे उन्माद बढाती है अर्थात् मदवाला कर देती है और स्पर्शसे मोहित कर लेती है ऐसी स्त्रियोंको प्रिया क्यों कहते हैं ॥ ४३ ॥

**तावदेवामृतमयी यावल्लोचनगोचरा ।**
**चक्षुष्पथादतीता तु विषादप्यतिरिच्यते ॥ ४४ ॥**

तावदिति ॥ तावदेव तावत्पर्यन्तमेवामृतमयी अमृतोपमाना तद्वन्मधुरेत्यर्थः । वधूरिति शेषः । " तत्प्रकृतिवचने मयट् " " टिड्ढाणञ्० " इत्यादिना ङीप् । कियत्पर्यन्तमित्यत आह । यावत् यावत्पर्यन्तं लोचनगोचरा चक्षुर्विषया भवति तावदिति सम्बन्धः । व्यतिरेके तु नैवमित्याह । चक्षुष्पथात् लोचनमार्गात् । " ऋक्पू० " इत्यादिना समासान्तः । अतीता तु अतिक्रान्ता चेद्विषात्कालकूटादप्यतिरिच्यते अतिरिक्ता भवति । तद्वत्प्राणप्रयासकारिणी भवतीत्यर्थः । अत्र वध्वा अमृतमयत्वविषातिरिच्यमानत्वासम्बन्धेऽपि तत्सम्बन्धाभिधानादसम्बन्धे संबन्धरूपातिशयोक्तिः ॥ ४४ ॥

---

१ बाधिनो । १ पथादपगता इति च पाठान्तरम् ।

स्त्री तभीलौं अमृतमय है जबलौं नेत्रके सामने है। नेत्रसे जब दूर हुई तब विषमेभी अधिक हो जाती है अर्थात् विरहसे सन्ताप देती है॥

उक्तमर्थं भङ्ग्यन्तरणाह—

नामृतं न विष किंचिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ४५ ॥

नेति ॥ एकां नितम्बिनीं मुक्त्वा विहाय अमृतममृतशब्दवाच्यं किञ्चिद्वस्तु नास्ति विषं विषशब्दवाच्यमपि किंचिन्नास्ति इयमेवामृतप्राया चेत्यर्थः । कुत एतदित्याशंक्य तत् साधयति । रक्ता अनुरागवती चेत् सेव नितम्बिन्येव अमृतलता सञ्जीवनी भवतीत्यर्थः । विरक्ता अनुरागरहिता चेत् विषवल्लरी विषलतामञ्जरी । "वल्लरी मञ्जरी स्त्रियाम्" इत्यमरः । प्राणापहारिणी भवतीत्यर्थः । अत्र नितम्बिनीव्यतिरेकेणामृताविषयोरस्तित्वसम्बन्धेऽप्यसम्बन्धात्सम्बन्धेऽसम्बन्धरूपातिशयोक्तिः । तथोत्तरार्धे तस्या मोहामृतलतात्वविषवल्लरीस्वरूपणाद्रूपकालङ्कारः। स च रक्तत्वविरक्तपदार्थहेतुककाव्यलिङ्गोत्थितः सन् पूर्वातिशयोक्तिमुज्जीवयतीति सङ्करः। प्रायेणैकार्थमप्यनेकं श्लोकमुक्तिविशेषलोभाल्लिखन्ति कवयः । यथा नैषधे "आदावेव निपीय" श्लोकद्वयं यथा च "मुखे प्रसाधितस्य" इत्यादिश्लोकद्वयमित्यादि ॥ ४५ ॥

स्त्रियोंसे परे न कोई अमृत है न विष, यदि वह प्रीति करे तो अमृतकी लता है और प्रीति तोड बैठे तो विषकी मञ्जरी है ॥ ४५ ॥

अथ स्त्रीयन्त्रस्रष्टारं दूषयति—

आवर्तः संशयानामविनयभुवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिलोकस्य पाशम् ॥ ४६ ॥

आवर्त इति ॥ संशयानां सन्देहानामावर्तः परिपाकः सकलसन्देहास्पदीभूतमित्यर्थः । अविनयानां भुवनं लोकः । साहसानां पत्तनम् नगरम् । दोषाणां

---

१ भवनं । २ प्राणिनां मोहपाशः । इति च पाठांतरम् ।

रागद्वेषादीनां सन्निधानमक्षयनिधिः । कदाचिदप्यत्र दोषा न क्षीयन्त इति भावः । कपटशतमनेककैतवप्रचुरम् । बहुविधकैतवान्यत्रैव प्राचुर्येण वर्तन्त इति भावः । प्राचुर्ये मयट् । अप्रत्ययानामविश्वासानाम् । " प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । " इत्यमरः । क्षेत्रमुत्पत्तिभूमिः । अनेकाप्रत्ययोत्पादकमित्यर्थः । स्वर्गद्वारस्य स्वर्गलोकप्राप्तिसाधनस्य विघ्नः प्रतिबन्धः । नरकपुरमुखं यमलोकद्वारं तत्प्रापकमित्यर्थः । "मुखं तु वदने मुख्ये ज्ञात्रे द्वाराभ्युपाययोः।" इति यादवः । सर्वमायाकरण्डमशेषशाम्बरीविद्येन्द्रजालमहेन्द्रजालपेटिकेत्यर्थः । अमृतमयं सुधारूपं विषम् । बहिरमृतवत्प्रतीयमानम्, विचार्यमाणे विषप्रायमित्यर्थः । प्राणिलोकस्य जनसमुदायस्य पाशो बन्धनसाधनं स्त्रीयन्त्रं स्त्रीरूपकीलकं केन सृष्टं निर्मितम् । ईदृगनर्थाशययन्त्रनिर्माणत्वेन अस्य कुत्सितत्वमेवेत्यर्थः । अत एव केनेत्युक्तम् । यद्वा यद्यपि ब्रह्मणैव सृष्टं तथापि ईदृग्दुर्यन्त्रनिर्मातृत्वेन तस्य नामोच्चारणमपि कर्तुं न युज्यत इति केनेत्युक्तम् । अत्र स्त्रीयन्त्रे पत्तनादिनिरूपणान्निरवयवरूपकालङ्कारः। तदुक्तम् " आरोपविषयस्य स्यादतिरोहितरूपिणः । उपरंजकमारोप्यमाणं तद्रूपकं मतम् ॥ " इति । स्रग्धरा वृत्तम् ॥ ४६ ॥

संशयोंका भँवर, अविनयका घर, साहसका नगर, दोषोंका पात्र, अविश्वास और सैकडों कपटका खेत, स्वर्गद्वारका विघ्नकारक, नरकनगरका द्वार, मायोंका पेटारा अमृतलपेटा विष और प्राणियोंके फँसानेका फन्दा ऐसा स्त्रीरूपी यंत्र किसने वा ब्रह्माने सृजा है ॥ ४६ ॥

इत्थमनर्थैकतन्त्रमपि स्त्रीयन्त्रं कविवाक्प्रपञ्चवाञ्छितो मूढोऽनुवर्तत इत्याह-

नो[१] सत्येन मृगाङ्क एष वदनीभूतो न चेन्दीवर-
द्वन्द्वं लोचनतां गतं न कनकैरप्यङ्गयष्टिः कृता ।
किं[२]त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥ ४७ ॥

नो इति ॥ एष परिदृश्यमानो मृगाङ्कश्चन्द्रः सत्येन यथार्थेन अवदनं वदनं संपद्यमानो वदनीभूतः वदनत्वेन परिणत इत्यर्थः । नो न भवतीति शेषः ।

१ सत्यत्वेन शशांक । २ किंत्वेकं । इति च पाठान्तरम् ।

अभूततद्भावे च्विः “ ऊर्यादिच्विडाचश्च” इति गतिसंज्ञायां “कुगतिप्रादयः” इति समासः। तथा इन्दीवरद्वन्द्वं नीलोत्पलयुगुलम्। “ द्वन्द्वं रहस्य० ” इत्यादिना निपातः। लोचनतां लोचनभावं च न गतम्। “ तस्य भावस्त्वतलौ ” इति तल्प्रत्ययः। तथा कनकैः सुवर्णदलैः यथा चांपेयप्रसूनैरित्यर्थः। “ कापि चाम्पेयगौरी ” इति पद्मिनीस्वरूपनिरूपणात्। “ अथ चाम्पेयश्चम्पको हेमपुष्पकः ” इत्यमरः। “ पुष्पमूलेषु बहुलम् ” इति लुक्। अङ्गयष्टिर्गात्रयष्टिरपि न कृता न निर्मिता। किं त्वेवमुक्तप्रकारेण वदनं चन्द्र इत्याद्याकारेणेत्यर्थः। कविभिः प्रगल्भवचनैः कवीश्वरैः प्रतारितमना वञ्चितचित्तः विमोहितः सन्निति यावत्। मन्दो मूढो जनस्तत्त्वं जानन्नपि न त्विदं चन्द्रः किन्तु तत्साम्येन तथा व्यपदिश्यत इति विदन्नपीत्यर्थः। त्वङ्मांसास्थिमयमत्यन्तजुगुप्सितमपीत्यर्थः। मृगदृशां स्त्रीणां वपुः कलेवरं सेवते सम्भोगार्थमाश्रयते। विद्वांस्तु नैवमिति भावः अत्र प्रसारितमनःपदार्थस्य विशेषणगत्या जुगुप्सितवपुराश्रयणपदार्थं प्रति हेतुत्वात्काव्यलिङ्गभेदः। शार्दूलविक्रीडितं वृत्तम्॥४७॥

देखो तौ सच चन्द्रमाही मुख नहीं बन गया, कमलही दोनों नेत्र नहीं हुए, स्वर्णहीसे देह नहीं बना है यह स्त्रियोंका शरीर चाम, मांस और हाडमय है परन्तु यह बात जानकरभी कवियोंके बहकानेसे अन्धे अर्थात् विवेकरहित मनुष्य उसे सेवन करते हैं॥ ४७॥

अथ पुरुषाणां भ्रान्तिं सदृष्टान्तमाह--

लीलावतीनां सहजा विलासा-
स्त एव मूढस्य हृदि स्फुरन्ति।
रागो नलिन्या हि निसर्गसिद्ध-
स्तत्र भ्रमत्येव वृथा षडङ्घ्रिः॥ ४८॥

लीलावतीनामिति॥ लीलावतीनां विलासिनीनामतः विलासाः विभ्रमाः सहजा नैसर्गिका अत एव ते विलासा मूढस्याज्ञस्य हृदि स्फुरन्ति। आत्मगोचरा इमे विलासा इति बुद्ध्या सर्वदा हृदये विस्फुरिता भवन्तीत्यर्थः। एतच्च वृथैवेति भावः। तथा हि, नलिन्याः रागो रक्तिमा अनुरागश्च निसर्गसिद्धः किन्तु षडंघ्रिः षट्पदः विटश्च ध्वन्यते। वृथा व्यर्थमेव तत्र नलिन्यां भ्रमति

---

१ मुधा इति पाठांतरम्।

रागोऽयं मद्गोचर इति भ्रान्त्या पर्यटति। वस्तुतस्तु न तथा अतो व्यर्थमस्य भ्रमणमिति भावः । अत्र वाक्यद्वयेऽपि बिम्बप्रतिबिम्बभावेन साम्यनिर्देशाद्दृष्टान्तोलङ्कारः । "यत्र वाक्यद्वये बिम्बप्रतिबिम्बतयोच्यते । सामान्यधर्मौ वाक्यज्ञैः स दृष्टान्तो निगद्यते ॥" इति लक्षणात् । अयं च रागयोर्द्वयोर्भेदेऽपि श्लेषभित्तिकाभेदाध्यवसायमूलातिशयोक्तिनिर्व्यूढभ्रान्तिमदुज्जीवितया प्रस्तुतनलिनीषट्पदविशेषणसाम्यादप्रस्तुतकामिनीविटप्रतीतिगोचरसमासोक्त्याङ्गेन सङ्कीर्यते । वृत्तमुपजातिः ॥ ४८ ॥

'लीलावती स्त्रियोंका लीला करना सहजस्वभाव है सोई मूढोंके हृदयमें वशीकरण हो लगता है । जैसे कमलिनीमें ललाई स्वाभाविक होती है भ्रमर उसपर व्यर्थही आसक्त होकर घूमता है अर्थात् वह समझता है कि मेरेही लिये ललाई चमकाय रही है ॥ ४८ ॥

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ ४९ ॥

सम्मोहयन्तीति ॥ एता वामानि सुन्दराणि नयनानि यासां ताः वामनयनाः नराणां पुरुषाणां सदयं दयायुक्तं हृदयं प्रविश्य संमोहयन्ति मोहमुत्पादयन्ति, मदयन्ति, विडम्बयन्ति, निर्भर्त्सयन्ति, परं च रमयन्ति विषादयन्ति विषादमुत्पादयन्ति तस्मात् एताः स्त्रियः किं नाम न समाचरन्ति अपि तु सर्वमेव आचरन्ति ॥ ४९ ॥

मोह लेती, मत्त कर देती, विडंबना करती, डांट झिडकन देती, रमण कराती और विरहका विषाद देती हैं । ऐसी स्त्रियां मनुष्यके सदय हृदयमें प्रवेश करके क्या नहीं करती हैं ॥ ४९ ॥

अथापातरमणीयरमणीमुखावलोकनेन न विमोहितव्यमित्याह—

यदेतत्पूर्णेन्दुद्युतिहरमुदाराकृति परं
मुखाब्जं तन्वङ्ग्याः किल वसति यत्राधरमधु ।

१ वरं, धरम् । २ तत्र । इति च पाठान्तरम् ।

इदं तत्किंपाकद्रुमफलमिदानीमतिरसं
व्यतीतेऽस्मिन्काले विषमिव भविष्यत्यसुखदम् ॥ ५० ॥

यदीति ॥ यदेतद्वर्णनीयं तन्वंग्यास्तरुण्याः मुखमब्जमिव मुखाब्जं वक्त्रपद्मं वर्तृ पूर्णेन्दोः पूर्णचन्द्रस्य द्युतिहरं कान्तिचोरकं तत्कल्पमित्यर्थः । अब्जस्य पूर्णेन्दुद्युतिहरत्वं विरुद्धमिति ध्वनिः । तथा परमत्यन्तमुदारा रम्या आकृतिराकारो यस्य तत्तथोक्तम् । किं च यत्र मुखाब्जम् अधरमधरोष्ठसम्बन्धि मधु मकरन्दः अमृतं वा वसति अस्ति किल । किलेति वार्तायाम् । न तु कदाप्यनुभूतमित्यर्थः । प्रसिद्धाब्जे तु मकरन्दो वर्तत मुखाब्जे तु वार्त्तामात्रमेव न तु वस्तुतस्तु तदस्तीति भावः । तदिदं वक्त्रपद्ममिदानीमस्मिन् समये प्रारम्भकाल इत्यर्थः । अतिरसमतिशायितमाधुर्यगुणयुक्तं रुचिरतरमिति यावत् । किमप्यनिर्वाच्यमित्यर्थः। पाकद्रुमस्य बालरसालादिवृक्षस्य फलमतिरसबालवृक्षफलं नैवंत्येतन्निर्देशः । "पोतः पाकोऽर्भको डिम्भः" इत्यमरः । यद्वा पाकद्रुमफलं पचेलिमवृक्षविशेषफलमित्यर्थः । तथाभूतस्यैवात्यन्तरसवत्त्वादिति भावः । यद्वा किंपाकमीषत्पक्वं द्रुमफलं तथाभूतस्यैव रुचिविशेषास्पदत्वादिति भावः । अथवा किंपाकाख्यो द्रुमः यस्य फलमापातमधुरं परिणामविषमं च तस्य किंपाकद्रुमस्य फलं तत्कल्पमित्यर्थः। किम्पाकशब्दो निघंट्वन्तरेषु मृग्यः। तस्य रसालादिवृक्षविशेषवाचकत्वं तु कविरेव प्रमाणम्। अस्मिन् प्रवर्तमाने काले व्यतीते अतिक्रान्ते सति विषमिव गरलमिव असुखदं स्वलावण्यदर्शनजनितसम्मोहेन विवेकभ्रंशे विहिताकरणात्प्रत्यवाये वात्यन्तदुःखप्रदमित्यर्थः । भविष्यति । तथा च कालान्तरेऽवश्यं दुःखजनकत्वात्तादात्मिकसुखलोभेन तरुणीवदनपद्मं न विश्वसनीयमिति भावः । किम्पाकशब्दस्य "विषमुष्टौ निरर्थके च" इति शब्दरत्नकोशे वर्तते । तस्मात् रसालादिवृक्षान्तःपातित्वं न सम्भवतीति मन्तव्यम् । शिखरिणी वृत्तम् ॥ ५० ॥

पूर्णमासीके चन्द्रमाकी छवि हरनहार अत्यन्त सुन्दर आकारवाली स्त्रियोंका मुखकमल जिसमें अधरामृत रहता है वह अज्ञात वा युवा अवस्थामें अच्छा लगता है फिर वह काल व्यतीत होनेपर ज्ञात वा वृद्धापन प्राप्त होनेसे मदारके फलके समान विषसा बुरा लगेगा॥५०॥

---

१ तावत् । २ मिवातीव विरसं इति च पाठांतरम् ।

अथास्या अनर्थहेतुभूतनदीत्वनिरूपणेन परित्याज्यतामाह—

उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन-
द्वन्द्वेनोद्गतचक्रवाकयुगला वक्त्राम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूरात्र नापेक्षते
संसारार्णवमज्जनं यदि तदा दूरेण संत्यज्यताम् ॥ ५१ ॥

उन्मीलदिति ॥ तिस्रश्च ताः वल्यश्च त्रिवल्य इति द्विगुसमासः । यथाह वामनः "त्रिवलीशब्दसंज्ञा च" इति सूत्रेण सप्तर्षय इतिवत् "दिक्संख्ये संज्ञायाम्" इति संज्ञायां द्विगुः इति । उन्मीलन्त्य उत्पद्यमानास्त्रिवल्यो वलित्रयमेव तरङ्गाः । यद्वा त्रित्वसंख्यावल्यस्त्रिवल्यः । उत्तरपदलोपिसमासः । ता एव तरङ्गाः ऊर्मयस्तेषां निलया । प्रोत्तुङ्गावत्युन्नतौ पीनौ पीवरौ च यौ स्तनौ तयोर्द्वंद्वेन युगलेन हेतुना उद्गतमुच्चलच्चक्रवाकयुगलं चक्रवाकाख्यपक्षिविशेषयुग्मं यस्याः । स्तनरूपचक्रवाकयुगलेत्यर्थः । वक्त्रमेवाम्बुजं तेनोद्भासते अभीक्ष्णमिति तदुद्भासिनी । "बहुलमाभीक्ष्ण्ये" इति णिनिः । अभितः समंतात् क्रूरा कुटिलहृदया । नदीपक्षे क्रूरा वक्रगतिप्रवाहा । अथवा अभितः सर्वतः प्रवर्तमानाः क्रूरा नक्रादिक्रूरजन्तवो यस्याः सा । कान्ताकारधरा कान्तारूपधारिणी इयं परिदृश्यमाना नदी कर्म । अत्रास्मिन् लोके संसार एवार्णवः तत्र मज्जनं नापेक्षते नाभिलष्यते । यदि तदा अनपेक्षापक्षे दूरेण सन्त्यज्यतां दूरतर एव विसृज्यताम् । "दूरान्तिकार्थेभ्यो द्वितीया च" इति विकल्पात्तृतीया । अन्यथा तत्समाश्रयेण अर्णवमज्जनमेव सिद्धं स्यादिति भावः । अत्र समस्तवस्तुवर्तिसावयवरूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

शोभित पेटकी त्रिवलीही तरंगका समूह है, उत्तुंग और पुष्ट दोनों स्तनही उसमें चक्रवाकके जोडे हैं, जिसका गंभीर आशय मुखरूपी कमलसे शोभित है ऐसी स्त्रीका आकार धारण किये नदी है सो हे पुरुषो ! जो तुम संसारसमुद्रमें न मग्न हुआ चाहो तो इसे दूरहीसे परित्याग करो । इसका यह तात्पर्य है कि नदीमें गिरी वस्तु घूम फिरके समुद्रमें जा पडती है ॥ ५१ ॥

---

१ नोद्यत । २ मिथुना । ३ क्रूराशया नेष्यते । ४ ततो इति च पाठान्तरम् ।

इतोऽपि न विश्वासार्हाः स्त्रियः इत्याह द्वाभ्याम्—

जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥५२॥

जल्पन्तीति ॥ अन्येन सार्धमेकेन पुरुषेण सह जल्पन्ति संलपन्ति । सविभ्रमाः सविलासाः सत्यः अन्यं पुरुषं पश्यन्ति । हृद्गतं हृदयस्थमन्यं चिन्तयन्ति अतो योषितां स्त्रीणां प्रियतमः नियत इति शेषः । को नाम न कोऽपीत्यर्थः ५२

बातें तो किसी अन्य पुरुषसे करती हैं और विलाससहित औरहीकी ओर देखती हैं और हृदयमें औरहीसे मिलनेकी चाह रखती हैं, फिर कहो तो इनमेंसे कौन स्त्रियोंको प्यारा है सो नहीं जान पडता ५२

अथ योषितः सर्पस्वरूपेण सखायं भीषयन् दूरादपसर्पणमुपदिशति—

अपसर सखे दूरादस्मात्कटाक्षविषानलात्
प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।
इतरफणिना दष्टः शक्यश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ५३ ॥

अपसरेति ॥ हे सखे बन्धो, कटाक्षा अपाङ्गवीक्षणान्येव विषानला विषाग्निज्वाला यस्य तस्मात् । प्रकृत्या स्वभावत एव कुटिलात् । "प्रकृत्यादिभ्यस्तृतीया च" इति तृतीयासमासः । विलासा विभ्रमा एव फणाः स्फटास्ताः बिभर्तीति तथोक्तात् । "स्फटायां तु फणा द्वयोः" इत्यमरः । तस्मात् योषित्सर्पात् कामिनीरूपव्यालाद्दूरादपसर दूरं गच्छ । योषित्सर्पसमागमं मा कुर्वित्यर्थः । अन्यथा तत्समागमेन दंशनप्रसङ्गे चिकित्साया दुष्करत्वादिति भावः । "दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात्पञ्चमी । तदेव प्रकटयति-इतरेति । इतरफणिना प्रसिद्धसर्पेण दष्टः पुमान् औषधैः मूलिकामणिमन्त्रादिभिरित्यर्थः । चिकित्सितुं विषापरोपणेनोज्जीवयितुं शक्यः । चतुरवनिताभोगिना निपुणतरुणीसर्पेण ग्रस्तं दष्टं समाक्रान्तं च पुरुषं तु मन्त्रिणो मान्त्रिका विषवैद्यास्त्यजन्ति हि । तद्ग्रासजनितोन्मादस्य दुरवरोपणत्वादिति भावः । अत्रापि समस्तवस्तुवर्तिसावयवरूपकालङ्कारः । तेन चोपमानात्प्रसिद्ध-

१ शिखा० । इति पाठान्तरम् ।

सर्पादुपमेयस्य योषित्सर्पस्याधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः । हरिणीवृत्तम् ॥ ५३ ॥

हे मित्र ! सहजही क्रूर और विलासरूपी विषाग्निमे दूर भाग क्योंकि अन्य सर्पोंका डसा हुआ औषधीसे अच्छा हो सकता है पर चतुरस्त्रीरूपी सर्पके डसे हुएको मन्त्रतन्त्रवालेभी छोड भागते हैं ॥ ५३ ॥

पुनः प्रकारान्तरेण भीषयति–

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ।
येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान् विकृष्य विपचत्यनुरागवह्नौ ॥ ५४ ॥

विस्तारितमिति ॥ मकरकेतनो मदन एव धीवरः कैवर्तस्तेन कर्त्रा । "कैवर्ते दाशधीवरौ " इत्यमरः । अत्रास्मिन् भवाम्बुराशौ संसारसागरे स्त्रीसंज्ञा संजाता स्त्रीसंज्ञं योषिद्रूपमित्यर्थः । तारकादित्वादितच् । बडिशं मत्स्यवेधनं मत्स्यगलग्राहकसामिषवक्रायोयंत्रमित्यर्थः । "बडिशं मत्स्यवेधनम् " इत्यमरः । विस्तारितं प्रवर्तितम् । येन स्त्रीबडिशेन तस्य स्त्रीबडिशस्याधरमेवामिषं मांसखण्डं तत्र लोला सतृष्णा ये मर्त्या मनुजास्त एव मत्स्या मीनास्तानचिराद्विकृष्याकृष्यानुराग एव वह्निस्तत्र विपचति विशेषेण पक्वान् करोति अत्यन्तं सन्तापयतीत्यर्थः । मन्मथधीवर एवेति शेषः । सोऽप्येतद्द्वारैव मनुजान् परिपीडयतीति भावः । अत्रापि पूर्ववद्रूपकालङ्कारः । वसन्ततिलकावृत्तम् ॥ ५४ ॥

इस संसाररूपी समुद्रमें कामदेवरूपी केवटने स्त्रीरूपी जालको इस लिये फैलाया है कि वह कामदेव मनुष्यरूपी मच्छ उसके अधरमांसके जो लोभी हैं उन्हें वशमें कर अनुरागरूपी अग्निमें पकाता है ॥ ५४ ॥

अथ मानसं भीषयति–

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा संचर मनःपान्थ तत्रास्ते स्मरतस्करः ॥ ५५ ॥

---

१ पचतीत्यनु इति च पाठान्तरम् ।

कामिनीति ॥ पन्थानं गच्छति नित्यमिति पान्थो नित्यपथिकः । "पन्थो ण नित्यम्" इति णप्रत्ययः पन्थादेशश्च । मन एव पान्थस्तस्य सम्बुद्धिः हे मनःपान्थ । कुचावेव पर्वतौ ताभ्यां दुर्गमे गन्तुमशक्ये कामिन्याः कायो देहः स एव कान्तारमरण्यं तत्र मा सञ्चर सञ्चारं मा कुरु । न प्रवर्तस्वेत्यर्थः । कुतः? तत्र कान्तारे स्मर एव तस्करः चोरः आस्ते वर्तते । स च मानसर्वस्वमपहरिष्यतीति भावः । "चोरैकागारिकस्तेनदस्युतस्करमोषकाः ।" इत्यमरः । "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च" इति सुडागमतलोपौ । अलङ्कारस्तु पूर्ववत् ॥ ५५ ॥

स्त्रियोंका शरीररूपी वन जो कुचरूपी पर्वतोंसे अतिदुर्गम हो रहा है उसमें हे बटोही मन ! तू मत जा, तहां कामदेवरूपी चोर रहता है॥ ९९ ॥

अथ त्रिभिः कस्यचिदनुभवमालक्ष्याह—

व्यादीर्घेण चलेन वक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिनाऽहिना परमहं दष्टो न तच्चक्षुषा ।
दष्टेः सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम्॥५६॥

व्यादीर्घेणेति ॥ व्यादीर्घेण अत्यायतेन अन्यत्र कर्णान्तविश्रान्तेन चलेन चञ्चलप्रकृतिना वक्रगतिना निसर्गकुटिलसञ्चारेण । समानमेतद्विशेषणद्वयम् । तेजस्विना बलवता अत्युज्ज्वलेन च प्रशंसायामिनिः। भोगिना फणवता। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः।" इत्यमरः। अन्यत्राभोगिनेति च्छेदः। विशालेनेत्यर्थः। नीलाब्जस्य नीलोत्पलस्य द्युतिरिव द्युतिर्यस्य तेन एकत्र तद्वर्णेन अन्यत्र तत्सदृशेनेत्यर्थः । अहिना सर्पेण परमत्यन्तमहं दष्टः । किन्तु तच्चक्षुषा तस्याः कामिन्याः चक्षुषा उक्तविशेषणेन न दष्ट इत्यर्थः । चिकित्सकाः वैद्या धर्मार्थिनः परोपकार एव प्रयोजनमेषामस्ति तथाभूताः सन्तः दिशि दिशि प्रतिदिशम् । नित्यवीप्सायां द्विर्भावः । प्रायेण भूम्ना सन्ति सर्वत्र सन्तीत्यर्थः । किन्तु मुग्धायाः मुग्धाङ्गनायाः यदक्षि। यद्वा मुग्धाक्षि सुन्दरावलोकनं तेन सर्प-

१ वर० । २ दष्टे । ३ विक्षतस्य इति च पाठान्तरम् ।

रूपेण क्षणं क्षणमात्रं वीक्षितस्य दृष्टस्य ग्रस्तस्येत्यर्थः । विक्षतस्येति पाठे दष्टस्येत्यर्थः । मे मम तु वैद्यो न हि चिकित्सको नास्ति हि औपधं विपहरभेषजमपि च नास्तीत्यर्थः । अतो महामोहार्णवनिमज्जनमेव न तु तत्पारगमनमिति भावः । अत्र प्रसिद्धाह्यपेक्षया चक्षूरूपाहेराधिक्यकथनाद्व्यतिरेकालङ्कारः । " उपमानाद्यदन्यस्य व्यतिरेकः स एव सः । " इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ५६ ॥

बडा लम्बा चञ्चल टेढी चालवाला और तेजवाला फनधारी नील कमलसा काला सर्प जो मनुष्यको काट ले तो अच्छा, परन्तु स्त्रीके कटाक्षका काटा अच्छा नहीं क्योंकि सांपके डसेको बचानेवाले सब देशमें वसते हैं प्रायः धर्मार्थी भी होते हैं पर अच्छे नेत्रवाली स्त्रीकी दृष्टिसे काटे हुएको न कोई मन्त्र है न औपधी है ॥ ५६ ॥

इह हि मधुरगीतं नृत्यमेतद्रसोऽयं
स्फुरति परिमलोऽसौ स्पर्श एषः स्तनाम् ।
इति हतपरमार्थैरिन्द्रियैर्भ्राम्यमाणः
स्वंहितकरणधूर्तैः पञ्चभिर्वञ्चितोऽस्मि ॥ ५७ ॥

इहेति ॥ इह हि तरुणीष्वेवेत्यर्थः । हिरत्रावधारणार्थकः । " हिर्हेतावनधारणे " इत्यमरः । मधुरं सन्तापहरं श्रोत्रसुखावहमित्यर्थः । " शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् । " इति वचनात् । तद्गीतं गानं स्फुरति, एतन्नयनानन्दकरं नृत्तं नाट्यं स्फुरति अयं रसनेन्द्रियस्वादातिशयप्रदो रसः अधरामृतं स्फुरति, असौ घ्राणतर्पणः परिमलः पद्मिनीजातिनिमित्तगन्धविशेपः घनसारगन्धसारादिलेपनप्रयुक्तामोदविशेपो वा स्फुरति, एपः । त्वगिन्द्रियसौख्यावहः स्तनानां स्पर्शः स्फुरति । " स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण " इति वामनसूत्रे प्रायग्रहणाद्बहुवचनप्रयोगः । इत्येवं प्रकारेण हतो विनष्टः परमार्थस्तत्त्वार्थो येषां तैर्विपयपरतन्त्रैरित्यर्थः । अत एव स्वहितकरणे धूर्तैः कितवैः आत्महिताचरणतत्परैरिव स्थितैरित्यर्थः । पञ्चभिरिन्द्रियैः श्रोत्रादिभिर्भ्राम्यमाणस्तत्तद्विपयेष्वासज्यमानः सन् वञ्चितः प्रतारितोऽस्मि । न चैतत्कैतवं प्रागेवाज्ञासिपमित्यर्थः । मालिनीवृत्तम् ॥ ५७ ॥

---

१ स्वहितकरणदक्षैः । इति पाठान्तरम् ।

यह कैसा सुन्दर मधुर गीत है, रूप देखो कैसा अच्छा है, इस वस्तुका रस कैसा स्वादिष्ठ है, इस वस्तुकी कैसी अच्छी सुगन्ध है, स्त्रीके स्तनोंका स्पर्श क्या अच्छा सुख देता है इस भांति परलोकको नष्ट करनेवाली और अपने प्रयोजन साधनेमें अतिधूर्त्त है उन पांचों ज्ञानेंद्रियोंसे हे नर ! तू हेर फेर कर ठगा गया ॥ ९७ ॥

अथाङ्गनाव्यामोहजनकं मन्मथं दूषयति—

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः ।
भ्रमावेशादङ्गे कमपि विदधद्भङ्गमसकृत्
स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ ९८ ॥

नेति ॥ मन्त्राणां गम्यो मन्त्रसाध्यो न भवति । भैषज्यविषयः औषधाद्यपनेयश्च न भवति । भेषजमेव भैषज्यमिति विग्रहः । स्वार्थेष्यञ्प्रत्ययः । "भेषजौषधभैषज्यानि " इत्यमरः । तथा विविधैर्नानाप्रकारैः शान्तिकशतैरनेकशान्तिकर्मभिः प्रध्वंसं विनाशं चापि न व्रजति न गच्छति । " पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते । तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ " इति स्मरणात् । प्रसिद्धैस्तु जपादिभिः शाम्यति न त्वयमिति भावः । किन्तु भ्रमावेशान्मोहोत्पादनात् अङ्गे शरीरे कमप्यनिर्वाच्यं भङ्गं जाड्यम् । यद्वा भ्रमावेशान्मतिभ्रंशापादनात् अङ्गे करचरणाद्यवयवेष्वित्यर्थः । कमपि भङ्गं विक्षेपादिविकारमसकृद्बहुवारं विदधत्कुर्वन् । दधातेर्विपूर्वाच्छतृप्रत्ययः । " नाभ्यस्ताच्छतुः " इति नुमभावः । स्मरापस्मारः स्मरप्रयुक्ताङ्गनाव्यामोहरूपापस्माररोगो दृशं मदीयदृष्टिं भ्रमयति व्यत्यासयति । अतस्मिन् तज्ज्ञानं करोतीत्यर्थः । तथा घूर्णयति चक्रवद्भ्रामयति च । किमत्र करोमि कथमयं चिकित्स्य इति भावः । यथाहुर्नैदानिकाः:-" क्रुद्धैर्धातुभिराहते च मनसि प्राणी तमः संविशन् दन्तान् खादति फेनमुद्वमति दोःपादौ क्षिपन् मूढधीः । पश्यन् रूपमसत्क्षितौ निपतति प्रायः करोति क्रिया बीभत्स्याः स्वयमेव शाम्यति गते वेगे त्वपस्माररुक् ॥" अत एव व्यतिरेकालङ्कारः । लक्षणं तूक्तम् । शिखरिणीवृत्तम् ॥ ९८ ॥

१ किमपि । २ भव्यमसमं इति च पाठांतरम् ।

यह कामदेवरूपी अपस्मार ( मृगी ) रोग भ्रमके आवेशसे बडा दुःखदाई शरीरको तोडता और मनको भ्रमाता नेत्रोंको घुमाता है और इस रोगमें मंत्रोंकी गति नहीं, औषधीभी नहीं काम करती, अनेक प्रकारकी शांति अर्थात् पाठ पूजादिसेभी नाश नहीं होता ॥ ५८ ॥

अथ त्रिभिः पण्याङ्गनागर्हणं कुर्वन्निगमयति--

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ५९ ॥

जात्यन्धायेति ॥ जात्यन्धाय जन्मप्रभृत्यवसन्नदृशे पुरुषाय च दुष्कुलाय च दुर्मुखाय मुखराय बहुगर्हाभाषणदूषितवदनायेत्यर्थः । "दुर्मुखे मुखराबद्धमुखौ" इत्यमरः । यद्वा दुष्टं व्याध्यादिना जुगुप्सितं दुर्गन्धयुक्तं वा मुखं यस्य तस्मै । जरया विस्रंसया जीर्णानि शिथिलानि कृशानि विश्लथसन्धिबन्धानि च अखिलाङ्गानि करचरणाद्यशेषावयवा यस्य तस्मै च ग्रामीणाय ग्रामान्तरादागताय अज्ञातकुलगोत्राय पान्थाय चेत्यर्थः । किम्बहुना, गलन् स्रंसमानं कुष्ठं कुष्ठजनितपूयरक्तादि तेनाभिभूताय गर्हिताय च लक्ष्मीलवश्रद्धया सम्पल्लेशप्राप्त्याशया मनोहरमतिसुन्दरं निजवपुः स्वशरीरं यच्छन्तीष्वर्पयन्तीषु चुम्बनाश्लेषणदन्तनखव्रणादिसम्भोगार्थं तदधीनं कुर्वतीष्वित्यर्थः । ददातेः "दाण् दाने" इत्यस्माद्धातोः शतरि "उगितश्च" इति ङीप् । "पाघ्राध्मा०" इत्यादिना दाणो यच्छादेशः । तथा विवेकः कर्तव्याकर्तव्यविचारः स एव कल्पलतिका तस्याः शस्त्रीषु छुरिकासु विवेकविच्छेदकरीष्वित्यर्थः । विवेकस्याप्यखिलार्थसङ्घटकत्वात्कल्पलतिकारूपणमवगन्तव्यम् । "स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ।" इत्यमरः । "बह्वादिभ्यश्च" इति ङीप् । पण्यस्त्रीषु वेश्याङ्गनासु कः पुमान् विवेकरहितोऽपीत्यर्थः । रज्येतानुरक्तो भवेन्न कोऽपीत्यर्थः । "वारस्त्री गणिका वेश्या सुलावण्याङ्गनापि च" इति वैजयन्ती । शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

जन्मांध, कुरूप, वृद्धापनसे शिथिलांग, गँवार, नीचजाति और टपकते कोढसे भरे पुरुषोंकोभी अपना सुंदर देह थोडे धनकी आशासे

समर्पण करती है ऐसी वेश्या विवेकरूपी कल्पलताकी छुरीसी है उससे कौन बुद्धिमान् रमे ? ॥ ५९ ॥

वेश्यासौ मदनज्वाला रूपेन्धनविवर्धिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ६० ॥

वेश्येति ॥ असौ वेश्या रूपं सौन्दर्यमेवेन्धनानि तैः समिद्भिर्विवर्धिता प्रवर्धिता मन्मथज्वाला मन्मथाग्निज्वाला " इन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् । " इत्यमरः । यत्र मदनज्वालारूपवेश्यायां कामिभिः कामुकैः यौवनानि नूतनवयांसि । युवादित्वादण्प्रत्ययः । धनानि च हूयन्ते हव्यरूपेण तत्सात्क्रियन्ते विलुप्यन्त इत्यर्थः । स्वर्गादिफलकांक्षिभिराहवनीयाग्निज्वालायां हवींषीवेति भावः । अत्र वेश्यायामारोप्यमाणस्य ज्वालात्वस्य प्रकृतहवनोपयोगित्वात्परिणामालङ्कारः " आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः " इति लक्षणात् । स च रूपेन्धनेति रूपकेण सङ्कीर्यते । रूपकत्वारोपणस्योपरञ्जक मात्रमेवेति विवेकः ॥ ६० ॥

वेश्या तो कामाग्निकी ज्वाला है, रूपरूपी इन्धनसे प्रचण्ड है कामी पुरुष उसीमें अपना धन और यौवन होम करते हैं ॥ ६० ॥

कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ।
चारभटचोरचेटकविटनटनिष्ठीवनशरावम् ॥ ६१ ॥

क इति ॥ मनोज्ञं सुन्दरमपि वेश्याया अधरः पल्लवमिवेत्युपमितसमासो न त्वधरः पल्लवमिति रूपकम् । रूपके तूत्तरपदप्राधान्येन तत्र चुम्बनायोगात् । कः कुलपुरुषः सत्कुलसम्भवः पुमान् जातिनीतिकुलाचारधर्मज्ञ इत्यर्थः । चुम्बति न कोऽपीत्यर्थः । कुत एतदित्याशङ्कायामचुम्बनहेतुभूतं विशेषणमाह-चारा गूढपुरुषाः, भटा योधाः, चोरास्तस्कराः, चेटकाः स्त्रीपुरुषसन्धानकुशलाः दौत्यकर्मनिरताः, विटा जाराः, नटा भूमिकारास्तेषां पुरुषापसदानां निष्ठीवनशरावमुच्छिष्टपात्रं परमापवित्रमित्यर्थः । चुम्बनसमये तदुच्छिष्टस्य तत्र संक्रमणादिति भावः । अत्र यद्यपि " रतिकाले मुखं स्त्रीणां शुद्धमाखेटके शुनाम् ।" इति स्मरणात्सुरतसमये पवित्रमेव स्त्रीमुखं तथाप्युक्तरीत्या कश्मल-

१ समेधिता इति पाठान्तरम् ।

सम्पर्कात् हेयतया चुम्बनानर्हत्वान्न चुम्बनीयमिति तात्पर्यम्—" शरावो वर्धमानकः " इत्यमरः । अत्र रूपकोपमानुप्रासानां संसृष्टिः ॥ ६१ ॥

वेश्याका अधरपल्लव यदि सुन्दर है तोभी उसे कौन कुलीन पुरुष चुंबे क्योंकि ठग, ठाकुर, चोर, नीच, नट इत्यादि और जारोंके थूकनेका ठीकरा है ॥ ६१ ॥

स्त्रियो बाह्यमधुराः अन्तर्विषा अतः सर्वथा त्याज्या एव न तु ग्राह्या इत्यभिप्रायेणेत्याह—

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥६२॥

मध्विति ॥ योषितां स्त्रीणां वाचि मधु क्षौद्रं तिष्ठति हृदि हृदये केवलं प्राधान्येन हालाहलमेव कालकूटविषमेव अत एव अस्मात् कारणादेव अधरः अधरोष्ठः निपीयते । अत्र मधु वर्तते इति मत्वैव सर्वजनैरादृत्य नितरां पीयते। हृदयं मुष्टिभिस्ताड्यते । अत्र विषं वर्तत इति मत्वैव सर्वजनैस्ताडनं क्रियते। अतः स्त्रियः स्ववचनेषु केवलमधुधारास्राविण्यः हृदये विषतुल्याभिप्रायवत्यश्च इति पूर्वार्धे प्रदर्शितम्।उत्तरार्धे तु प्रथमपादे मधुग्रहणं च द्वितीयपादे हालाहलस्थानहृदयताडनं चेति प्रदर्शितमित्यभिप्रायः । अत्र उत्प्रेक्षातिशयोक्तिकाव्यलिङ्गध्वनिभेदानां संसृष्टिः ॥ ६२ ॥

स्त्रियोंके अधरमें अमृत और छातियोंमें विष रहता है इसी हेतु लोग अधरपान करते हैं और छातीमें मुष्टिका प्रहार करते हैं ॥ ६२॥

एवं तावत्कामिनीगर्हणं कृतं किं विरक्ताः सन्ति वा न वेत्याशङ्कायां सन्त्येवेति मनसि निधाय तत्रापि सुविरक्तदुर्विरक्तभेदेन द्वैविध्यं प्रतिपादयिष्यन्नादौ सुविरक्तपद्धतिं वर्णयितुमुपक्रमते धन्या इत्यादिभिर्नवभिः—

धन्यास्त एव धवलायतलोचनानां
तारुण्यदर्पघनपीनपयोधराणाम् ।
क्षामोदरोपरि लसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ६३ ॥

---

१ तरला। २ रूप इति च पाठान्तरम् ।

धन्या इति ॥ त एव पुरुषा धन्याः सुकृतशालिनः सुविरक्ता इति यावत् । " सुकृती पुण्यवान् धन्यः " इत्यमरः । ते क इत्याकांक्षायामाह । धवले पुण्डरीकदलसदृशे आयते कर्णान्तविश्रान्ते च लोचने यासां तासाम् । तारुण्यदर्पेण यौवनमदोद्रेकेण घनौ पीवरौ पयोधरौ स्तनौ यासां तासाम्।क्षामोदरस्यातिकृशमध्यस्योपरि उपरिष्टाल्लसन्त्यः प्रकाशमानाः यास्त्रिवल्यः तिस्रश्च ता वल्यश्च त्रिवल्यः " दिक्संख्ये संज्ञायाम् " इति समासः । संख्यापूर्वत्वेऽपि सप्तर्षय इत्यादिवत् ज्ञेयमित्युक्तं प्राक् । ता लता इव यासां तासाम् । तेनैतासां पाद्मनीत्वं सूच्यते । तदुक्तं रतिरहस्ये–" त्रिवलिललितमध्या हंसवाणी सुवेषा " इति । क्षामेत्यत्र " क्षायो मः " इति मत्वम् । तथा चेत्थम्भूतरूपसम्पन्नानां कामिनीनामाकृतिमाकारविशेषं दृष्ट्वा । " इङ्गितं हृद्गतो भावो बहिराकारमाकृतिः " इति सज्जनः । येषां पुरुषाणां मनो विकृतिं विकारं तत्परतन्त्रत्वमिति यावत् । नैति न प्राप्नोति अत एव धन्या इति सम्बन्धः।एवं निर्विकारचित्तत्वं शमसम्पन्नानामेव न त्वन्येषामिति भावः। तदुक्तम्–"शमो वैराग्यानां निर्विकारचित्तत्वम् " इति । वसन्ततिलकावृत्तम् ॥ ६३ ॥

चञ्चल बडे नेत्रवाली, यौवनके अभिमानसे भरी, दृढ और पुष्टस्तनवाली, जिनके कृशोदरपर त्रिवलीलता शोभती है ऐसी स्त्रियोंकी आकृति देखकर जिन पुरुषोंके मनमें विकार नहीं उत्पन्न होता वे धन्य हैं ॥ ६३ ॥

अथ पूर्वोपभुक्तकामिनीसम्बोधनव्यञ्जनसुविरक्ततां प्रकटयति—

बाले लीलामुकुलितममी मन्थरा[1] दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
सम्प्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षीणो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ६४ ॥

बाले लीलामुकुलितमिति ॥ हे बाले मुग्धे, लीलया विलासवैचित्र्या मुकुलितान्यर्धनिमीलितानि यस्मिन् कर्मणि तत्तथा तथा मन्थरा अलसप्रायाः अमी दृष्टिपाताः विलोकनप्रसाराः किं किमर्थं क्षिप्यन्ते । न विक्षेप्या इत्यर्थः। किन्तु

---

१ सुन्दरा इति पाठान्तरम्।

विरम विरम अभीक्ष्णं विरम । दृष्टिविक्षेपादिति शेषः। आभीक्ष्ण्ये द्विर्भावः। "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । कुत एषोऽयं ते श्रमः कटाक्षविक्षेपजनितायासो व्यर्थो निरर्थकः।अभिमतफलानिष्पत्तेरिति भावः । नन्वेतावत्पर्यन्तं मदायत्तचित्तेषु युष्मासु कथं फलासिद्धिरित्यत आहुः। सम्प्रतीदानीं वयं मन्ये परे. त्वद्विलासलालसत्वेन सम्मोहितास्तदानीन्तना इदानीं न भवाम इत्यर्थः । कुतो बाल्यमुपरतं नष्टम् । बाल्यशब्देन यौवनं लक्ष्यते । त्वत्पारवश्यकारि यौवनमुपरतमित्यर्थः । यद्वा बाल्यमविवेकित्वमुपरतम् । किं त्वास्था परिशीलनादरः वनान्ते अरण्यमध्ये वर्तते इति शेषः । न तु त्वयि । रागं परित्यज्य वैराग्येण वनवासमपेक्षामह इत्यर्थः । तत्कुतः मोहोऽज्ञानं क्षीणो ध्वस्तः । त्वदासङ्गजननहेतुर्निर्मूलोऽभूदित्यर्थः। अतो जगज्जालमशेषप्रपञ्चं तृणमिव निःसारमालोकयामः। "निस्पृहस्य तृणं जगत्" इति लक्षणात्तृणं पश्यामः। इदानीं ज्ञानोदयवशाच्च मनःसुखातिरिक्तं सर्वं तुच्छमनुसन्दधाम इत्यर्थः। अतस्त्वया न प्रेक्षणीयमिति भावः । मन्दाक्रांतावृत्तम् ॥ ६४ ॥

हे बाले ! लीलासे किंचित् विकसित और मन्थर कटाक्ष हमपर क्यों फेंकती है विश्राम ले ले! हमारे प्रति तेरा यह श्रम व्यर्थ है क्योंकि अब हम कुछ औरही हो गये। लडकपन हमारा छूट गया, वनमें रहते हैं, मोहभी क्षीण होगया और इस जगत्के जालको तृणसमान देखते हैं ॥ ६४ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचोरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरशबरबाणव्यतिकर-
ज्वलज्ज्वाला शान्ता तदपि न वराकी विरमति ॥ ६५ ॥

इयमिति ॥ इयमेषा बाला मुग्धा मां प्रति मामुद्दिश्यानवरतमविच्छिन्नं यथा तथा इन्दीवरदलप्रभाचोरमिन्दीवरकान्तिमोषकं तत्कल्पमित्यर्थः । चक्षुः क्षिपति प्रसारयाति। अनया बालया किमभिप्रेतमपेक्षितं तन्न जानामीत्यर्थः। ननु तया त्वत्सङ्ग एवापेक्षितस्तं कुतो न जानासीत्याशङ्कायामाह—अस्माकं मोहो गतः उपरतः । इदानीमिति शेषः । ननु पूर्वं मामित्येकवचनं प्रयुज्य-

स्माकमितीदानीं बहुवचनप्रयोगात्कथं सामानाधिकरण्यमुपपद्यत इति चेत्तथापि निवृत्तिमार्गोत्सुकित्वप्रयुक्तात्मसंभावनया बहूकरणं न दोषायेति समाधेयम्। यद्वा मामिति समुदायनिर्देशेन वा न दोषः। तथा स्मर एव शबरः किरातस्तस्य बाणव्यतिकरेण शरसंपर्केण यो ज्वरः सन्तापस्तस्य ज्वाला शान्ता विरतेत्यर्थः। तदपि तथापि वराकी न विरमति विरतिं न प्राप्नोति। पूर्वं प्राणप्रियतया गरीयस्या बालायां वराकीशब्दप्रयोगेणास्यात्यन्तवैराग्यं सूच्यते। "जल्पभिक्षकुण्ठलुंठ०" इत्यादिना पाकन्निति पाकन्प्रत्यये पित्वात् ङीप्प्रत्यये च वराकीति सिद्धम्। शिखरिणीवृत्तम्॥ ६५॥

इस बाला स्त्रीका क्या अभिप्राय है जो यह कमलदलोंकी प्रभाके तिरस्कार करनेवाले नेत्रोंको मेरी तरफ चलाती है, अब हमारा अज्ञान गया और कामदेवरूपी भीलके बाणोंसे उठी हुई अग्नि शांत होगई तोभी यह मूर्खिणी बाला विरामको प्राप्त नहीं होती अर्थात् नेत्रोंका फेकना नहीं छोडती॥ ६५॥

संप्रति साटोपपरिवारकन्दर्पनिराकरणवचनमाह—

किं कन्दर्प शरं कदर्थयसि रे कोदण्डटङ्कारितं
रे रे कोकिल कोमलं कलरवं किं वा वृथा जल्पसि।
मुग्धे स्निग्धविदग्धचारुमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते॥ ६६॥

किमिति॥ रे कन्दर्प! हे मदन! रे इति नीचसंबोधने। "नीचसम्बोधने तु रे" इत्यमरः। एवमुत्तरत्रापि। कोदण्डटङ्कारितं कोदण्डटङ्कारवत् कृतं धनुर्गुणटङ्कारपूर्वकमित्यर्थः। "तत्करोति०" णिचि णाविष्ठवद्भावे "विन्मतोर्लुक्"। शरं त्वदीयबाणं किं किमर्थम्। कुत्सितोऽर्थः कदर्थः। "कोः कत्तत्पुरुषेऽचि" इति कुशब्दस्य कदादेशः। कदर्थं करोषि कदर्थयसि व्यर्थयसीत्यर्थः। धात्वर्थे णिचि सिप्। तथा रे रे कोकिल हे कलकण्ठ अत्र "असूयासम्मतिकोपकुत्सभर्त्सनेषु" इत्यसूयार्थे द्विरुक्तिः। "स्वरितमाम्रेडितम्" इत्यादिना प्राप्तस्य प्लुतस्य "साहसमनिच्छता विभाषा वक्तव्या" इति पाक्षिकः प्रतिषेधः।

१ क्रे। २ झंकारितैः। ३ बल्गसे। ४ मुग्ध० इति च पाठान्तरम्।

" शास्त्रत्यागः साहसम् " इति हरदत्तः । कोमलं रुचिरं कलरवं मधुरस्वरम्। "काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे । कलः " इत्यमरः । किं किमर्थं वा वृथा व्यर्थं जल्पसि कूजसि व्याहरसीति यावत् । न व्याहर्तव्यमित्यर्थः। प्रयोजनाभावादिति भावः । तथा रे मुग्धे हे सुन्दरि, स्निग्धाः सान्द्राः। " स्निग्धं तु मसृणे सान्द्रे " इत्यमरः । विदग्धा विविधविलासविशेषविवरण-निपुणाः चारवः इन्दीवरारविन्दादिवत्स्वभावरमणीयाः मधुराः सुधाधारावन्मनोहराश्चेति । विशेषणमपि मिथो विशेषणविशेष्यभावविवक्षायां " विशेषणं विशेष्येण बहुलम् " इति समासः । तैस्तथा लोलैः निसर्गचञ्चलैः कटाक्षैरपाङ्गावलोकनैरलम् । यद्वा स्निग्धैः । " विस्रंभे परमां काष्ठामारूढे दर्शनादिभिः। येनान्तरङ्गं द्रवति स स्नेह इति कथ्यते ॥ " इत्युक्तलक्षणस्नेहपरिष्कृतैस्तथा विदग्धैः विरक्तस्यापि मन्मथविकारोद्दीपनचतुरैरित्यर्थः । "यद्दर्शने विरक्तोऽपि क्षुभ्यत्येतत्समन्मथम् । " इति लक्षणात् । तथा चारुभिः विषयमात्रविश्रांति-विरहिणीविशृंखलवृत्तित्वमदमन्थरत्वादिगुणशीलत्वस्य विवक्षितत्वात् सिता-कारैरित्यर्थः । तदुक्तं भावप्रकाशे–" अपरिच्छिन्नविषयमदमन्थरमीलितम्। स्फुरद्भ्रूपक्षतायुक्तं तत्स्मेरमिति कथ्यते ॥" इति । तथा मधुरैः सन्तापहृद्भिः। " शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् । " इति लक्षणात् । तथा लोलैः सतृष्णैः संभोगौत्सुक्यभावनातत्परैरित्यर्थः । तदुक्तम्–" कटाक्षैर्हासगर्भैस्तु संभोगौत्सुक्यभावना। " इति । कटाक्षैः " यद्गतागतविश्रान्तिवैचित्र्येण प्रवर्तनम् । तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते । " इत्युक्तलक्षणैरलम्। इत्थंभूतकटाक्षा न प्रवर्तनीया इत्यर्थः । अत्र वारणार्थयोगात् पक्षे तृतीया।ननु कुत एव निराक्रियते इति चेत्तत्राह । चेतो मदीयचित्तं कर्तृ चुंबितमास्वादितं चन्द्रचूडस्य चन्द्रशेखरस्य चरणध्यानमेवामृतं येन तत्तथोक्तं सत् वर्ततेतिष्ठति । स्मरहरचरणध्यानावधानसत्वरसञ्जातपरमवैराग्योल्लसितचित्तं मामेवं क्षुद्राः किं करिष्यन्तीत्येको भावः । अमृतपानपरितृप्तस्य किमारनालेनेत्यपरो भावः । ब्रह्मानन्दभरितस्य किं वैषयिकक्षुद्रानन्देनेत्यपरतरो भावः । नाहमिदानीं पूर्ववद्युष्मत्किंकरः किन्तु शङ्करकिङ्करः,अतोऽसाध्यः सिसाधयिषतां युष्माकं कोऽयमपस्मार इत्यपरतमो भावः। सर्वथा नास्माकं कामिन्यपेक्षास्तीति परमो भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

अरे क्षुद्र कामदेव ! अपने धनुषके टंकारशब्दसे हमको क्या त्रास देता है ? अरे कोकिल!कोमल मधुर शब्दसे क्या वृथा बोलती है

और हे सुन्दरी ! प्रेम और चतुराईसे भरे सुन्दर मधुर चञ्चल कटाक्ष अब तू मत चलाव । मेरा मन आस्वादित चन्द्रचूड शिवजीकें चरण-ध्यानरूपी अमृतमें मग्न हो रहा है ॥ ६६ ॥

अथ पञ्चविषयविरक्तिप्रकारमाह--

विरहेऽपि सङ्गमः खलु परस्परसङ्गतं मनो येषाम् ।
हृदयमपि विघट्टितं चेद् सङ्गो विरहं विशेषयति ॥ ६७ ॥

विरह इति ॥ येषां स्त्रीपुरुषाणां परस्परमन्योन्यं सङ्गतमन्योन्यानुरागबद्धमित्यर्थः । तेषां विरहेऽपि वियोगावस्थायामपि सङ्गमः खलु समागम एव खलु । " हृदयसङ्गम एव सुसङ्गमो न तनुसङ्गम एव सुसङ्गमः । " इति वचनात् अन्तरङ्गबलीयस्त्वन्यायाच्चेति भावः । मनोनियमने तु सङ्गो विरहहेतुक एव भवतीत्याह । हृदयमपि मनोऽपि विघट्टितं सम्यक् क्षतं वैराग्यव्रणीकृतं चेत्यर्थः । सङ्गः समागमोऽपि विरहं वियोगमेव विशेषयति विशिष्टं करोति । तमेवापेक्षाविषयीकरोतीत्यर्थः । तदानीं तस्यैवाक्षतत्वादिति भावः । अतः सर्वथा मनोनियमनमावश्यकं तेन चेन्द्रियप्रवृत्त्युपरमे विषयाणामेकान्ततः पराहतिरिति कृत्वा पञ्चविषयविरक्तिर्नामेयमेवेति निगूढा सन्धिः । परस्परेत्यत्र "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः" इति वक्तव्यात्परशब्दस्य द्विर्भावः " समासवच्च बहुलम् " यथा न समासवत्प्रथमैकवचनं तथा "पूर्वपदस्येति वक्तव्यं प्रथमैकवचनं द्वितीयाद्येकवचनान्तत्वमपरपदस्येति । आर्याभेदः ॥ ६७ ॥

जिन स्त्रीपुरुषोंका मन परस्परके विषयमें अनुराग अनुरागबद्ध हो उनका उनकी वियोगावस्थामेंभी संगमही है, और जिनका मन विघट्टित ( अच्छी तरहसे क्षत ) है उनका संगमभी विरहहेतुक है तात्पर्य हृदयसंगमही संगम है. कुछ शरीरका संगम संगम नहीं है ॥ ६७ ॥

अथ कस्यचित्प्रवासिनो विरक्तस्य विचाररूपेण वैराग्यं प्रकटयन्नाह--

किं गतेन यदि सा न जीवति
प्राणिति प्रियतमा तथापि किम् ।
इत्युदीक्ष्य नवमेघमालिकां
न प्रयाति पथिकः स्वमन्दिरम् ॥ ६८ ॥

किमिति ॥ सा मदीया प्रियतमा प्रेयसी न जीवति विरहवेदनया प्राणान् न धारयति यदि तदा गतेन गमनेन । भावे क्तः । किं न किंचिदपीत्यर्थः । यद्वा गतेन गृहमुपगतेन मयेति शेषः । किमथ प्राणिति केनचिद्विनोदोपायेन जीवति यदि तथापि प्राणनेऽपि गतेन किम् । उभयथापि गमनं व्यर्थमेवेत्यर्थः । इति विचार्येति शेषः । इहैव गम्यमानार्थत्वादप्रयोगः । प्रयोगे वा पौनरुक्त्यमित्यालङ्कारिकाः । पन्थानं गच्छतीति पथिकः कश्चित्पान्थः । "पथः कन्" इति कन्प्रत्ययः । नवमेघमालिकां नवीनकादम्बिनीं विरहिनिवहसंहारकारिणीमिति भावः । उदीक्ष्य स्वमन्दिरं निजगृहं न प्रयाति । वैराग्यनिश्चलचित्तत्वादिति भावः । तदुक्तम्–"यद्भावि तद्भवत्येव यदभावि न तद्भवेत् । इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥" इति । रथोद्धतावृत्तम् ॥ ६८ ॥

यदि प्रियतमा जीती न हो तो घर जानेसे क्या ? और किसी प्रकारसे कदाचित् जीतीभी रही हो तोभी क्या?इस प्रकार कोई पथिक नवीन मेघमालाको देखके विचार करके अपने मन्दिरको नहीं गया॥६८॥

अथ बुधानां तत्र वैराग्यमुपदिशति—

विरमत बुधा योषित्सङ्गात्सुखात् क्षणभङ्गुरात्
कुरुत करुणामैत्रीप्रज्ञावधूजनसङ्गमम् ।
न खलु नरके हाराक्रान्तं घनस्तनमण्डलं
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६९ ॥

विरमतेति ॥ हे बुधाः विद्वांसः ! योषित्सङ्गाद्युवतिसमागमाद्यत्सुखं तस्मात् । कीदृग्विधात् क्षणभंगुरात् क्षणिकात् क्षणिकसुखप्रदयोषित्सङ्गादित्यर्थः । "भञ्जभासमिदो घुरच्" इति घुरच्प्रत्ययः । "जुगुप्साविराम०" इत्यादिना पञ्चमी । विरमत उपरता भवत । तुच्छसुखदं योषित्समागमं त्यजतेत्यर्थः । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । किन्तु करुणा दुःखिष्वनुकम्पा, मैत्री पुण्यकृत्सु मित्रता, प्रज्ञा बुद्धिविशेषः सुखिष्वनुमोदितेति यावत् । एतेन पापिपूपेक्षा लक्ष्यते । एता एवान्तःकरणमलशोधकत्वाच्चित्तपरिकर्माणीति वदन्ति सांख्याः । ता एव वधूजनस्तस्य सङ्गमं परिशीलनतात्पर्यमिति यावत् । कुरुत एतेनात्यूर्जमुखं सम्भवति किं क्षणिकसुखावलम्बनेनेति

भावः। विपक्षे बाधकमाह। नरके निरये हाराक्रान्तं मुक्ताहारोपशोभितं घनस्तनमण्डलं पटुतरकुचकलशभारो वा। अथेति वाक्यारम्भे रणती मणिमेखला मणिखचितरशना यस्य तत्तथोक्तम्। काञ्चीकलापरमणीयमित्यर्थः। श्रोणीबिम्बं नितम्बमण्डलं वा शरणं रक्षणं न खलु न भवति हि। करुणादिसमागमस्तु नैवं भवत्यतः स एवावश्यं स्वीकर्तव्य इति भावः। हरिणी वृत्तम् ६९

हे पण्डितो! स्त्रियोंके संगसे पैदा हुए क्षणिक नश्वर सुखसे विश्राम लो (हटो) और मैत्री करुणा और प्रज्ञारूपी वधूसे संगम करो। नरकमें जब ताडना होगी उस समय हारोंसे भूषित स्त्रियोंके स्तनमण्डल और क्षुद्रघंटिकासे शोभित कटि सहायता न करेगी ॥ ६९ ॥

एवं सांख्यरीत्या वैराग्यमुक्त्वा सम्प्रति योगमतानुसारेणाह—

यंदा योगाभ्यासव्यसनकृशंयोरात्मनमसो-
रविच्छिन्ना मैत्री स्फुरति कृतिनस्तस्य किमु तैः।
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ७० ॥

यदेति ॥ यदा यस्मिन् समये। यस्येत्यध्याहारः उत्तरत्र तच्छब्दसद्भावात्। तथा च। यस्य सम्बन्धिनः योगाभ्यासे अष्टाङ्गयोगपरिशीलने यद्व्यसनमासक्तिस्तेन कृशयोस्तत्परतन्त्रयोरित्यर्थः। आत्ममनसोः प्रत्यगात्मान्तःकरणयोः मैत्री मित्रत्वम्। मैत्री व्याख्याता। स्फुरति प्रकाशयति। योगाभ्यासवशेनाशेषबाह्यविषयान् परित्यज्य यदात्मारामसेव मनो भवतीत्यर्थः। तदा तस्य कृतिनो धन्यस्य। "इष्टादिभ्यश्च" इतीनिप्रत्ययः। तैः किमु न किमपीत्यर्थः। ते क इत्याशङ्कायामाह। प्रियाणां प्रियतमानां सम्बन्धिभिरालापैः श्रोत्रसुखावहमृदुमधुरव्याहारैश्च। अधरमधुभिः रसनेन्द्रियप्रीतिजनकाधरामृतैश्च। तथा निश्वासामोदेन सह सनिश्वासामोदैः पद्मिनीजातित्वान्निश्वासकघ्राणतर्पणगन्धसम्बन्धबन्धुरैरित्यर्थः। वक्त्रविधुभिर्नयनानन्दकरमुखचन्द्रैश्च। अत्र चन्द्रस्यैकत्वेऽपि मुखबाहुल्याद्बहुलत्वसिद्धिः। तथा सकुचकलशाश्लेषाणि कुचकुम्भालिङ्गनसहितानि यानि सुरतानि त्वगुपस्थेन्द्रियामन्दानन्दकरबाह्याभ्यन्तर-

---

१ सदा। २ कृशयो०। ३ यमिन इति पाठांतरम्।

सम्भोगविशेषास्तैश्च एवमशेषेन्द्रियग्रामसन्तर्पणैरपि तैः किमिति सम्बन्धः। आत्मानन्दानुभववेलायां तेषामतितुच्छतया प्रतीयमानत्वादिति भावः। शिख रिणीवृत्तम् ॥ ७० ॥

जिनके आत्मा और मनकी सदा योगाभ्यासहीके व्यसनसे निर न्तर मित्रता फुरती फिर उन्हें प्रियस्त्रियोंके सम्भाषण अधरामृत श्वासोंकी सुगन्धसहित मुखचन्द्र और कुचकलशोंको हृदयसे लगाकर सुरतिसे क्या प्रयोजन है ? ॥ ७० ॥

अथ वेदान्तसिद्धान्तरीत्या वैराग्यवर्णनं निगमयति—

यदासीदज्ञानं स्मरतिमिरसंचारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ७१ ॥

यदेति ॥ यदा यस्मिन् काले स्मरः काम एव तिमिरं तिमिराख्यनेत्ररोगः अन्धकारश्च गम्यते। "तिमिरं नेत्ररोगे स्यादन्धकारेऽपि च स्मृतम्।" इत्य भिधानात्। तस्य सञ्चारेण व्याप्त्या जनितमुत्पादितमज्ञानमविवेक आसीत् तदा तस्मिन् काले अशेषं सर्वमिदं जगत् नारीमयं योषिद्रूपमिति दृष्टमाकलि तम्। अज्ञानवशात्तदावबुद्धमित्यर्थः। इदानीमस्मिन् काले तु पटुतरः अज्ञान निरसनदक्षः अन्यत्र नेत्ररोगनिराकरणसमर्थश्च यो विवेकस्तत्त्वज्ञानमेवाञ्जनं नेत्रकल्याणाख्यसिद्धाञ्जनं तज्जुषां प्राप्तवतामस्माकं सम्बन्धिनी दृष्टिर्मतिः दृक्च। असमा समा सम्पद्यमाना समीभूता। अभूततद्भावे च्विः। निजप्रकृतिमापन्ना सतीत्यर्थः। त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। "तद्धितार्थ०" इत्या दिना समासः। पात्राद्यदन्तत्वान्न स्त्रीत्वम्। ब्रह्म ब्रह्ममयं मनुते ज्ञानोदयव शाद्ब्रह्मस्वरूपमवबुध्यते। यथाञ्जनेन नेत्ररोगनिवृत्तौ घटाद्यर्थतत्त्वज्ञानेन कामा न्धकारप्रयुक्ताज्ञानावरणापाये परवस्तुसाक्षात्कारो भवति ततः सम्यग्दृष्ट्या सर्वमिदं ब्रह्माकारतया पश्यति अयमेव वेदान्तसिद्धान्त इति भावः। अतो विवेकस्य परश्रेयोहेतुत्वात्तदधिगमार्थमेव यत्नः कर्तव्य इति तात्पर्यम्। रूपका लङ्कारः। वृत्तं पूर्ववत् ॥ ७१ ॥

---

१ सर्वं। २ जगदभूत्। ३ दृशो इति च पाठान्तरम्।

कामदेवरूपी तिमिररोगसे उत्पन्न अज्ञान जबतक मुझमें था तब-तक समस्त जगत् स्त्रीमय दृष्टि पडता रहा अब हमने सुन्दर विवेक-रूपी अञ्जन लगाया है तौ समदृष्टि हो गई त्रैलोक्य ब्रह्ममय दीख पडता है ॥ ७१ ॥

अथैतद्वैलक्षण्येन दुर्विरक्तपद्धतिमाह । तत्रादौ यदुक्तं कृतिनो विवेकस्फुरण-मिति तदेतदपवदति—

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताड्यते चटुललोचनाञ्चलैः ॥ ७२ ॥

तावदिति ॥ कृतमेभिः कृतिनस्तेषां कुशलानामपि । "इष्टादिभ्यश्च" इती-निप्रत्ययः । एष पूर्वोक्तो निर्मलो निष्कलङ्को विवेकस्तत्त्वावबोध एव दीपः । स्वार्थे कः।तावत्तावत्पर्यन्तमेव स्फुरति दीप्यते। कियत्पर्यंतमित्याकांक्षायामाह । कुरङ्गचक्षुषां हरिणलोचनानां चटुलानि चञ्चलानि लोचनाञ्चलानि कटाक्ष-वीक्षणानि तैः कलाप्रायैरिति भावः । यावद्यावत्पर्यंतमेव न ताड्यते न निह-न्यते नावलोक्यत इत्यर्थः । तावदेवेति सम्बन्धः । विवेककुशलोऽपि जनः कामिनीकटाक्षवीक्षितः को वा विवेकनिर्वहणदक्ष इति भावः । यद्यपि "अञ्चलं त्वंशुकान्ते स्यात्" इत्यमरः । तथापि अन्तिमत्वसाम्यादौपचारिकोऽयं निर्देश इति मन्तव्यम् । रथोद्धता वृत्तम् ॥ ७२ ॥

विवेकियोंकेभी निर्मल विवेकका दीपक तभीतक प्रकाशित रहता है जबतक मृगनयनी स्त्रियोंके चञ्चल लोचनरूपी आञ्चलसे नहीं बुझाया जाता ॥ ७२ ॥

अथैतेषां दुर्विरक्तत्वाभिद्योतकानीदृशान्येव वचनान्याह—

वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ॥ ७३ ॥

---

१ चपल इति पाठान्तरम् ।

वचसीति ॥ श्रुतिमुखराण्यश्रान्तश्रुतिपाठतत्पराणि मुखानि येषां तेषां निरन्तरवेदाभ्यसनव्यसनरसनानां वेदान्तपारगाणामपीत्यर्थः।पण्डितानां विवेकिनां वचसि केवलं वाङ्मात्र एव सङ्गत्यागं वधूसंसर्गत्यागमुद्दिश्य वार्ता गाढा भवति न त्वन्तःकरण इति भावः । कुतः अरुणरत्नग्रन्थिः पद्मरागमणिखचितः कांच्येव कलापो भूषणं यस्य तत्तथोक्तम् । "शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकम्"।"कलापो भूषणे बर्हे" इति चोभयत्राप्यमरः । कुवलयनयनानामिन्दीवराक्षीणां जघनं कटिपुरोभागं विहातुं त्यक्तुं कः समर्थः । प्रायश ईदृशान्येव दुर्विरक्तानां वचनानीति भावः । मालिनी वृत्तम् ॥ ७३ ॥

संग त्याग करनेकी कथा शास्त्रवक्ता पंडितोंके मुखसे केवल कथनमात्रही है नहीं तो लालरत्नजडित करधनीवाली कमलनयनी स्त्रियोंके जघनस्थल छोडनेमें कौन समर्थ है ॥ ७३ ॥

स[1] परप्रतारकोऽसौ निन्दति योऽलीकपण्डितो युवतीः ।
यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गेऽपि चाप्सरसः[2] ॥ ७४ ॥

स इति ॥ सोऽसावलीकपण्डितः अनृतभाषी । "अलीकं त्वप्रियेऽनृते" इत्यमरः । परप्रतारको लोकवञ्चकः । कोऽसावित्यत आह । यः अलीकपण्डितो युवतीः तरुणीः । "यूनस्तिः" इति तिप्रत्ययः । निन्दति गर्हयति स इति सम्बन्धः । ननु निःसङ्गत्वाद्युवतिनिन्दाकरणे कथं प्रतारकत्वमत आह। यस्मात्कारणात् तपसश्चान्द्रायणादेः व्रतोपवासादिरूपस्य वा फलं स्वर्गस्तत्र स्वर्गेऽपि चाप्सरस उर्वशीप्रभृतयस्तत्रापि तत्सङ्गम एवेत्यर्थः । अतः परप्रतारक इति भावः । "स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः ।" इत्यमरः। स्वपरप्रतारक इति पाठेऽप्ययमर्थः । योऽलीकपण्डितः पण्डितमानी रहस्यानभिज्ञ इत्यर्थः । युवतीर्निन्दति असौ स्वस्य परेषां च प्रतारकः आत्मवञ्चकश्चेत्यर्थः । कुतो यस्मादित्यादि शेषं समानम् । स्वपरफलवेदनबोधनयोः परिज्ञानाभावादुभयवञ्चक इत्यर्थः । आर्याभेदः ॥ ७४ ॥

जो स्त्रियोंकी निंदा करता है वह झूठा पंडित है । आप तो ठगाही गया पर औरोंकोभी ठगता है क्योंकि तपस्याका फल स्वर्ग और स्वर्गका फल अप्सराभोग है सो यहां प्राप्त है ॥ ७४ ॥

---

१ स्व० । २ तस्यापि फलं तथाप्सरसः इति च पाठान्तरम् ।

अथ मन्मथस्यात्यन्तदुर्जयत्वमाह—

मत्तेभकुम्भदलने भुवि सन्ति धीराः
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ७५ ॥

मत्तेभेति ॥ भुवि भूलोके मत्तेभानां मत्तमातङ्गानां कुम्भदलने कुम्भस्थलविदारणे समर्था इति शेषः । धीराः शूराः सन्ति । तथा केचित् पुरुषाः प्रचण्डोऽत्यन्तकोपनो यो मृगराजः सिंहस्तस्य वधे हिंसायां दक्षाः समर्थाः सन्ति गजघातिभ्योऽप्युत्तमाः शूराः सम्भवन्तीत्यर्थः । किंतु बलिनां बलाढ्यानां शूराणां ज्ञानबलशालिनामिति च गम्यते । पुरतोऽग्रे ब्रवीमि निःशङ्कं करमुद्धृत्य सडिण्डिमघोषमुद्घोपयामीत्यर्थः । किमुद्घोपयसीत्यत आह । प्रसह्य बलात् भुजबलाद्बुद्धिबलाच्चेत्यर्थः । कन्दर्पदर्पदलने मदनमदविदारणे समर्थाः मनुष्याः विरलाः मृग्याः प्रायशो न सन्तीत्यर्थः । शम्भुं तद्भक्तांश्च विना मदनविजयिनो न सन्त्येवेति शिवभक्ताग्रेसरस्य कवेर्निगूढतराभिसन्धिः । अत्र कन्दर्पदर्पेति सकृद्द्वयञ्जनद्वयावृत्तेः वृत्त्यनुप्रासाख्यः शब्दालङ्कारः । लक्षणं तूक्तम् । वसन्ततिलकावृत्तम् ॥ ७५ ॥

उन्मत्त हाथीके मस्तक विदारनेवाले शूर इस पृथ्वीपर अनेक हैं और प्रचंड सिंहके मारनेमें दक्ष योधाभी कितनेही हैं परन्तु बलवानोंके आगे हम हठकर यह कहते हैं कि कामदेवके मदका दलनेवाला कोई विरलाही पुरुष होगा ॥ ७५ ॥

अथ च पुनर्वचनवैचित्रीमेवाह—

सन्मार्गे तावदास्ते प्रभवति च[2] नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥७६॥

१ शूराः । २ स इति पाठान्तरम् ।

सदिति ॥ नरो विद्वानपीति भावः । सन्मार्गे श्रुतिस्मृतिबोधिताचारे ता- त्तावत्पर्यन्तमेवास्ते वर्त्तते । इन्द्रियाणां चक्षुरादीनां च तावदेव प्रभवति समर्थ भवति । नियमन इति शेषः । लज्जां जुगुप्सितकर्माचरणाच्चेतःसङ्कोचलक्ष- व्रीडां च तावदेव विधत्ते अनुवर्तते । विनयं नम्रत्वं च तावदेव समालम्ब- स्वीकुरुते । कियत्पर्यन्तमित्याशङ्कायामाह । भ्रूरेव चापं कार्मुकं तेनाकृष्टाश्च मुक्ताश्चेति विशेषणसमासः । एकत्र भ्रूभङ्गपूर्वकमपरत्र चापपूर्वकं च प्रयुक्ता इत्यर्थः । श्रवणपथगताः श्रोत्रमार्गगताः एकत्र कर्णान्तविश्रान्तत्वादपरत्र ता- त्पर्यन्तमाकर्षणाच्चेति भावः । नीलानि पक्ष्माणि लोमान्यन्यत्र गरुतश्च ते तथोक्ताः । धृतिं मुष्णन्तीति धृतिमुषो धैर्यभेदिन एते प्रसिद्धा लीलावती- विलासिनीनां दृष्टय एव बाणाः यावद्यावत्पर्यन्तं हृदि मानसे वक्षसि न पतन्ति न प्रविशन्ति तावदिति संबन्धः । तदनन्तरं सन्मार्गप्रवर्तनादिकं निर्वोढुं न समर्थ इति भावः । उक्तं च प्रबोधचन्द्रोदये । " तावद्विवेकविभवस्तावत्सन्मा- र्गवर्तनं पुंसाम् । निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ " इति अत्र द्वितीयार्धे समस्तवस्तुवर्तिसावयवरूपकालङ्कारः । स्रग्धरावृत्तम् ॥ ७६ ॥

पुरुष सन्मार्गमें तभीतक रहता है, इन्द्रियोंको उसी समयतक वश रख सकता है और लज्जा विनयभी उसी कालतक रहते हैं जबतक श्यामवरौनी पलकरूपी पंख धारण किये, भौंहरूपी धनुषसे छोड़े कानोंतक फैले, धैर्य छुडानेवाले लीलावती सुन्दर स्त्रियोंके नयनरूपी बाण छुटकर हृदयमें नहीं लगते ॥ ७६ ॥

किं बहुना ब्रह्माप्यङ्गनोद्योगप्रत्यूहाचरणे न धीरो भवतीत्याह—

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ७७ ॥

उन्मत्तेति ॥ अङ्गनाः स्त्रियः उन्मत्तोऽत्युत्कटो यः प्रेमा अनुरागस्तस्य संर- म्भात्सम्भ्रमात् । " संरम्भः सम्भ्रमे कोपे " इति विश्वः । यत्कर्मारभन्ते विहि- तमविहितं वा कर्तुमुद्युञ्जत इत्यर्थः । तत्र कर्मणि प्रत्यूहं विघ्नम् । ' विघ्नोऽन्त- रायः प्रत्यूहः " इत्यमरः । आधातुं कर्तुं ब्रह्मापि किमुतान्य इति भावः कातरः सभयः असमर्थः खल्वित्यर्थः । अनिवारनिश्चयानामनावृतानामङ्गनानां को वा निवारयितेति भावः ॥ ७७ ॥

अतिप्रेमके उमंगसे उन्मत्त होकर स्त्रीलोग जिस कामका आरम्भ कर देती हैं उस कामके रोकनेकी ब्रह्माकीभी शक्ति नहीं ॥ ७७ ॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता।
यावज्ज्वलति नाङ्गेषु हतः पञ्चेषुपावकः ॥ ७८ ॥

तावदिति ॥ महत्त्वं महानुभावत्वं पाण्डित्यं प्राज्ञत्वं कुलीनत्वं महाकुलप्रसूतत्वम्। "कुलात्खः" इति खप्रत्ययः। विवेकिता कर्तव्याकर्तव्यविचारचतुरत्वं च तावत्तावत्पर्यन्तमेव भवतीति शेषः। यावत् हतो नीचः अश्लाघ्यतापादकत्वान्निकृष्टः। पञ्चारविन्दादयः इषवो बाणा यस्य स पञ्चेषुः मदनः स एव पावकोऽग्निरङ्गेषु न ज्वलति नाविर्भवति न सन्तापयतीत्यर्थः। तावदिति सम्बन्धः। तदनन्तरं को वा महत्त्वादिगुणविशिष्ट इति भावः। "अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥" इत्यमरः। अत्र मदने अग्निरूपणादेकदेशवर्तिरूपकम् ॥ ७८ ॥

वडाई, पंडिताई, विवेक और कुलीनता ये सब मनुष्यकी देहमें तभीतक रहते हैं जबतक शरीरमें कामाग्नि नहीं प्रज्वलित होती॥ ७८॥

अथ सांसारिकस्य सद्गतिर्दुर्लभेति सहेतुकमाह—

शास्त्रज्ञोऽपि प्रगुणितनयोऽप्यात्तबोधोऽपि बाढं
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम्।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिलभ्रूलताकुञ्चिकेव ॥ ७९ ॥

शास्त्रज्ञ इति ॥ शास्त्रज्ञः सकलशास्त्ररहस्याभिज्ञोऽपि। "आतोऽनुपसर्गे कः" इति कप्रत्ययः। तत्रापि प्रगुणितः प्रकर्षेणावृत्तिविषयीकृतो नयो नीतिशास्त्रं येन स तथोक्तोऽपि फलवदर्थावबोधनपर्यन्तं सम्यक्परिशीलितनीतिशास्त्रोऽपीत्यर्थः। गुणशब्दात् "तत्करोति०" इति ण्यन्तात्कर्मणि क्तः। णाविष्ठवद्भावे "विन्मतोर्लुक्" इति लुक्। "गुणस्त्वावृत्तिशब्दाख्ये ज्येन्द्रिये मुख्यतन्तुषु।" इति वैजयन्ती। तथा बाढं दृढमात्तबोध उत्पन्नज्ञानोऽपि

१ प्रथितविनयोऽप्यात्म० इति पाठांतरम्।

पुमानस्मिन् परिवर्तमाने संसारे सद्गतीनां भाजनं पात्रं योग्य इति यावत्। विरलो मृग्यो भवति स्वर्गादिसद्गतिगामी यः कश्चिदेव भवति न तु बहु इत्यर्थः । कुतः येन कारणेन एतस्मिन् संसारे वामाक्षीणां मनोहरनयनानाम् "बहुव्रीहौ" इत्यादिना पचि पित्वात् ङीप् । कुटिला वक्रा भ्रूलतेव भ्रू भ्रूवल्ली कुञ्चिकेव विष्कम्भविघट्टनसाधनवक्रायोमयशलाकेव निरयनगर यमपुरस्य द्वारं लक्षणया द्वारपिधानकवाटविष्कम्भमित्यर्थः । द्वारशब्देन कवा टस्य तेन च तद्विष्कंभस्य च लक्षितत्वादुद्घाटयन्ती विघट्टयन्ती व्यामोहोत्पा दनेन दुर्गतौ प्रवेशयन्तीत्यर्थः । भवति खलु अतो विरल इति सम्बन्धः। स्त्रीसङ्गिनां कुतः सद्गतिरिति भावः । उपमालङ्कारः । मन्दाक्रान्तावृत्तम्॥७९॥

शास्त्रज्ञ और नय जाननेवाला और ज्ञानी भी हो परन्तु इस संसा रमें दृढतासे सद्गतिका पात्र कोई विरलाही पुरुष होता है इस हेतु कि यहां नरकनगरके द्वारके तालेको सुन्दर नेत्रवाली स्त्रियोंकी टेढी भौंह लता घूमती कुञ्जीके समान खोलती है ॥ ७९ ॥

अथ द्वाभ्यां मन्मथस्य चरित्रवैचित्र्यमाह—

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः[1] पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च[2] हन्त्येव मदनः ॥ ८० ॥

कृश इति ॥ कृशः पिण्डालाभादस्थिचर्मावशिष्टदेहः । काणोऽन्धकः । एकाक्षः। खञ्जः पादविकलः । अकार्यकरणेन लगुडप्रहाराद्भग्नपाद इत्यर्थः। तथा श्रवणरहितः समूलं छिन्नकर्णः । पुच्छेन विकलः छिन्नलांगूलः । "अङ्ग विकारः" इति समासः । व्रणी सर्वाङ्गक्षतिमान् । पूयेन क्लिन्न आर्द्रः। कृमीणां व्रणोत्पन्नापादतुच्छजन्तूनां कुलशतैरनेककृमिपरंपराभिरित्यर्थः। आवृ व्याप्ता तनुर्यस्य स तथोक्तः । क्षुधा बुभुक्षया क्षाम इति मन्तव्यम् । जीर्ण जरया शिथिलावयवः पिठरककपालेन घटमुखवलयेनार्पितगल आसञ्जितक ण्ठनालः । शुनको हि घटमुखे स्वशिरो निक्षिप्य अन्नं भक्षयति ततस्तद्वलं

1 जीर्णोऽपि करक । 2 निहन्त्येव इति च पाठान्तरम् ।

परिपुष्टत्वेनाकण्ठमशक्यत्वात्क्वचि विघट्टनेनाधःकपालापाये तन्मुखकपालेनासक्तितकण्ठो भवतीति प्रसिद्धिः। अत एवंभूत इत्यर्थः। यद्वा चौर्येणान्नादिभक्षणे तद्दण्डनार्थं ग्राम्रमध्ये छिद्रं कृत्वा गले आसञ्जयन्ति तस्मादित्थम्भूत इत्यर्थः। एवं जुगुप्सितोऽपि श्वा शुनकः शुनीं सारमेयीम्। नान्तत्वात् ङीप्। अन्वेत्यनुसरति निधुवनार्थमिति भावः। तथा हि हतं विनष्टमपि च मदनो हन्त्येव मनोविकारोत्पादनेन पीडयत्येव। न तु हतहननमन्याय्यमिति विचारयतीत्यर्थः। शठोऽयं मदनः कं वा कथम्भूतावस्थापन्नं न करोतीति भावः। अत्र एवकारोऽत्यन्तायोग्यन्यवच्छेदार्थः।पार्थो धनुर्धरो भवत्येवेत्युदाहृत्य क्रियागतैवकारस्य तथाभूतार्थकत्वानुशासनात्। शिखरिणी वृत्तम् ॥ ८० ॥

दुर्बल, काना, लंगडा, बहिरा, पूंछसे हीन, जिसके घावोंमें राध भरी हो और शरीरपर कीडे फिरते हों, भूंखसे थका, वृद्ध, मिट्टीके घडेका कण्ठ जिसके गलेमें हो ऐसाभी श्वान कुत्तीके पीछे भोगके लिये जाता है, इससे यह सिद्ध हुआ कि कामदेव मरेको भी मारता है ॥ ८० ॥

स्त्रीमुद्रां कुसुमायुधस्य जयिनीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ८१ ॥

स्त्रीमुद्रामिति ॥ सर्वार्थानां सम्पदं करोतीति सर्वार्थसम्पत्करीम्। धर्मार्थकामपुरुषार्थसमृद्धिहेतुभूतामित्यर्थः। "कृञो हेतुताच्छील्यानुलोम्येषु" इति टप्रत्ययः। टित्वात् ङीप्। कुसुमायुधस्य जगज्जैत्रस्य मन्मथस्य जयिनीं जयावहामित्यर्थः। "जिदृक्षि०" इत्यादिना इनिप्रत्ययः। स्त्रीमुद्रां स्त्रीरूपचिह्नां विहाय त्यक्त्वा कुधियो दुर्बुद्धयः अत एव मूढाः कर्तव्याकर्तव्यविचारशून्या मिथ्याफलान्वेषिणः अभूतचरत्वादसत्यप्रायमोक्षफलाकांक्षिणः सन्तः यान्ति प्रव्रजन्तीत्यर्थः। ते मूढास्तेन निजमुद्राहासजनितकोपेन कुसुमेषुणैव निर्दयतरं दयाहीनं यथा तथा निहत्य नीचैः कृत्वा केचिन्नग्नीकृताः। "नग्नोऽवासा दिगम्बरः" इत्यमरः। अभूततद्भावे च्विः। "अस्य च्वौ" इति

१ मपकेतनस्य। २ जननीं शुनि च पाठान्तरम्।

दीर्घः । " ऊर्यादिच्विडाचश्च " इति गतिसंज्ञायां " कुगतिप्रादयः " इति समासः । केचिन्मुण्डिताः परमहंसीकृताः न तु सौभाग्यसम्पन्नीकृता इत्यर्थः । अतः कुसुमेषुमुद्रारूपाः स्त्रियो न परिहर्तव्या इति भावः । यथा लोके राजानस्तीक्ष्णदण्डा निजाज्ञोल्लङ्घनापराधिजनान् कांश्चित्सर्वस्वापहारेण वस्त्रहीनान् कुर्वन्ति । कांश्चित् सर्वतो मुण्डितशिरस्कान् कांश्चिदर्द्धमुण्डितमुण्डान् कांश्चिज्जटाधारिणः कांश्चित्कपालभिक्षुकांश्च कुर्वन्ति तद्वदत्रापि ध्वनिः । अत्र वैराग्यकृतनग्नत्वादेः कुसुमेषुकृतत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः । सा च नूनमित्यादिव्यञ्जकाप्रयोगाद्गम्या । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

स्त्रियां कामदेवकी मुद्रा सब अर्थ और सम्पत्की करनेवाली हैं जो मूढ कुबुद्धि उन्हें छोड स्वर्गादिकी इच्छासे निकल भागते हैं उन्हें विरक्तके वेषमें न समझो किन्तु कामदेवने दया त्याग दण्ड देकर उन्हें नंगा किया, किसीका शिर मुंडवाया, किसीके पांच चोटी रखीं, किसीके जटा रखवाई, किसीके हाथमें ठीकरा दे भीख मंगवायी॥८१॥

किं बहुना महर्षयोऽपीन्द्रियनिग्रहसमर्था न जाता इत्युपसंहरति--

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेद्विन्ध्यः प्लवेत्सागरे ॥८२॥

विश्वामित्रेति ॥ वाताम्बुपर्णान्येवाशनं येषां ते तथोक्ताः शरीरयात्रामात्रोपयोगिवायूदकपरिणतपर्णाहारा एव न त्विन्द्रियतुष्टिकरमृष्टान्नभोजना इत्यर्थः । विश्वामित्रपराशरप्रभृतयः विश्वस्य मित्रं विश्वामित्रो गाधिनन्दनः । " मित्रे चर्षौ " इतिदीर्घत्वम् । पराशरो व्यासपिता तौ प्रभृति येषां ते तथोक्ताः । प्रभृतिशब्देन शाण्डिल्यादयोऽपि संगृह्यन्ते । ये महर्षयः सन्तीति शेषः । तेऽपि सुललितमतिसुन्दरम् । " ललितं त्रिषु सुन्दरम् " इति शब्दार्णवे । स्त्रीणां मेनकारम्भासत्यवतीधान्यमालिन्यादियोषितां मुखपङ्कजं दृष्ट्वैवालोक्यैव मोहं गताः तत्परतन्त्राः जाताः न त्विन्द्रियनिग्रहसमर्थाः इत्यर्थः । किं तु ये मानवाः साधारणमर्त्याः सघृतमाज्यप्लुतं तदपि पयसा क्षीरेण दध्ना च युक्तं

१ तरेत्सागरम् इति पाठान्तरम् ।

मिश्रितं शाल्यन्नं कलमाख्यव्रीह्यन्नमत्यन्तवीर्यवृद्धिकरं मृष्टान्नमित्यर्थः । भुञ्जते अभ्यवहरान्ति । "भुजोऽनवने" इत्यात्मनेपदम् । तेषां मानवानामिन्द्रियनिग्रहः इन्द्रियदमनं भवेद्यदि तदा विन्ध्यः पर्वतः सागरे प्लवेत् उन्मज्जेत् । न तु कदाचिदपि विन्ध्यः प्लवति ग्रावप्लवनस्याश्रुतचरत्वात्तथा च विन्ध्यप्लवनस्य यथा असम्भावितत्वं तथेन्द्रियनिग्रहस्यापीत्यर्थः। वाताद्यशनानामृपीणामेवैतादृगवस्थापन्नत्वं किमुत मृष्टान्नभोजनानां मानवानामिति भावः । अत्रेन्द्रियाणां निग्रहसम्बन्धेऽपि विन्ध्यप्लवनदृष्टान्तेनासम्बन्धोक्तेः सम्बन्धे सम्बन्धरूपातिशयोक्तिः । वृत्तं पूर्ववत् ॥ ८२ ॥

विश्वामित्र, पराशर इत्यादि बडे ऋषि जो वायु जल और पत्ते खाय पीके रह जाते थे वेभी स्त्रीमुखकमलको देखके मोहको प्राप्त हुए अब जो मनुष्य घी दूध दही इत्यादि अच्छे व्यञ्जन भोजन करते हैं उनकी इंद्रियां जो वशमें हो जांय तौ समुद्रपर विंध्याचलके तैरनेमें क्या आश्चर्य है अर्थात् इंद्रियोंको वशमें नहीं कर सकते ॥ ८२ ॥

प्रासङ्गिकं परिसमाप्य प्रस्तुतशृङ्गारोपयोगितया ऋतुवर्णनं प्रारिप्सुस्तदादौ लोकवेदयोः प्राथम्येन व्यवहाराद्वसन्तं वर्णयति परिमलेत्यादिपद्यैः—

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो
मधुरविधुरोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम् ।
विरलेविरलस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ॥ ८३ ॥

परिमलेति ॥ वाता उपवनपवनाः परिमलं बिभ्रतीति परिमलभृतः । विविधकुसुमसम्मर्दजनितगन्धविशेषबन्धुरा जाता इति शेषः । "विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।" इत्यमरः । शाखा रसालादितरुस्कन्धाः नवांकुराणि नूतनकिसलयानि कोटिष्वग्रेषु यासां तास्तथोक्ताः पल्लविता जाता इत्यर्थः । पिकपक्षिणां पिकाख्यपक्षिविशेषाणां प्रियाः कोकिलाङ्गना इत्यर्थः । "कोकिलः पिक इत्यपि" इत्यमरः । मधुरा सहकारांकुरकषायास्वादलाभादनुगुणा विधुरा काककृतोपद्रववशाद् द्विगुणा च कष्टेति यावत् । या उत्कण्ठाकूजितौत्सुक्यं तां

---

१ विरतोत्कंठा वाचः । २ विरलसुरत । ३ रात्र्यां इति च पाठान्तरम् ।

भजन्तीति तथोक्ताः जाताः । " भजो ण्विः " इति ण्विप्रत्ययः । " विधुरः स्यात्कष्टविश्लिष्टयोरपि " इति विश्वः । वधूनां वदनेन्दवो वक्त्रचन्द्राः विरल-विरलो ग्रीष्मातिरेकाभावान्मन्दप्रकारः । " प्रकारे गुणवचनस्य " इति सादृश्यार्थे द्विर्भावः । स्वेदोद्गारः श्रमजलनिष्यन्दो येषां ते तथोक्ता जाताः । अत्रो-द्गारशब्दस्य गौणवृत्तिसमाश्रयणान्न ग्राम्यकक्षामध्यपतितत्वमित्युक्तं प्राक् । तथा हि धात्र्यां भुवि मधौ वसन्ते प्रसरति व्याप्रियमाणे सति कस्य वस्तुनो गुणोदयो गुणोत्कर्षो न जातः सर्वस्यापि जायत एवेत्यर्थः । " गत्यर्थाकर्मक० " इत्या-दिना वर्तमाने कर्तरि क्तप्रत्ययः । "मतिबुद्धिपूजार्थेभ्यश्च" इति चकारात् वर्त-मानता ।"अथ पुष्परसे मधु । दैत्ये वसन्ते चैत्रे च "इति विश्वप्रकाशः॥८३॥

सुगंधित पवन चल रही है, वृक्षोंकी शाखाओंमें नये पत्रोंके अंकुर निकले हैं, कोकिलादि पक्षियोंकी वाणी मधुर सुन्दर उत्कंठा भरी प्यारी लगती है और स्त्रियोंके मुखचन्द्रपर रतिश्रमके विलग प्रस्वेद बूंदके कण शोभित हैं ऐसी वसन्तऋतुमें इस भूपर किस किस वस्तुमें गुणकी ज्योति नहीं प्रकाश होती ॥ ८३ ॥

मधुरयं मधुरैरपि कोकिला
कलरवैर्मलयस्य च वायुभिः ।
विरहिणः प्रहिणस्ति शारीरिणो
विपदि हन्त सुधाऽपि विषायते ॥ ८४ ॥

मधुरैरिति॥ अयं पूर्वोक्तो मधुर्वसन्तः सकलचराचरोल्लासकर इति भावः । मधुरैः श्राव्यैः सन्तापहरैर्वा । " शीतलीक्रियते तापो येन तन्मधुरं स्मृतम् । " इति लक्षणात् । कोकिलानां पिकसुन्दरीणां कलरवैरव्यक्तमनोहरस्वरवि-शेषैः । " काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे । कलः " इत्यमरः । कोकिलेत्यत्र जातिग्रहणे कोकिलाजातावपीति न ङीप् । तथा मलयस्य वायुभिः श्रीखण्डशैलानिलैश्च अत्यन्तसुखावहैरपीति भावः । विरहिणः शरी-रिणो वियोगिजनान् प्रहिणस्ति विनाशयति । तथा हि विपद्यापत्काले सुधा अमृ-तमपि विषायते विषमिवाचरति । तद्वत्प्राणप्रयासकरी भवतीत्यर्थः । " उपमा-नादाचारे " इति क्यच् । " अकृत्सार्वधातुकयोर्दीर्घः " इति दीर्घः । हन्तेति विषादे । " हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः।" इत्यमरः । सामान्य-

विशेषणसमर्थनरूपोऽर्थान्तरन्यासः। स च विपाद इत्यत्र उपमाया अङ्गेन संकीर्यते। अनुप्रासः शाब्दः। द्रुतविलंबितं वृत्तम् ॥ ८४ ॥

मधुर मधुर कोकिलाके शब्द और मलयाचलके पवनसे यह चैत्र मास विरहियोका वध करता है इससे यह जान पडता है कि, विपत्तिमें अमृतभी विष हो जाता है ॥ ८४ ॥

विरहिणामेवातिकृच्छ्रं न त्वन्येषामित्याह--

आवासः किलकिञ्चितस्य दयिताः पार्श्वे विलासालसाः
कर्णे कोकिलकामिनीकलरवः स्मेरो लतामण्डपः।
गोष्ठी सत्कविभिः समं कतिपयैर्मुग्धाः सितांशोः कराः
केषांचित्सुखयन्ति चात्र हृदयं चैत्रे विचित्राःस्रजः॥८५॥

आवास इति॥ पार्श्वे परिसरे किलकिंचितस्य। "रोषाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम्।" इत्युक्तलक्षणशृङ्गारचेष्टाविशेषस्यावासो निवासभूताः। अत्राधारविवक्षयैकवचनग्रहणमिति विवेकः। तथा विलासालसाः लीलामन्थराः कटाक्षभुजाक्षेपादिविविधविभ्रमाचरणतत्परा इत्यर्थः। एतेनैतासां स्मरमन्दीकृतव्रीडत्वात्प्रागल्भ्यं सूच्यते। दयिताः प्रियतमाश्च। कर्णे कर्णयोरित्यर्थः। "स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेण" इति वामनसूत्रे प्रायग्रहणादेकवचनप्रयोगः। कोकिलकामिनीनां कलकण्ठाङ्गनानां कलरवोऽव्यक्तमधुरस्वरश्च। स्मेरः ईषद्विकसितकुसुम इत्यर्थः। अत्र कुसुमधर्मः कुसुमिते उपचर्यते। "ष्मिङ् ईषद्धसने" इति धातोः "नमिकम्पि०" इत्यादिना रप्रत्ययः। लतामण्डपो लतागृहं च। कतिपयैः कैश्चिदेव। अन्यथा रसाभासात् सत्कविभिः सरसविचित्रचारुप्रबन्धप्रणयनचतुरतरकवीश्वरैः समं गोष्ठीः प्रसंगश्च। मुग्धा मनोहराः सितांशोः कराश्च। विचित्रा नानाविधाः स्रजः पुष्पमालिकाश्च। अत्र अस्मिन् चैत्रे वसन्ते केषांचिदन्येषामेवेत्यर्थः। हृदयं सुखयन्ति रञ्जयन्ति न तु सर्वेषामित्यर्थः। ईदृक्सौभाग्यसम्पन्नानां विरलत्वादिति भावः। अत्र खले कपोतन्यायाद् दयितादिबहुकारणानां हृदयरञ्जनरूपैककार्यसाधनसमुद्योगकथनाद्द्वितीयः समुच्चयालङ्कारः। तदुक्तं विद्यानाथेन "खले कपोतन्यायेन बहूनां कार्यसा-

१ काकली। २ सेव्याः। ३ नेत्रहृदये। ४ क्षपा इति च पाठान्तरम्।

धने । कारणानां समुद्योगः स द्वितीयः समुच्चयः ॥ " इति । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

किलकिंचित् विलाससे शिथिल हो प्यारीके संग रहना, कानसे कोकिलाके शब्दकी कलकलाहट सुनना और चांदनीका सुख उठाना और विचित्र माला ऐसी सामग्री चैत्रमासमें किसी पुण्यवान्केहीं हृदयको सुख देती हैं ॥ ८५ ॥

पान्थस्त्रीविरहानलाहुतिकलामातन्वती मञ्जरी
माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अल्पांस्ते नवपाटलापरिमलप्राग्भारपाटच्चराः
वान्ति क्लान्तिवितानतानवकृतः श्रीखण्डशैलानिलाः ॥ ८६ ॥

पान्थस्त्रीति ॥ अधुनेदानीं वसन्तसमय इत्यर्थः । पान्थस्त्रीणां प्रोषितभर्तृकाणां विरहानलस्य वियोगाग्नेराहुतिकलामाहुतिकलानां तत्साम्यमित्यर्थः । " कला शिल्पे कालभेदे चन्द्रांशे कलना कला । " इति वैजयन्ती । आतन्वती आदधाना तद्वदुद्दीपकेत्यर्थः । तनोतेः शतरि " उगितश्च " इति ङीप् । माकन्देषु रसालविशेषेषु विद्यमानेति शेषः । मञ्जरी पुष्पमञ्जरी पिकाङ्गनाभिः कोकिलाभिः सोत्कण्ठमालोक्यते सानन्दमुद्वीक्ष्यते इष्टत्वादिति भावः । तथा पाटला फलेरुहाख्यवृक्षविशेषः । " पाटलिः पाटला मोघा काचस्थाली फलेरुहा । " इत्यमरः । " पुष्पमूलेषु बहुलम् " इति लुपि युक्तवद्व्यक्तिवचने भवतः । नवपाटलापरिमलप्राग्भारस्य नूतनपाटलीकुसुमगन्धसंपत्तेः पाटच्चरा मलिम्लुचाः तद्गन्धापहारिण इत्यर्थः । तथा क्लान्तिवितानस्य क्लान्तिसमूहस्य तानवं तनुत्वं कुर्वन्तीति क्लान्तिवितानतानवकृतः । करोतेः क्विप् । अल्पा मन्दा ते प्रसिद्धाः शैत्यमान्द्यसौरभ्ययुक्ताः श्रीखण्डशैलानिला मलयमारुताः वान्ति प्रसरन्ति । " वा गतिगन्धनयोः " इति धातोर्लट् । एतेन विरहिणां दुरन्तदुःखजनकत्वसंयुक्तानां परमानन्दकत्वं चास्योक्तमित्यवगन्तव्यम् । अत्र वियोगाग्निरित्यत्र रूपकमाहुतिकलामित्यत्रोपमया सापेक्षितत्वात्सङ्कीर्णं सच्छाब्देनानुप्रासेन संसृज्यते । वृत्तं पूर्ववत् ॥ ८६ ॥

बटोहियोंकी जो विरहिणी स्त्रियां उनकी विरहाग्निमें आहुति कला

१ अल्पेते । २ परिमलः प्राग्भार इति च पाठान्तरम् ।

फैलाती हुई जो आमके मौर हैं उन्हें कोकिला बडे अभिलापसे देखती हैं। इस वसन्तऋतुमें ये नवीन पाटल पुष्पके सुगन्धके पुंजको चुरानेवाले और विरह विस्तारको नया करनेवाले मलयाचलके पवनभी गमन करते हैं ॥ ८६ ॥

प्रथितः प्रणयवतीनां तावत्पदमातनोतु हृदि मानः ।
भवति न यावच्चन्दनतरुसुरभिर्मलयपवमानः ॥ ८७ ॥

प्रथित इति ॥ प्रथितः प्रसिद्धः दृढतर इति यावत् । मानः प्रियतमस्यान्यस्त्रीसङ्गित्वजनितेर्ष्याकृतकोपः । " स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये । श्रुते वानुमिते दृष्टे" इति दशरूपे । प्रणयवतीनां प्रियतमानां हृदि तावत्तावत्पर्यन्तं पदं स्थानमातनोतु करोतु तिष्ठत्वित्यर्थः । सम्भावनायां लोट् । " पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु ।" इत्यमरः । कियत्पर्यन्तमित्यत आह । चन्दनतरुसुरभिः श्रीखण्डद्रुमपरिशीलनसुगन्धिः । " सुगन्धौ च मनोज्ञे च सुरभिर्वाच्यलिङ्गवत् ।" इति विश्वः । मलयपवमानो मलयमारुतो यावत्पर्यन्तं न भवति न प्रसरति तावदिति सम्बन्धः । सामान्यस्य विशेषपर्यवसानात्प्रसरणार्थत्वं भुवो द्रष्टव्यम् । " यावत्तावच्च साकल्येऽवधौ मानावधारणे ।" इत्यमरः । अस्यात्यन्तोद्दीपकत्वान्मानिन्योऽतिदृढमपि निजमानं विहाय प्रियतमपरतन्त्राः स्वयमेव भवन्तीत्यर्थः । आर्याभेदः ॥ ८७ ॥

प्रणयवाली स्त्रियोंके हृदयमें यह प्रसिद्ध मान तभीलौं ठहरताहै जबलौं चंदनकी सुगंधभरी मलयाचलकी स्वच्छ वायु नहीं चलती ॥ ८७ ॥

सहकारकुसुमकेशरनिकरभरामोदमूर्च्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥ ८८ ॥

सहकारेति ॥ सहकारकुसुमानां रसालविशेषप्रसूनानाम् । " आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ।" इत्यमरः । ये केशरनिकराः किञ्जल्कपुञ्जास्तेषां ये भराः समृद्धयस्तेषामामोदेन परिमलविशेषेण मूर्च्छिता व्याप्ता दिगन्ता यस्मिन् । तस्मिन् मधुरेण माधुर्यगुणयुक्तेन मधुना मकरन्देन विधुरा विह्वला उन्मत्ता इति यावत् । मधुपा भृङ्गा यस्मिन् तस्मिन् इत्थमस्योक्तमुद्दी-

---

१ प्रियपुरतो युवतीनां । २ मधुसुनिर्मलः पवनः इति च पाठान्तरम् ।

पक्वामित्यर्थः । मधौ वसन्ते कस्य जनस्य स्त्रियो वा पुरुषस्य वेत्यर्थः ।उत्कण्ठा सम्भोगौत्सुक्यं न भवेन्नोत्पद्येत अतः सर्वस्यापि उत्पद्यत एवेत्यर्थः । अतो मानत्यागो युज्यत इति भावः । अनुप्रासश्च शब्दालङ्कारः । वृत्तं पूर्ववत् ॥ ८८ ॥

आमके मौरकी जो केसर उसके समूहकी सुगन्ध दिशाओंमें छाय-रही और मीठे मीठे मकरन्द पानकर जिसमें भ्रमर उन्मत्त हो रहे हैं ऐसे ऋतुराज वसन्तमें किसे उत्कण्ठा नहीं होती ॥ ८८ ॥

अथ त्रिभिर्ग्रीष्मं वर्णयति—

अच्छाच्छचन्दनरसार्द्रतरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।
मन्दो मरुत्सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदं च मदनं च विवर्द्धयन्ति ॥ ८९ ॥

अच्छाच्छेति ॥ अच्छाच्छोऽतिस्वच्छो यश्चन्दनरसः पटीरद्रवः । "गुणे रागे द्रवे रसः" इत्यमरः । तेनार्द्रतरा अत्यन्तार्द्राः सन्तापशांत्यर्थं सान्द्रचन्दनपङ्कचर्चिताङ्गा इत्यर्थः । मृगाक्ष्यस्तरुण्यश्च, धारागृहाणि जलयन्त्रवेश्मानि, कुसुमानि मल्लिकादीनि, कौमुदी चन्द्रिका च सुमनसो जात्याः सम्बन्धी ग्रीष्मेऽतिविकाससम्भवात्तत्कुसुमपरिशीलनजनितामोदभरित इत्यर्थः । "सुमना मालती जाती" इत्यमरः ।मन्दो मरुत् मन्थरगन्धवाहश्च, शुचि शुभ्रं सुधालेपनेनेति भावः । हर्म्यपृष्ठं सौधोपरिप्रदेशश्चेति ग्रीष्मे ऋतौ मन्दं हर्षव्यतिकरं मदनं च विवर्धयन्त्युद्दीपयन्ति।अत्रापि द्वितीयसमुच्चयालङ्कार उन्नेयः ॥८९॥

अतिस्वच्छ चन्दनके रससे जिन स्त्रियोंका अंग चर्चित है ऐसी स्त्रियें, फुहारेवाले मन्दिर, मन्द सुगन्धित पुष्प, विकासित चान्दनी, सुगन्धित लता, मन्द मन्द पवन और महलकी श्वेत छत ये सब सामग्री ग्रीष्मऋतुमें कामदेवको और मदको बढाते हैं ॥ ८९ ॥

स्रजो हृद्यामोदा व्यजनपवनश्चन्द्रकिरणाः
परागः कासारो मलयजरजः शीधु विशदम् ।

१ रसार्द्रकला इति पाठान्तरम् ।

शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघर्तावेतद्विलसति लभन्ते सुकृतिनः ॥ ९० ॥

स्रज इति ॥ हृद्यामोदा मनोहरगन्धाः स्रजः पुष्पमालिकाश्च । व्यजनपवनस्तालवृन्तसमीरणश्च । "व्यजनं तालवृन्तकम्" इत्यमरः । चन्द्रकिरणाश्च, परागः सुमनोरजश्च, कासारः क्रीडासरश्च, मलयजरजश्चन्दनक्षोदश्च, विशदं निर्मलं शेरते अनेनेति शीधु मद्यं च । "शीङो धुक्" इत्यौणादिको धुक्प्रत्ययः । शुचिः शुभ्रो विहारयोग्य इत्यर्थः । सौधोत्सङ्गः प्रासादप्रदेशश्च, प्रतनु वसनं सूक्ष्माम्बरम्, पङ्कजदृशः पद्मपलाशलोचनाश्चेत्येतत्सर्वं भोगसाधनम् । "नपुंसक०" इत्यादिना नपुंसकैकशेषः । निदाघर्तौ ग्रीष्मर्तौ। "आद्गुणः" इति रपरो गुणः । विलसति विजृम्भमाणे सति सुकृतिनः पुण्यशालिनो लभन्ते प्राप्नुवन्ति। कथमसुकृतानामीदृग्भोगसाधनलाभ इति भावः।शिखरिणीवृत्तम्॥९०

अच्छी सुगन्धित माला, पंखेका वायु, चान्दनी, पुष्पोंका पराग, तडाग, चन्दन, उज्ज्वल मद्य, श्वेत धामकी अच्छी ऊंची छत, अच्छे मलमलसे महीन वस्त्र और कमलनयनी सुन्दर स्त्री इत्यादि पदार्थोंसे ग्रीष्मऋतुमें पुण्यवान् पुरुष सुख उठाते हैं ॥ ९० ॥

सुधाशुभ्रं धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभिः ।
स्रजो हृद्यामोदास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ ९१ ॥

सुधेति ॥ सुधया लेपनद्रव्येण शुभ्रं यद्वा सुधा अमृतं तद्वच्छुभ्रम् । "सुधा स्याल्लेपनद्रव्यऽमृते च" इति विश्वः । अतिसुरभि अत्यन्तसुगन्धि रागिणि विषयासक्ते विषयसंसर्गविमुखे विरक्ते । विरक्तस्य तेषामकिंचित्करत्वादिति भावः। निगदितव्याख्यानमन्यत् । वृत्तं पूर्ववत् ॥ ९१ ॥

चूनेसे सफेद अच्छा उज्ज्वल धाम, निर्मल चांदनीका चन्द्रमा, प्यारीका मुखकमल, सुगंधित चन्दन, अच्छे सुगंधित पुष्पोंकी माला

---

१ निदाघे तूर्णं तत्सुखमुप० इति पाठान्तरम् ।

वें सब वस्तु अनुरागी पुरुषोंके हृदयमें अत्यंत क्षोभ करते हैं परन्तु विषयके संसर्गसे जो विमुख हैं उनके हृदयमे नहीं ॥ ९१ ॥

अथ वर्षासमयवर्णनमारभते–

तरुणीवेषोद्दीपितकामा विकसज्जातीपुष्पसुगन्धिः ।
उन्नतपीनपयोधरभारा प्रावृट् तनुते कस्य न हर्षम् ॥ ९२ ॥

तरुणीति ॥ उद्दीपित उत्पादितः कामो मन्मथः सुरताभिलापो वा यया सा तथोक्ता । विकसन्ति विकस्वराणि यानि जातिपुष्पाणि तैः शोभनो गन्धो यस्याः सा तथोक्ता एकत्र जातिकुसुमविकाससंभवादन्यत्र तत्कुसुममालालंकृतत्वाच्चेति भावः । "गंधस्येदित्पूतिसुसुरभिभ्यः" इति गन्धशब्दस्य इकारान्तादेशः । यद्यपि गन्धशब्दश्चेत्येतदेकान्तग्रहणम् इत्युक्तं तथापि कवीनां निरंकुशत्वात्पर्यनुयोगः । उन्नत उत्तुङ्गः पीनः पीवरश्च पयोधरभारोऽम्भोधरवृन्दश्च अन्यत्र स्तनभारश्च यस्याः सा तथोक्ता । " स्तनाम्भोधौ पयोधरौ " इति वैजयन्ती । अत एव तरुण्या वेप इव वेपो यस्याः सा कामिनीव मोहनकारिणीत्यर्थः । प्रावृड् वर्षा कस्य पुंसो हर्षं सम्भोगौत्सुक्यं न तनुते सर्वस्यापि तनुत एवेत्यर्थः । श्लेषानुप्राणितेयमुपमा ॥ ९२ ॥

तरुणीके वेषवाली, कामदेवको उदित करनेवाली, जातिपुष्पके सुगन्धको विकाश करनेवाली, जिसके पुष्ट पयोधरके भार उन्नत हैं ऐसी यह वर्षाऋतु किसको नहीं हर्षित करती है जाही, जूही लता वा जावित्री पयोधर मेघ और स्तनकोभी कहते हैं ॥ ९२ ॥

वियदुपचितमेघं भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।
शिखिकुलकलकेकारावरम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ९३ ॥

वियदिति ॥ उपचिताः परिचिता मेघा यस्मिंस्तथोक्तम् । घनाघनसंचारवदित्यर्थः । वियदाकाशं च कन्दलान्यंकुराण्यासां सन्तीति कन्दलिन्यो भूमयो भूप्रदेशाश्च, नवो नूतनः कुटजानां गिरिमल्लिकानां कदम्बानां नीपकुसुमानां

१ चपा दीपित० । २ विकसितजातीपुष्प० । ३ कुरुते इति च पाठान्तरम् ।

चामोदो गन्धविशेषो येषामस्तीति तथोक्ताः गन्धवाहाः उद्यानपवनाश्च। "कुटजो गिरिमल्लिका" इत्यमरः। के मूर्ध्नि कायन्ति ध्वनयन्तीति ककाः मयूरवाण्यः। "केका वाणी मयूरस्य" इत्यमरः। शिखिकुलानां मयूरनिकराणां ये कलकेकारवा अव्यक्तमधुरकेकास्वरास्तैः रम्या मनोहरा वनान्ताश्च केलिवनमध्यप्रदेशाश्च सुखिनं दुःखिनं वा सर्वमशेषं जनमुत्कण्ठयन्ति सम्भोगौत्सुक्यवन्तं कुर्वन्तीत्यर्थः। उद्दीपकत्वादिति भावः। उत्कण्ठशब्दात् "तत्करोति०" इति ण्यन्तात् लट्। मालिनीवृत्तम् ॥ ९३ ॥

मेघसे व्याप्त आकाश और प्रफुल्लित पृथ्वी अर्थात् नये नये अंकुरोंपर ओसके जलसे पूर्ण, नवीन कुटज और कदम्बके पुष्पोंके समूहोंसे सुगंधित वायु और मयूरोंके झुंडकी सुन्दर वाणीसे रमणीय वनके प्रांत, सब सुखी और दुःखी पुरुषोंको उत्कण्ठा कामदेवकी इच्छा देते हैं ॥ ९३ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयति ॥ ९४ ॥

उपरीति ॥ उपर्युपरिष्टात् घनं सान्द्रं घनपटलं मेघवृन्दं वर्तत इति शेषः। "घनाः कठिनसंघातमेघकाठिन्यमुद्गराः।" इति वैजयन्ती। तिर्यक् दिक्ष्वित्यर्थः। मह्यामतिशयेन रवन्तीति मयूराः॥ पृषोदरादित्वात्साधुः। नर्तिता नृत्यन्तः। स्वार्थे णिचि "गत्यर्थाकर्मक०" इत्यादिना वर्तमाने कर्तरि क्तः। "मतिबुद्धिपूजार्थेभ्यश्च" इति चकाराद्वर्तमानता। यद्वा नर्तिताः मेघवृन्देन नाटिताः। मेघोदये तेषामुल्लासवशेन नाट्यसम्भवात्। तथाभूता मयूरा येषु ते तथोक्ता गिरयोऽपि वर्तन्ते इति शेषः। क्षितिरपि भूमिरपि कन्दलैर्नानाविधांकुरैर्धवला स्वच्छा अतः पन्थानं गच्छतीति पथिकः पान्थः। "पथः कन्" इति कन्प्रत्ययः। दृष्टिं क्व कुत्र पातयति प्रसारयति न कुत्रापीत्यर्थः। सर्वत्राप्युद्दीपनसम्भवादिति भावः। महत्कष्टमत्र विरहिणामिति परमार्थः। आर्याभेदः॥

ऊपर घन घोर छाय रहा है, दहिने बाएँ पहाडोंमें मयूर नाच रहे हैं, नीचे भूमिकी दूब ओसोंसे धवली हो रही है ऐसे समयमें दीन बटोही अपनी दृष्टिको कहां फेंके क्योंकि चारों ओर विरहके उद्दीपन करनेवाले हैं ॥ ९४ ॥

---

१ वसुधा। २ तुष्टिं। ३ यातु संत्रस्तः। इति च पाठान्तरम्।

इतो विद्युद्वल्लीविलसितमितः केतकितरोः
स्फुरन् गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।
इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः संभृतरसाः ॥९५॥

इत इति ॥ इतोऽस्मिन् प्रदेशे विद्युद्वल्लीनां तडिल्लतानां विलसितं स्फुरणम् भवतीति शेषः । इतः प्रदेशे केतकितरोः केतकाख्यवृक्षस्य तत्कुसुमस्येत्यर्थः । " ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् " इति ह्रस्वः । कालिदास इतिवत् । स्फुरन् व्याप्नुवानः गन्धश्च वर्तते इति शेषः । इतः प्रोद्यत्प्रवृद्धं जलदनिनदस्य मेघगर्जितस्य स्फूर्जितमादरं च भवतीति शेषः । इतश्च केकिनां शिखावलानां क्रीडासु केलिषु यः कलकलरवः कोलाहलध्वनिः । " शिखावलः शिखी केकी, कोलाहलः कलकलः " इति चामरः । यद्वा कलकलरवः अत्यन्ताव्यक्तमधुरप्रकारस्वरश्च समुज्जृम्भते इति शेषः । पक्ष्माण्यासां सन्तीति पक्ष्मलाः । सिध्मादित्वाल्लच्प्रत्ययः । तथाभूता दृशो यासां तासां पारिप्लवलोचनानामेव प्रसिद्धाः संभृतरसाः सम्पूर्णशृङ्गारा उद्दीपका इत्यर्थः । विरहदिवसा वियुक्तवासराः कथं यास्यन्त्यतिक्रमिष्यन्ति न कथञ्चिदपीत्यर्थः । दुरन्तत्वाद्दिनमेकं युगं भविष्यतीति भावः । शिखरिणीवृत्तम् ॥ ९५ ॥

एक ओर विद्युत् बिजलीकी छटाका विलास, एक ओर केतकीके वृक्षकी उत्कट सुगन्ध, एक ओर मेघकी गर्जना और एक ओर मयूरकी क्रीडाका कलकल शब्द ये सब जहां एकत्र हैं वे विरहके रसभरे दिन स्त्रियोंके कैसे बीतेंगे ? ॥ ९९ ॥

असूचीसंचारे तमसि नभसि प्रौढजलद-
ध्वनिप्राज्ञं मन्ये पतति पृषतानां च निचये ।
इदं सौदामन्याः कनककमनीयं विलसितं
मुदं च म्लानिं च प्रथयति पथिं स्वैरसुदृशाम् ॥९६॥

१ स्फुरद् । २ संसारे । ३ ध्वनिप्राप्ते । ४ तस्मिन् । ५ दृपदा नीरनिचये । ६ पथिष्वेव सु० । इति च पाठान्तरम् ।

असूचीति ॥ तमस्यन्धकारे न विद्यते सूचीसञ्चारो यस्मिन् तस्मिन्। सूच्यग्रमात्रस्याप्यनवकाशप्रदे गाढतमे सतीति यावत्। तथा नभस्यन्तरिक्षे च प्रौढः प्रगल्भो गंभीर इति यावत्। यो जलदध्वनिर्मेघगर्जितं तेन प्राज्ञं वाचालमात्मानं मन्यत इति प्राज्ञं मन्ये बहुलतरमेघनिर्ह्रादवति सतीत्यर्थः। "आत्ममाने खश्च" इति खशि मुमागमः। तथा पृषतानां बिन्दूनां च निचये सन्दोहे पतति सति। "पृषन्ति बिन्दुपृषतौ" इत्यमरः। कनककमनीयं कनकनिकषणलेखासुन्दरमिदं प्रवर्तमानमिदं सौदामन्या विद्युतः। "तडित्सौदामनी विद्युत्" इत्यमरः। विलसितं स्फुरणम् कर्तृ। स्वैरसुदृशामभिसारिकाणां पथि प्रियगृहमार्गे मुदं मार्गप्रदर्शकत्वात्संतोषं म्लानिमात्मप्रकाशकहेतुत्वात् ग्लानिं च। "ग्लै म्लै हर्षक्षये" इत्यस्माद्धातोः "बीज्याज्वारिभ्यो निः" इत्येकोऽधिको निप्रत्ययः। प्रथयति प्रकटयति करोतीत्यर्थः। "कान्ताभिसरणोद्युक्ता स्मरार्ता साऽभिसारिका।" इति लक्षणात्। कान्तामुद्दिश्य निगूढमभिसरणशीलानां स्त्रीणामुपयोगानुपयोगाभ्यां हर्षाहर्षहेतुत्वादिति भावः। "कान्तार्थिनी तु या याति सङ्केतं साऽभिसारिका।" इत्यमरः। वृत्तं पूर्ववत् ॥ ९६ ॥

ऐसे गाढे अन्धकारमें जिसमें सुई न प्रवेश कर सके जो आषाढ वा श्रावणके मासमें बडे मेघके शब्द और पत्थरसहित जलवृष्टिमें बिजलीका वारंवार चमकना सो स्त्रियोंको अपने अपने बटोही पतियोंके प्रति सुख दुःख उत्पन्न करता है ॥ ९६ ॥

आसारेण न हर्म्यतः प्रियतमैर्यातुं बहिः शक्यते
शीतोत्कम्पनिमित्तमायतदृशा गाढं समालिङ्ग्यते।
जातः शीकरशीतलाश्च मरुतोरत्यन्तखेदच्छिदो
धन्यानां बत दुर्दिनं सुदिनतां याति प्रियासङ्गमे ॥ ९७ ॥

आसारेणेति ॥ प्रियतमैर्वल्लभैरासारेण धारासम्पातेन हेतुना। "धारासम्पात आसारः" इत्यमरः। हर्म्यतः प्रासादात्। धामतः इति पाठे गृहात्। उभयत्रापि "पञ्चम्यास्तसिल्"· "अपपरिबहिः०" इत्यादिना समासविधानज्ञापकात् बहिर्योगे पञ्चमी। बहिर्यातुं न शक्यते न समर्थ्यते। "शक्ल शक्तौ" भावे लट् "शकधृष०" इत्यादिना तुमुन्प्रत्ययः। तथा आयतदृशा दीर्घदृशा तरुण्या शीतेन यदुत्कम्पः गात्रवेपथुस्तन्निमित्तं तन्निमि-

१ धामतः। २ शीतलशीकराश्च। ३ वान्त्यन्त०। इति च पाठांतरम्।

वर्णभित्यर्थः । गाढमतिदृढमालिङ्ग्यते परिरभ्यते । पूर्ववद्भट् । तथा शीकरैरम्बुकणैः शीतलाः शिशिराः । " शीकरोऽम्बुकणाः स्मृताः " इत्यमरः । रत्यन्ते सुरतावसाने यः खेदः श्रमस्तं छिन्दन्तीति तथोक्ताः । सुरतसंरम्भजनितश्रमापहारिण इत्यर्थः । " श्रमः खेदोऽथ रत्यादेर्जातस्वेदादि भूमिकृत् ।" इति लक्षणात् । मरुतश्च जाताः प्रवृत्ताः अतः धन्यानां पुण्यशालिनां प्रियासङ्गमे प्रियासम्भोगे सति दुर्दिनं दुष्टदिनमपि मेघच्छन्नदिनं च । " मेघच्छन्नेऽह्नि दुर्दिनम् " इत्यमरः । सुदिनतां सुदिवसत्व याति अन्येषां तदेव भवतीत्यर्थः । वतेति विस्मये । " वत खेदानुकम्पामन्त्रणसन्तोषविस्मये । " इत्यभिधानात् । अत्र दुर्दिनमपि सुदिनतां यातीति स्फुरतो विरोधस्योक्तदेशासमाधानाद्विरोधालङ्कारः । " आभासत्वे विरोधस्य विरोधालंकृतिर्मता । " इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥

वर्षाकी झडीमें स्त्रीलोग धामके बाहर नहीं निकल सकती हैं और स्त्री प्रीतमसे आलिंगन किये जाती हैं कि बडा जाडा लगता है और देह कांपता है यों कह कह इसी निमित्त स्त्रियोंसे प्रीतमभी आलिंगन करते जाते हैं और बाहर नहीं निकल सकते और ठंढे २ जलके कणोंसहित वायु मैथुनके अंतमें श्रम हरनेवाला वह रहा है ऐसे धन्य पुरुषोंको प्यारीके संगमें दुर्दिनभी सुदिन हो जाते हैं ॥ ९७ ॥

अथैकेन शरदं वर्णयति–

**अर्द्धं सुप्त्वा निशायाः सरभससुरतायाससन्नश्लथाङ्गः**
**प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।**
**सम्भोगक्लान्तकान्ताशिथिलभुजलतावर्जितं कर्करीतो**
**ज्योत्स्नाभिन्नाच्छधारं न पिबति सलिलं शारदं मन्दपुण्यः ॥ ९८ ॥**

अर्धमिति ॥ निशाया रात्रेरर्धं यामद्वयमित्यर्थः । "पुंस्यर्धोऽध समेंऽशके" इत्यमरः । अत्यन्तसंयोगे द्वितीया । सुप्त्वा शयित्वा निद्रया यामद्वयं गमयित्वेत्यर्थः । ततो मध्ये इति शेषः । सरभसं सोद्वेगं यत्सुरतमाभ्यन्तरसम्भोगस्तेन य आयासः श्रमस्तेन सन्नानि परिखिन्नानि अत एव श्लथानि शिथिलान्यङ्गान्यवयवा यस्य स तथोक्तः । "मध्यं नरकमुदाहृतं शरदि च प्रत्यूषकाले हिमम् " इति भोजवचनादर्धरात्रकृतसुरतपरिश्रान्त इत्यर्थः । एतेनैतस्य नाय-

१ नरिश । २ खिन्न० ३ तर्जितं । ४ भाग्यः । इति च पाठान्तरम् ।

कस्य कामतन्त्रकुशलत्वं नायिकायाः शंखिनीत्वं सूच्यते तृतीययामस्य तत्सुरतयोग्यकालत्वात् । तदुक्तं रतिरहस्ये–" रमयति च तृतीये शंखिनीमार्द्रभावां गमयति रमणीयां पद्मिनीं तुर्ययामे । ' इति । अन्यत्राप्युक्तम् । " कुसुमितवनमध्ये कूचिमारस्तृतीये तिमिरनिविडयामे शंखिनीं संलभेत । " इति । अत एव प्रोद्भूता प्रकर्षेणोत्पन्ना अत एवासह्या स्वतः शमयितुमशक्या तृष्णा पिपासा यस्य स तथोक्तः । तथा मधुना सम्भोगप्राक्कालीनमद्यपानेन यो मदो मोहस्तेन निरतः परवश इत्यर्थः । "मदिरादिकृतो मोहो हर्षव्यतिकरो मदः । " इति लक्षणात् । विविक्ते विजने । "विविक्तौ पूतविजनौ " इत्यमरः । अन्यथा विस्रम्भाविरहाद्यनुभवादिति भावः। हर्म्यपृष्ठे प्रासादोपरिप्रदेशे कर्करीतो गलन्तिकाख्यसच्छिद्रकुण्डिकायाः । पञ्चम्यास्तसिः । "कर्कर्यालुर्गलन्तिका" इत्यमरः। सम्भोगक्लान्ताया सुरतायासपरिश्रान्तायाः कान्तायाः स्वप्रियतमायाः शिथिलया निःसहायया भुजलतया आवर्जितं धाराकारेण दत्तमिति स्वादातिशयोक्तिः । शारदं शरत्कालसंबन्धि सलिलं हंसोदकमित्यर्थः । ज्योत्स्नया चन्द्रिकया भिन्ना मिलिता अत एवाच्छा धारा यस्मिन् कर्मणि तद्यथा तथा मन्दपुण्यो भाग्यहीनो न पिबति । भाग्यसम्पन्नस्तु पिबतीत्यर्थः । हंसोदकलक्षणमुक्तं द्रव्यरत्नमालायाम् । " वह्नितप्तमहिमांशुरश्मिभिः शीतमम्बु शशिरश्मिभिर्निशि । एवमेव तदहर्निशं स्थितं तच्च हंसजलनामकं स्मृतम् ॥" इति । एतत्पाने गुणसम्पत्तिरपि तत्रैवोक्ता । " प्रसादकं त्रिदोषघ्नं हृद्यं लघु च शीतलम् । वृष्यं मनोहरं स्वादु विपघ्नं कान्तिकृत्परम् ॥ " इति । शरद्येतत्पाने नियमश्चाप्युक्तोऽन्यत्र । " कर्पूरागुरुजं सिताद्यभिरसैर्हंसोदकं वासितं सौधं चातिमनोहरं शिशिरतो मुग्धाङ्गनालिङ्गनम् । " तति । स्रग्धरावृत्तम् ॥ ९८ ॥

आधी रात व्यतीत भयेपर वेगसहित मैथुनके श्रमसे जिसके अंग थक रहे, मद्यमें मत्त, अत्यन्त प्यासा, छतपर स्वच्छ और एकान्त ठौरमें बैठा, वैसेही मैथुनमें थकी स्त्रीने शिथिल भुजाओंसे झारी लाकर दिये और चांदनीमें जिसकी स्वच्छ धारा दीख पडती है ऐसी शरदऋतुके जलको न पीवे तो मन्दभागी जानना चाहिये ॥ ९८ ॥

अथ द्वाभ्यां हेमन्तं वर्णयति—

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोभृतः
काश्मीरद्रवसान्द्रदिग्धवपुषश्छिन्ना विचित्रै रतैः ।

---

१ खिन्ना । इति पाठान्तरम् ।

वृत्तोरुस्तनकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ९९ ॥

हेमन्त इति ॥ हेमन्त ऋतौ दधि प्रसिद्धं दुग्धसर्पिषी क्षीरघृते तान्यशनं येषां ते तथोक्ताः । ननु दुग्धाज्यादीनां शैत्यावसादकत्वेन सेवनं भवतु दधिसेवनस्य तदतिरेककरत्वात्तत्सेवनं कथं युक्तमिति चेन्न, तस्याप्यायुष्कामस्य हेमन्ते सेवनोपयोगात् । तदुक्तं चारुचर्यायामृतुचर्याप्रस्तावे सर्वज्ञभोजराजेन-"शिशिरे च दधि निषेव्यं ग्रीष्मकाले वसन्ते शरदि च परिवर्ज्यं वांछता दीर्घमायुः । यदि खलु परिवांछा सेव्यतां सर्वकालं सहगुडमधुपात्रे शर्करामुद्गयूषैः ॥" इति । मञ्जिष्ठया रञ्जकद्रव्येण रक्तानि माञ्जिष्ठानि वासांसि सुरक्तवसनानि बिभ्रतीति तथोक्ताः । "तेन रक्तं रागात्" इत्यण्प्रत्ययः । यद्यपि "निर्वातं भवनं सुरक्तवसनं वह्नेः परं सेवनम्" इति वसन्तसमययोग्यत्वेन सुरक्तवसनधारणमभिहितम्, तथापि मतान्तरे रक्तोक्तमिति न विरोधः।काश्मीरद्रवेण कुंकुमपङ्केन सान्द्रं यथा तथा दिग्धानि रूषितानि वपूंषि येषां ते तथोक्ताः । विचित्रैः बाह्याभ्यन्तरनिरूपणेन नानाविधैः रतैः छिन्नाः श्रान्ताः वृत्तौ वर्तुलौ ऊरू पीनौ च स्तनौ यासां तास्तथोक्ताः याः कामिन्यस्ता एव जनस्तेन कृताश्लेषाः विहितपरिरम्भाः । तदुक्तम्-"कस्तूर्यागरुकुंकुमैरतिधृतं पानं तटाकथिरतं शीतं नैव विदीर्यते प्रियतमैरालिङ्गनं कम्बलम् ।" इति । तथा ताम्बूलीदलैर्नागवल्लीदलैः पूगैः क्रमुकैश्च पूरितानि मुखानि वक्त्रान्तरालानि येषां ते तथोक्तास्ताम्बूलचर्वणरताः तत्परा इत्यर्थः । "तूदस्तु पूगः क्रमुकः" इत्यमरः । इत्थम्भूता धन्याः सुकृतिनः गृहाभ्यन्तरे मन्दिरान्तराले सुखं यथा तथा शेरते स्वपन्ति । "शीङो रुट्" इति रुडागमः । ताम्बूलस्य मानसोल्लासादिबहुगुणहेतुत्वाच्चर्वणोक्तिः । तदुक्तं चारुचर्यायाम्-"मनसो हर्षणं श्रेष्ठं रतिदं मदकारणम् । मुखरोगहरं हृद्यं दीपनं वस्तिशोधनम् ॥ मुखशुद्धि कृमिहरं ताम्बूलं श्रीकरं परम् ॥" इति । तत्कालानुगुणोपचारत्वेन वीर्यवृद्धिकरत्वेन च प्रथमं दधिसर्पिराज्यप्राज्यमृष्टान्नं भुक्त्वाऽनन्तरं कुंकुमकस्तूर्यादिमिश्रितचन्दनलेपनपूर्वकं विविधसुरतसंरम्भसम्भोगपरिश्रान्ताः कान्तासमालिङ्गितगात्राश्च सन्ततताम्बूलचर्वणरताः सुकृतशालिनः सुखेन निवातगृहाभ्यन्तरे स्वपन्तीति समुदायार्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ९९ ॥

दही दूध घृत और सुगन्ध सिखरन भोजन किये; केशर कस्तूरी सघन सर्वांग लगाये, अनेक प्रकारके आसनभेदकी रतिसे खिन्न, पुष्ट

१ पीनोरुस्थल० इति पाठान्तरम् ।

जंघ और स्तनवाली स्त्रियां जिन्हें लपटाय पान और सुपारी खाय, मञ्जीठके रंगे वस्त्र धारण किये प्यारीके साथ धन्य पुरुषही हेमन्त ऋतुमें सोते हैं ॥ ९९ ॥

प्रोद्यत्प्रौढप्रियङ्गुद्युतिभृति विकसत्कुन्दमाद्यद्द्विरेफे
काले प्रालेयवातप्रचलविलसितोदारमन्दारधाम्नि।
येषां नो कण्ठलग्ना क्षणमपि तुहिनक्षोददक्षा मृगाक्षी
तेषामायामयामा यमसदनसमा यामिनी याति यूनाम्॥ १००

प्रोद्यदिति ॥ प्रोद्यन्त्यः उदित्वराः प्रौढाः प्रवृद्धाश्च याः प्रियङ्गवः फलिन्यस्ताभिर्द्युतिमुपचयजनितशोभां बिभर्तीति तथोक्ते । "प्रियंगुः फलिनी फली" इत्यमरः । द्वौ रेफौ वर्णविशेषौ यस्य स द्विरेफो भ्रमरशब्द उपचारात्तदर्थेऽपि द्विरेफ उच्यते । यथाह कैयटः—"शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वाद्द्विरेफो भ्रमरः" विकसद्भिः कुन्दैर्माघ्यकुसुमैर्माद्यन्तो द्विरेफा यस्मिन् तस्मिन् । "माध्यं कुन्दम्" इत्यमरः । "पुष्पमूलेषु बहुलम्" इति लुक् । यद्यपि कुन्दविकसनं शिशिरर्तुलक्षणं तथापि तत्प्रत्यासत्त्योक्तमिति न विरोधः । प्रलयादागतं प्रालेयं हिमम् "तत आगतः" इत्यण् । "केकयमित्रयुप्रलयानां यादेरियः" इति यशब्दस्य इयादेशः । प्रालेयवातैस्तुषारवायुभिः प्रचलं चञ्चलमत एव विलसितं प्रकाशमानमुदारं रम्यं च । मन्दाराणां सन्तानकतरूणां धाम स्थानं यस्य तस्मिन् । यद्वा मन्दाराणां पारिभद्रकतरूणां धामेति । उभयत्राप्युपचयहेतुत्वादिति भावः । "पारिभद्रो निम्बतरुर्मन्दारः पारिजातकः ।" इत्यमरः । एवम्भूतकाले हेमन्तसमये येषां यूनां तरुणानां तुहिनक्षोदे शीतनिवारणे दक्षा कुचकुम्भयोरौष्ण्यसम्भवेन तथालिङ्गनान्निवारणसमर्थेत्यर्थः । मृगाक्षी तरुणी क्षणमल्पकालमपि । अत्यन्तसंयोगे द्वितीया । कण्ठलग्ना कण्ठावसक्ता कण्ठालिङ्गनतत्परेति यावत् । नो न भवतीत्यर्थः । तेषां यूनामायामाः अत्यन्तदीर्घाः यामाः प्रहराः यस्याः सा । विरहवेदनावशात्तथा प्रतीयमानयामेत्यर्थः। यामिनी रजनी यमसदनसमा यमलोककल्पा दुरन्तदुःखावहेत्यर्थः । याति गच्छति । तदानीमङ्गनापूर्वालिङ्गनमन्तरेण दुरन्तविरहवेदनामहानद्यास्तरितुमशक्यत्वादिति भावः । "द्वौ यामप्रहरौ समौ, रजनी यामिनी तमी" इति चाप्यमरः । अनुप्रासोपमयोः शब्दार्थालङ्कारयोः संसृष्टिः । स्रग्धरावृत्तम् ॥ १०० ॥

जो उदित तथा प्रवृद्ध होती हुई प्रियंगुलताओंसे उपचित हुई

शोभाको धारण करता है, जिसमें फूले हुए कुंदपुष्पोंके सेवनसे भ्रमर मत्त हुए हैं और जिसमें तुषारवायुसे प्रचलित हुए मंदारवृक्षोंके स्थान प्रकाशमान तथा रम्य हैं ऐसे इस हेमंतकालमें जिन युवा पुरुषोंके गलेमें जाडेको नष्ट करनेमें समर्थ ऐसी हरिणलोचना स्त्री क्षणभरके लियेभी नहीं लिपटी हो उनकी यह रात्रि अत्यन्त दीर्घ प्रहरोंवालीसी प्रतीत होती हुई तथा यमलोकके समान दुःख देती हुई व्यतीत होती है॥

अथ द्वाभ्यां शिशिरर्तुं वर्णयन्निगमयति—

चुम्बन्तो गण्डभित्तीरलकवति मुखे सीत्कृतान्यादधाना
वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात्स्रंसयन्तोंऽशुकानि
व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ॥

चुम्बन्त इति ॥ कान्ताजनानां गण्डा भित्तय इव ताः गण्डभित्तीः कपोलस्थलीः चुम्बन्तः । "स्तननयनकपोलान् चुम्बनस्थानमाहुः" इति रतिरहस्योक्तेरिति भावः । अत एवालकवति विशेषणवशात् चूर्णकुन्तलालंकृते मुखे । "अलकाश्चूर्णकुन्तलाः" इत्यमरः । सीत्कृतानि सीत्काराणि । सीदित्यनुकरणशब्दः । आदधानाः कुर्वाणाः उत्पादयन्त इत्यर्थः । वक्षःसु उरःस्थलीषु उत्कंचुकेषु उद्ग्रन्थितकूर्पासकेषु सत्स्वपि स्तनभरेषु पुलकोद्भेदं रोमाञ्चप्रादुर्भावमापादयन्त इति सात्त्विकोक्तिः । ऊरून् सक्थीनि आकम्पयन्तः प्रचालयन्तः। पृथु विशालं यज्जघनतटं जघनप्रदेशस्तस्मादंशुकानि परिदधानांशुकमन्यानित्यर्थः । स्रंसयन्तः विश्लथयन्तः अत एव व्यक्तं स्फुटं विटानां पल्लविकानामिव चरितानि । कृत्यानि बिभ्रतीति तथोक्ताः । शिशिरस्यैते शैशिराः शिशिरर्तुसम्बन्धिनः । "तस्येदम्" इत्यण् । वाताः वान्ति सञ्चरन्ति । विटसाधारणविशिष्टत्वाद्वातानां तच्चरितभरणं युक्तमिति भावः । तदुक्तं रतिरहस्ये—"अलिकचिबुकगण्डं नासिकाग्रं च चुम्बन् पुनरुपहितसीत्कं तालु जिह्वां च भूयः । भरितलिखितनाभीमूलवक्षोरुहोरुः श्लथयितधृतधैर्यः श्लाथयित्वाथ नीवीम् ॥" इति । अत्र विटचरितभृत इत्यत्र उपमालङ्कारः । स च व्यस्तामित्यनेनाभिव्यञ्जितोत्प्रेक्षयाङ्गेन सङ्कीर्यते इति संक्षेपः । वृत्तं पूर्ववत् ॥ १०१ ॥

१ कृत इति पाठांतरम् ।

यह प्रकार है कि शिशिरऋतुमें कामियोंके समान आचरण करते हुए पवन चलते हैं कि स्त्रियोंके कपोलोंको चूंबते हैं, केशोंवाले मुखमें सीत्कारशब्दको करते हैं, नहीं कंचुकी जिसपर ऐसी छातीपर स्तनोंमें रोमावलीको पैदा करते हैं, जंघाओंको कंपाते हैं और मोटी जंघा (रान) ओंके वस्त्रोंको उडाते हैं ॥ १०१ ॥

केशानाकुलयन् दृशो मुकुलयन् वासो बलादाक्षिप-
न्नातन्वन् पुलकोद्गमं प्रकटयन्नावेगकम्पं शनैः ।
वारंवारमुदारसीत्कृतकृतो दन्तच्छदान् पीडयन्
प्रायः शैशिर एष संप्रति मरुत्कान्तासु कान्तायते ॥ २ ॥

केशानिति ॥ केशान् शिरोरुहानाकुलयन् व्याकुलीकुर्वन् । एकत्र विशोषणादन्यत्र केलिसंरम्भाच्चेति भावः। दृशो मुकुलयन्निमीलयन् । एकत्र परुषस्पर्शवशादपरत्र सुखपारवश्याच्चेति भावः । वासो जघनांशुकं बलात्प्रसह्याक्षिपन्नाकर्षन् । एकत्र वेगवशादपरत्र सम्भोगेच्छया चेति भावः । पुलकोद्गमं रोमाञ्चमातन्वन्नुत्पादयन् । एकत्र शीतलस्पर्शादन्यत्र शृङ्गारोद्बोधकाच्चेति भावः । आवेगेनोद्वेगेन यः कम्पो गात्रवेपथुस्तं शनैः प्रकटयन् मन्दमभिव्यञ्जयन् इति विशेषणद्वयेन सात्त्विकोक्तिः । उदाराणि मनोज्ञानि सीत्कृतानि कुर्वन्तीति तथोक्तान् । छाद्यन्ते एभिरिति छदाः । "पुंसि संज्ञायां घः प्रायेण" इति घःप्रत्ययः । "छादेर्घेऽद्व्युपसर्गस्य" इति ह्रस्वः । दन्तानां छदास्तानधरोष्ठान् वारंवारं पुनःपुनः पीडयन् । एकत्र शैत्यातिशयेनान्यत्र दन्तक्षतेन च व्यथयन्नित्यर्थः । एषोऽयं शैशिरो मरुत् शिशिरमारुतः सम्प्रतीदानीं शिशिरर्तौ प्रायो भूम्ना कान्तासु कामिनीषु विषये कान्तायते । "कथाभिः कमनीयाभिः काम्यैर्भोगैश्च सर्वदा । उपचारैश्च रमयेद्यः स कान्त इतीरितः ॥" इत्युक्तलक्षणः कान्त इवाचरति । उक्तविशेषणैः कान्तसादृश्यलाभात्स इव वर्तते इत्यर्थः । "उपमानादाचारे" इति क्यङ् । "अकृत्सार्वधातुकयोर्दीर्घः ।" इति दीर्घः । अत एवोपमा सा च प्रायःशब्दाभिव्यञ्जितोत्प्रेक्षया संकीर्यते । तदुक्तमाचार्यदण्डिना । "मन्ये शङ्के ध्रुवं नूनं प्राय इत्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥" इति ॥ १०२ ॥

बालोंको बिखेरता, आंखोंको किञ्चित् २ मूंदता, साडीको बलात्कारसे

१ माश्लिष्य कम्पश्शनैः । इति पाठान्तरम् ।

उडाता, देहमें रोमाञ्चित करता, चलनेमें उद्वेग और कम्प प्रगट करता, वेरवेर सीसी करनेमें ओठोंको पीडित करता इस प्रकारका शिशिरऋतुका वायु स्त्रियोंके विषयमें पतिकासा आचरण करताहै १०२

वैराग्ये सञ्चरत्येको नीतौ भ्रमति चापरः ।
शृङ्गारे रमते कश्चिद् भुवि भेदाः परस्परम् ॥ १०३ ॥

वैराग्य इति ॥ एकः पुरुषो वैराग्ये सञ्चरति । चापरोऽन्यो नीतौ भ्रमति भ्रमणं करोति। कश्चित् पुरुषः शृङ्गारे रमते । एवं भुवि पृथिव्यां पुरुषाः परस्परं भेदविशिष्टाः सन्तीत्यर्थः ॥ १०३ ॥

कोई पुरुष वैराग्यमें सञ्चार करता, कोई नीतिमें प्रवृत्त रहता और कोई शृंगारमें रमता है यों परस्पर मनुष्योंमें इच्छाका भेद है इसलिये भर्तृहरिजीका तात्पर्य यह है कि तीन प्रकारके मनुष्योंके हेतु तीन शतक निर्माण किये हैं ॥ १०३ ॥

यद्यस्य नास्ति रुचिरं तस्मिंस्तस्य स्पृहा मनोज्ञेऽपि ।
रमणीयेऽपि सुधांशौ न मनःकामः सरोजिन्याः ॥ १०४ ॥

इति भर्तृहरिकृतं शृङ्गारशतकं सम्पूर्णम् ॥ २ ॥

यदिति ॥ यस्य यत् रुचिरं नास्ति तत्र मनोज्ञेऽपि सुन्दरेऽप्यस्य स्पृहा न भवति । अत्र दृष्टान्तः—चन्द्रस्तु सर्वेषां प्रियकरः रमणीयः तस्मिन् सूर्यविकासिन्याः सरोजिन्या मनसः कामः प्रीतिर्नैव भवति । एवं यस्य यत्र प्रीतिस्तस्य तत् रुचिकरम् । अतो नीतिः शृङ्गारश्च वैराग्यं च उक्तम् । एतेषु यत्र यस्य प्रीतिस्तेन तद् द्रष्टव्यम् । इदं शृङ्गारशतकं भर्तृहरिणा कृतं तत् कामबुद्ध्या न कृतम् । आदावेव आरम्भे । "समस्तभावैः खलु बन्धनं स्त्रियः" इत्युक्तम् । मध्येऽपि "दुःखैकहेतुर्न हि कश्चिदस्ति" इत्यादीनि वचनानि स्थले स्थले स्थितानि तासां कामिनीनां प्रशंसा कामिभिः क्रियते सा लिखिता । प्रान्ते सर्वं विवेकदृष्ट्या निन्दितम् ॥ १०४ ॥ इति शृङ्गारशतकव्याख्यानं सम्पूर्णम् ॥ २ ॥

जिस पदार्थमें जिसकी रुचि नहीं होती चाहे वह सुन्दरभी हो तोभी उसे उसकी इच्छा नहीं होती क्योंकि रमणीय चंद्रमामें कमोदनीकी इच्छा नहीं होती ॥ १०४ ॥ इति शृङ्गारशतक ॥ २ ॥

इति शृङ्गारशतकम् ।



श्रीः ॥

# अथ वैराग्यशतकम् ।



चूडोत्तंसितचन्द्रचारुकलिकाचञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १ ॥

चूडेति ॥ चूडोत्तंसितस्य शिरोभूषणीकृतस्य चन्द्रस्य चारुकलिकया मनोहरकोरकयेव चञ्चच्छिखया प्रकाशमानाग्रेण भास्वरः प्रकाशमानः । विलोलः चञ्चलः काम एव शलभः सः लीलया विलासेन दग्धो येन । श्रेयसां शुभानां दशासु अवस्थासु अग्रे पुरतः स्फुरन् प्रकाशमानः। अन्तः अन्तर्मनसि स्फूर्जतः विजृम्भमाणस्य अपारस्य अनन्तस्य मोहतिमिरस्य प्राग्भारं गुरुप्राक्प्रदेशमुच्चाटयन् निरस्यन् ज्ञानप्रदीपो ज्ञानप्रकाशको हरो भक्तानां ज्ञानाज्ञानकृतमानसिकवाचिककायिकपापहारी भगवान् साम्बशिवः योगिनां सनकादीनां चेतःसद्मनि मनस्येव गृहे विजयते सर्वोत्कर्षेण वर्तते । प्रथमतः चूडोत्तंसितेति वाक्ये चन्द्रपदग्रहणाद्भक्तानां तापहारीत्यर्थो लभ्यते । लीलादग्धेति वाक्ये कामशलभपदग्रहणान्महाशत्रु संहारीति लभ्यते । अन्तः स्फूर्जदिति वाक्ये मोहतिमिरपदग्रहणात् यथा उदितः सूर्यः सर्वतिमिराणि नाशयति तथायमपि अज्ञाननाशं करोतीति । चेतःसद्मनीति वाक्ये ज्ञानदीपपदग्रहणात् कामक्रोधादिपङ्करहितनिर्मलचित्तानां निस्सङ्गानां योगिनां चेतसि यथा वर्तते तथा भक्तानां सर्वाज्ञाननाशनं कुर्वन् ज्ञानप्रदीपो हरो विजयते इत्याभिप्रायः । शार्दूलविक्रीडितं वृत्तम्॥ १

जो शिरमें भूषणके समान धारण किये हुए चन्द्रकी मनोहर कलासे प्रकाशमान हैं, जिन्होंने लीलासे ही चंचल कामरूप शलभको दग्ध किया है, जो शुभदशाओंके अग्रभागमें प्रकाशमान हैं, जो अन्तःकरणसे विजृंभमाण होते हुए अपार मोहरूप अन्धकारके प्राग्देशको नष्ट करनेवाले ज्ञानप्रदीप हैं ऐसे महादेवजी योगियोंके मनोरूप गृहमें सर्वोत्कर्षसे वर्ते हैं ॥ १ ॥

अथ रागस्य तृष्णामूलकत्वात्तद्ग्रहणं विना न वैराग्यसिद्धिरित्यभिप्रेत्य तत्सिद्ध्यर्थमादौ तावत्तत्पारिपन्थिभूतां तृष्णां दूषयति भ्रान्तमित्यादिनवभिः श्लोकैः। तत्र प्रथमं स्वकर्मकष्टनिवेदनपूर्वकं तृष्णां सम्बोध्य त्रिभिर्दूषयति—

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला।
भुक्तं मानविवर्जितं परगृहेष्वाशंङ्कया काकवत्
तृष्णे जृंभसि पापकर्मपिशुने नाद्यापि सन्तुष्यसि ॥ २ ॥

भ्रान्तमिति ॥ अनेकैर्बहुभिः दुर्गैः पार्वतवार्क्षजलदुर्गादिभिः विषमं विकटं दुःसञ्चारमित्यर्थः। देशं भ्रान्तं संचरितं तथापि किंचिदल्पमपि फलं धनं न प्राप्तं न लब्धम्। बहुफलापेक्षयैव दुर्गमविदेशसञ्चारः कृतः फलं त्वीषदपि न प्राप्तमित्यर्थः। अत्र देशशब्दस्य नपुंसकत्वं निघण्ट्वन्तरेषु मृग्यम्। यद्वा देश-मुद्दिश्य भ्रान्तम्। भावे क्तप्रत्ययः। अथवा "नीवृज्जनपदो देशविषयौ" इत्यभिधानात् पुँल्लिंगस्यापि देशशब्दस्य नपुंसकत्वसंबन्धमनुवर्तते इति भाष्य-कारप्रयोगादिष्यते। तथा उचितमनुरूपं जातिकुलयोः जातिः ब्राह्मणत्वादिः कुलं सद्वंशः तयोरभिमानमित्यर्थः। सापेक्षत्वेऽपि गमकत्वात्समासः। त्यक्त्वापि विसृज्य निष्फला फलशून्या सेवा परिचर्या कृता। धनाढ्यानामिति शेषः। उभयत्रापि कष्टमेवावशिष्टं न त्वन्यत्किंचिदपीत्यर्थः। "लाभनिष्पत्तियोगेषु बले शल्ये फले धनम्।" इति वैजयन्ती। तथा मानविवर्जितं अभिमानशून्यं यथा तथा बहुमानविहीनमिति वा। आशङ्कया आकांक्षया लोलुपत्वेनेति यावत्। परगृहेषु काकेन बलिभुजा तुल्यं काकवत्। "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः। भुक्तमभिमानत्यागेऽपि न बहुमानपूर्वकं किंतु नावमानमेव दत्तं परान्नपिण्डमभ्यवहृतमित्यर्थः। तथापि पापकर्मणां पापात्मनां पिशुन सूचके। येषां तृष्णा त एव पापिष्ठा इति भावः। यद्वा पापकर्मणां दुष्कर्मणां पिशुने प्रवर्तके इत्यर्थः। एतद्व्यतिरेकेण दुष्कर्मप्रवर्तकान्तराभावादिति भावः। हे तृष्णे विषयस्पृहे जृम्भसि प्रवृद्धा भवसि। किंत्वद्यापि ईदृक्कष्टकर्मप्रवर्तनदशाया-मपीति भावः। न सन्तुष्यसि सन्तुष्टा न भवसि विरतिं न प्राप्नोषीत्यर्थः। इतः परमपि किंचिद्दुष्टकर्म कारयितुमपेक्षास्तीव प्रतिभातीति भावः ॥ २ ॥

१ गृहे साशंक्या। २ दुर्मतिपा०। ३ विरते। इति च पाठांतरम्।

दुर्गम अनेक देशोंमें मैंने भ्रमण किया पर कुछ फल न प्राप्त हुआ यथार्थ जाति और कुलका अभिमान त्यागकर पराई सेवा की सोभीं व्यर्थ हुई, अपमानसे कौवेके समान सशंकित परघर भोजनभी करता रहा । हे तृष्णे ! पापकर्ममें प्रवृत्त तू अबतक सन्तुष्ट नहीं होती किन्तु बढती ही है ॥ २ ॥

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णे सकामा भव ॥ ३ ॥

उत्खातमिति॥ निधिशङ्कया निक्षेपोऽत्र तिष्ठतीति भ्रान्त्या क्षितितलं किंचिद्दिष्टकादिनिचितभूतलमुत्खातमवदारितम् । तत्र न किंचिल्लब्धमित्यर्थः । तथा गिरेर्धातवः मनःशिलाद्याः ध्माताः सुवर्णभावं प्राप्स्यन्तीति धिया अग्नौ मूषायां समूलिकाविशेषं निक्षिप्य यावत्प्राणं फूत्कारैः सन्तापिता इत्यर्थः। तदपि न किंचिज्जातमिति भावः । "ध्माशब्दाग्निवक्त्रसंयोगयोः" इत्यस्माद्धातोः कर्मणि क्तः । "धातुर्मनःशिलाद्यद्रेः" इत्यमरः । अत्राप्युक्तम्-"सुवर्णरूप्यताम्राश्महरितालमनःशिलाः । गैरिकाञ्जनकाश्मीरलोहसीसाश्च हिंगुलः। गन्धकाभ्रकमित्याद्या धातवो गिरिसम्भवाः । " इति । अत्र सुवर्णरूप्यव्यतिरेकेणैव योज्यमन्यथा प्रकृतासङ्गतेरिति । तथा सरितां पतिः समुद्रो निस्तीर्णः द्वीपान्तरेषु वाणिज्येन बहु धनं सम्पादयिष्यामीति सांयात्रिकभावेन विलङ्घित इत्यर्थः । नृपतयो राजानश्च यत्नेन छन्दानुवर्तनरूपप्रयत्नेन सन्तोषिताः । तथा मन्त्राराधनतत्परेण मन्त्रजपतात्पर्यवता मनसा हेतुना श्मशाने प्रेतभूमौ निशा रात्रयो नीता यापिताः । भूतप्रेतपिशाचादिभ्यो भयमविगणय्य निध्यादिप्रदर्शकदेवताभिमुखीकरणसाधनमन्त्रजपतात्पर्येण निशासु श्मशाने स्थितमित्यर्थः । तथापि मया काणवराटकः अन्धकपर्दोऽपि न प्राप्तः । धनं तु दूरापास्तमिति भावः । "कपर्दश्च वराटकः" इति हलायुधः । अतस्तृष्णे सकामा सफलमनोरथा भव । त्वत्प्रतिज्ञातार्थनिष्पत्तौ सिद्धसङ्कल्पा भवेत्यर्थः । इत्थमनर्थहेतुभू-

१ तृष्णेऽधुनामुञ्चमाम् । इति पाठान्तरम् ।

तया तृष्णया वृथाव्यापारजनितश्रम एवावशिष्टो न वांछितलाभ इत्यतस्तदु-न्मूलने यत्नः कर्तव्य इति भावः ॥ ३ ॥

द्रव्य मिलनेकी आशासे मैंने ठौर २ भूमि खोदी, रसायन सिद्ध होनेके निमित्त पर्वतकी अनेक धातुओंको फूंक डाला, देशान्तरसे धन वा रत्नप्राप्तिके हेतु समुद्रभी मथ डाला और बडे प्रयत्नसे राजाओं-कोभी प्रसन्न किया और मन्त्र सिद्ध करनेके निमित्त मन लगाकर निरंतर रात्रियोंको महाश्मशानमें बैठ जागा परन्तु यथार्थ मुझे एक कानी कौडीभी हाथ न आई। हे तृष्णे ! अब तू तोभी सकाम हो ॥ ३ ॥

खलालापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतो वित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्त्तयसि माम् ॥ ४ ॥

खलालापा इति ॥ खलानां दुर्जनानामालापा दुर्भाषितानि तदाराधनवश-रैस्तत्सेवातत्परैः । अस्माभिरिति शेषः । कथमप्यतिकृच्छ्रेण सोढाः क्षान्ताः अन्यथाभावे कार्यभङ्गो भवेदिति भावः । तथा अन्तरभ्यन्तर एव बाष्पं तदा-लापश्रवणजनिताश्रु निगृह्य नियम्य शून्येन निरुत्सुकेन मनसा उपलक्षितैर्नि-र्भिन्नान्तःकरणैरित्यर्थः । हसितं हासोऽपि कृत इति शेषः । कर्तरि क्तः । दुरालापैराक्षिप्ता अपि ते सन्तोषवन्त एव न तु निर्विण्णाः, अतो विश्वसनीया इति बुद्ध्युत्पादनार्थं निर्विषयमिथ्याहासोऽपि विरचित इत्यर्थः । तथा वित्तेन धनेन यः स्तम्भो जडीभावस्तेन प्रतिहता मूढा विवेकशून्येति यावत् । धीर्येषां तेषां धनदुर्मदान्धानामित्यर्थः । "स्तम्भौ स्थूणाजडीभावौ" इत्यमरः । अतः अञ्जलिरपि कृतः प्रह्वीभावोऽपि विहितस्तथापि न किञ्चिल्लब्धमिति भावः । अतः मोघाशे व्यर्थमनोरथे आशे तृष्णे । "आशा तृष्णादिशोः प्रोक्ता" इति विश्वः । त्वं मामतोऽस्मात्खलालापासहनादिकृतात् अपरमितरत् किं कार्यं नर्तयसि नाटयसि । मया किं कार्यं कारयसीति यावत् । न किमपीत्यर्थः । नाटयितव्यार्थस्य वैयर्थ्यादिति भावः । ननु पूर्वश्लोके मयेत्येकवचनं प्रयुक्तमत्र

१ खलोल्लापाः । २ कृतश्चित्त० । ३ प्रहसित । इति च पाठांतरम् ।

तु तदाराधनपरैरिति वहुत्वं कथमेतत्समञ्जसमिति चेत्सत्यम्, तृष्णोपहतानां वहुत्वात्तत्प्रयुक्ततत्तत्कर्मकर्तृभेदेन कचिदेकवचनं कचिद्बहुवचनं च विवक्षितमित्यवधेयमेवमुत्तरत्रापि योज्यम् । शिखरिणीवृत्तम् ॥ ४ ॥

खलोंकी सेवा करनेमें हमने तिनके ठट्ठे और कुतर्क वाक्य सहे, हृदय नेत्र आंसूको रोक उनके आगे उदास मनसे हँस दिया और चित्त स्थिर कर उन हँसनेवालोंके सन्मुख हाथभी जोडा । हे तृष्णे व्यर्थ आशा करनेवाली इससे अधिक अव क्या नचाती है ॥ ४ ॥

अथ तृष्णादुर्विलसितेनैव महदनुचितमप्याचरितमित्याह--

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किन्नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं मानव्रीडैर्निजगुणकथापातकमपि ॥ ५ ॥

अमीषामिति ॥ किंभ्य तुलितानि समीकृतानि बिसिनीपत्रपयांसि येषां तेषां नलिनीदलगतजललवतरलानां क्षणभंगुराणामित्यर्थः । अमीषामविश्वसनीयानां प्राणानां कृते एतत्प्राणत्राणार्थमित्यर्थः । "अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ ।" इति वचनात् । विगलितो भ्रष्टो विवेकः कर्तव्याकर्तव्यविचारो येषां तैरस्माभिः किं दुष्कर्म न व्यवसितं नोद्युक्तम् । सर्वमपि व्यवसितमेवेत्यर्थः । कुतो यद्यस्मात्कारणात् द्रविणमदेन धनमदेन निःसंज्ञानि निस्तम्भितानि मनांसि येषां तेषां विमर्शशून्यान्तःकरणानामाढ्यानां धनिकानाम् । "इभ्य आढ्यो धनी स्वामी" इत्यमरः । अग्रे पुरस्तात् मानव्रीडैर्निर्लज्जैरस्माभिर्निजगुणकथापातकं स्वकीयविद्याविनयादिगुणप्रशंसारूपपापमपि कृतम् । तच्च निषिद्धम् "आत्मप्रशंसां परगर्हणमिव वर्जयेत्" इत्यापस्तम्बस्मरणात् । "आत्मप्रशंसा मरणं परनिन्दा तथैव च ।" इति वचनादात्मगुणप्रशंसैवात्मोपघातः तस्य च निरयप्रापकत्वेन पातकत्वं च । निजगुणप्रख्यापनेन धनं सम्पाद्य तेन प्राणान्सन्तर्पयिष्याम इत्याशयेनेदृशानुचितमाचरितं तथापि न तल्लब्धमित्यपिशब्दार्थः । वृत्तं पूर्ववत् ॥ ५ ॥

---

१ निःशंकम० । २ वीत इति च पाठान्तरम् ।

जैसे कमलके पत्रपर जलके बून्द चञ्चल रहते हैं वैसेही इन चञ्चल प्राणोंके हेतु विवेक त्यागकर हमने क्या उद्यम न किया क्योंकि जिससे धनके मदसे मदान्ध लोगोंके निकट अपना गुण गान करना यह पाप निर्लज्ज होके किया ॥ ५ ॥

अथ यद्यप्युचितमेवाचरितं तथापि तस्यायाथातथ्यान्न फलोपघायकमभूदित्याह—

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ ६ ॥

क्षान्तमिति ॥ सत्येवमपि परिभवहेतौ मनसोऽनुद्वेगः क्षमा तया न क्षान्तं न सोढमवमानादिकमिति शेषः । किं त्वशक्ततयैवेति भावः । तथा गृहे उचितं युक्तं यत् सुखं मृष्टान्नभोजनकलत्रसम्भोगादिजनितानन्दादि तच्च सन्तोषतः किमनेन तुच्छेनेति परितोषान्न त्यक्तम्। किं त्वसम्भावितब्रह्मचर्येणैवेति भावः। तथा दुःसहाः सोढुमशक्याः ये शीतवाततपनैः क्लेशा दुःखानि ते सोढाः क्षान्ताः । देहयात्रार्थं देशान्तरसञ्चारे तेषामनुभूतत्वादिति भावः । तपश्चान्द्रायणादिकं तु न तप्तं न चरितम् । तथा नियमितप्राणैरन्तःप्रत्याहृतप्राणैरस्माभिः अहश्च निशा चाहर्निशमहोरात्रम । "अचतुर०" इत्यादिना निपातनात्साधुः । वित्तं ध्यातं चिन्तितं शम्भोः पदं न ध्यातम् । अतो मुनिभिर्यद्यत्कर्म कृतमवमानसहनादिकमाचरितं तत्तदेव कर्म अस्माभिश्च कृतम्, किन्तु तैस्तैस्तत्तत्कर्मनियतैः फलैर्वञ्चिता वर्जिताः । तेषामयथाचरणेन वैगुण्यात्फलभाजो न जाता इत्यर्थः । क्षान्त्यादिनैव यद्यवमानादिकं क्षान्तं स्यात्तर्हि फललाभो भवेदेव न तु तदाचरितम्। अयं चानर्थस्तृष्णादुर्विलसितमूल एवेति फलितार्थः । शार्दूलविक्रीडितं वृत्तम् ॥६ ॥

क्षमा तो हमने की परन्तु धर्म विचारके न की अर्थात अशक्ततासे की, गृहसुख तो छोडा परन्तु संतोष पकडके न छोडा; शीतोष्ण वायुका दुःसह दुःख सहा पर तप न किया, धनका ध्यान करते रहे

परन्तु संयमसे कल्याणदाता शिवके चरण न ध्याये, हमने वे कर्म किये जो विचारवाले मुनियोंने किये पर उन कर्मोंके फलोंसे हम वंचित हुए हैं ॥ ६ ॥

अथ त्रिभिर्जरादूषणद्वारा तृष्णां निन्दति—

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः ॥ ७ ॥

भोगा इति ॥ भुज्यन्त इति भोगाः स्रक्चन्दनादिविषया न भुक्ता नानुभूताः किंतु वयमेव भुक्तास्तत्प्राप्त्यर्थं दुरन्ताचिन्तया ग्रस्ताः। तथा तपः व्रतोपवासादि पुण्यं नाचरितं किंतु वयमेव तप्ता अध्यात्मिकादितापत्रयेण सन्तापिताः। तथा कालो न यातो न गतस्तस्याखण्डदण्डायमानत्वेन यानासम्भवादिति भावः। किंतु वयमेव याताः जीविताවधिकालमुल्लंघ्यावसानं प्राप्ता इत्यर्थः। अथवा कालो न यातः सदाचारसज्जनसहवासादिना न गतः। तथा चेच्छ्रेयो भवेदेवेति भावः। किंतु वयमेव याता देहगेहादियोगक्षेमानुसन्धानलम्पटत्वेन कालमतिक्रम्य गता इत्यर्थः। तथा तृष्णा न जीर्णा न शिथिला। तच्छैथिल्यहेतोरनुपस्थितत्वादिति भावः। किन्तु वयमेव जीर्णाः। तृष्णासहकृतजरया शिथिलाङ्गा जाता इत्यर्थः। अत इतः परं वा क्षिप्रं खट्वाङ्गेनेव तृष्णोन्मूलनहेतुः संपादनीय इति भावः ॥ ७ ॥

विषयोंको हमने नहीं भोगा किन्तु विषयोंनेही हमारा भुगतान कर दिया, हमने तप न तपे पर तपहीने हमें तपा डाला, काल व्यतीत न हुआ पर वयस हमारी बीत गई, तृष्णा पुरानी न हुई पर हम पुराने हो गये ॥ ७ ॥

वलिभिर्मुखमाक्रान्तं पलितेनाङ्कितं शिरः।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ८ ॥

वलिभिरिति ॥ वलिभिर्जराविश्लथचर्मरेखाभिर्मुखं वक्त्रमाक्रान्तं वैरूप्यं

प्रापितामित्यर्थः।पलितेन जरसा शौक्ल्येन शिरो मस्तकमाङ्कितं चिह्नितम्। शिरःकेशादयो धवला जाता इत्यर्थः। तथा गात्राणि करचरणाद्यवयवाः। अवयविवाचिनो गात्रशब्दस्यावयवार्थकत्वं लक्षणया वेदितव्यम् अवयवावयविनोरभेदाविवक्षया वा। न च वक्त्रबाहुल्याविवक्षायां यथाश्रुतमेव समञ्जसमिति वाच्यम्। मुखं शिर इत्येकवचनप्रयोगविरोधात्। ननु तत्रापि जात्येकवचनग्रहणे न कोऽपि विरोध इति चेत्किमनेन वकबंधप्रयासेनेत्यलमतिप्रसङ्गेन। शिथिलायन्ते शिथिलानीवाचरन्ति जराजर्जरभावविश्लिष्टसन्धिबन्धतया कार्यकरणासमर्थानि जायन्त इत्यर्थः। किंतु एका तृष्णा तरुणायते तरुण इवाचरति। बलिष्ठा जातेत्यर्थः। जरया सर्वमप्येवं विशकलितं न तृष्णेति महदेतदाश्चर्यामिति भावः। उभयत्रापि "कर्तुः क्यङ् सलोपश्च" इति क्यङ् "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घः ॥ ८ ॥

मुहके चमडे सिकुड गये, शिरके बाल श्वेत हो गये और सब अंग शिथिल हो गये पर एक तृष्णा ही तरुण होती जाती है ॥ ८ ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः।
शनैर्यष्टयोत्थानं घनतिमिररुद्धे च नयने
अहो मूढः कायस्तदपि मरणापायचकितः ॥ ९ ॥

निवृत्तेति ॥ भोगेच्छा विषयानुभवस्पृहा निवृत्ता निर्गता। अत्र जरादूषणाभिनिवेशपारवश्येनेत्थमुक्तम्। तेन तृष्णैका तरुणायत इत्याविरोधा। पुरुष इति यो बहुमानः सन्मानः सोऽपि गलितोऽपगतस्तत्प्रयोजकपौरुषादपायादिति भावः। यद्वा पुरुषाणां बहुमानस्तत्कर्तृकसन्मानः सोऽपि गलितः। पूर्ववत्पुरुषादिना न बहु मन्यत इत्यर्थः। इदानीं तादृशगौरवालाभादिति भावः। अथ परेतबान्धवशोचनापदेशेन स्वस्यापदेशतां सूचयन्नाह। जीवितसमाः प्राणतुल्या अत्यन्तप्राणतुल्या इत्यर्थः। सुहृदो बन्धवश्च समानाः सबहुमानाः सन्तः सपदि सद्य एव जरावस्थायाः प्रागेवेत्यर्थः। स्वर्याताः स्वर्गं गताः। निजसुकृतपाकेन पुण्यलोकं गता इत्यर्थः। जरादुर्दशापत्त्या बहुमानरहितोऽहं न यातो हीन-

१ विगलितः। २ धृष्टः। इति च पाठान्तरम्।

जीवन इति भावः । यद्वा समानाः सवयसो जीवितसमा बन्धवश्च सपदि सद्य एव दुरवस्थापत्तेः पूर्वमेवेति भावः । स्वर्याता लोकान्तरगता न त्वहमित्यर्थः । " स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः । " इत्यमरः । ननु कश्चित्कालं स्थीयतां किमनेनामङ्गलाशंसनेनेत्यत आह—शनैर्मन्दं यष्ट्युत्थानं यष्ट्यवष्टम्भनोत्थानं प्राप्तमिति शेषः । पादपाटवविघट्टनास्स्वयमुत्थाने सञ्चारे वा शक्तिर्नास्तीत्यर्थः । न त्वेतावन्मात्रमेव किंतु नयने चक्षुषी च । प्रगृह्यत्वादस्य अहो इत्यनेन सन्ध्यभावः । घनं निबिडं यत्तिमिरं पाटलाख्यनेत्ररोगविशेषो वैद्यशास्त्रप्रसिद्धः । " तिमिरं ध्वान्ते नेत्रामयेऽपि च " इति विश्वप्रकाशश्च । तेन रुद्धे निरुद्धशुद्धप्रसारे अर्थग्रहणासमर्थे जाते इत्यर्थः । अन्धपंगुजीवनाद्वरं मरणमेवेति भावः । एतत्सर्वमनर्थजातं जराकृतमेवेति हृदयम् । तदपि तथापि मूढो ज्ञानहीनः कायो देहो मरणेन योऽपायो विश्लेषो नाश इति यावत् । तस्मात् चकितो भीतो भवतीति शेषः । अत्र देहिधर्मैस्तदुपाधौ देहे उपचर्यते । अहो ईदृक्कष्टदशायामपि जीविताशैव बलीयसी न विज्ञानोदय इत्याश्चर्यमित्यर्थः । एतदपि तृष्णाविलसितमेवेति भावः । शिखरिणीवृत्तम् ॥ ९ ॥

विषयभोगकी इच्छा न्यून हुई, लोगोंमें अपना मान भी घटा, समान वयसवालेभी मर गये, ये जो इष्ट मित्र थे वेभी समाप्त होनेवाले हैं अथवा अपने समान हैं, आपभी लकडी टेककर उठने लगे और आंखोंमें अंधेरी आई तौभी यह काया ऐसी निर्लज्ज है कि अपना मरण सुन चकित हो जाती है ॥ ९ ॥

नन्वेतादृशतृष्णामुल्लंघ्य स्वात्मसुखानुभवतत्परा ये केचन महान्तः सन्ति किमित्याशङ्क्य सन्त्येवेति निगमयन् तस्याः पृथग्जनदुस्तरतरत्वद्योतनार्थं महानदीत्वं रूपयति—

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्त्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥१०॥

आशेति ॥ मृष्टान्नपानभोजनविचित्राम्बरभूषणधारणषोडशवार्षिककामिनीसम्भोगादिगोचरमानसव्यापारा मनोरथास्त एव जलानि यस्याः सा तथोक्ता ।

अप्राप्येष्वर्थेषु प्राप्त्यभिलाषविशेषास्तृष्णास्ताभिरेव तरङ्गैः कल्लोलैराकुला संकुला। अभिमतवस्तुषु स्नेहो रागः। उपलक्षणमेतद्द्वेषादीनाम् तथा च रागद्वेषादय एव ग्राहा नक्रादयस्त्वस्यां सन्तीति तथोक्ता। तत्तत्पदार्थलाभगोचरा वितर्कास्त एव विहगाः कारण्डवादिपक्षिणो यस्यां सा तथोक्ता। "मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषु।" इत्युक्तलक्षणं धैर्यं तदेव द्रुमस्तं ध्वंसयत्युन्मूलयतीति तथोक्ता। अज्ञानं मोहमेव तद्वृत्तयो दम्भदर्पादयो लक्ष्यन्ते। तथा च मोहा अज्ञानवृत्तय एवावर्ता जलभ्रमास्तैर्दुस्तरा सुष्ठु तरितुमशक्या अतिगहना। एकत्र दुर्विभाव्यस्वभावादन्यत्र दुरवगाहत्वाच्चेत्थमिति निर्णेतुमशक्येत्यर्थः। इष्टाधिगमजनितध्यानं चिन्तावहुविधत्वेऽपि चिन्तानां तटद्वयरूपणोपयोगाथ द्वित्वं वक्ष्यते। तथा प्रोत्तुङ्गे अत्युन्नते चिन्ते एव तटे यस्याः सा तथोक्ता। आशा नाम नैकविधात्यायता तृष्णा। "दशावस्था नैकविधात्याशा तृष्णापि चायता।" इत्यमरः। नामेति प्रसिद्धौ। आशेति प्रसिद्धेत्यर्थः। या नदी वर्तते इति शेषः। यत्तदोर्नित्यसम्बन्धात् तस्या आशानद्याः पारं गता ज्ञानप्लवेनेति भावः। अत एव शुद्धमनसो निर्मलान्तःकरणाः योगीश्वराः महायोगिनः नन्दन्ति ब्रह्मानन्दमनुभवन्तीत्यर्थः। अतः सर्वथा तृष्णातरणोपायोऽन्वेषणीयः श्रेयस्कामेनेति भावः। अत्र प्रवाहरूपणाविच्छिन्नत्वसाम्यदशायां नदीत्वम्, प्रकृतिस्वरूपनिरूप्यत्वसर्वतोमुखसम्भ्रमत्वादिसादृश्यान्मनोरथेषु जलत्वम्, मज्जनोन्मज्जनपारम्पर्येण विरामाभावसाधर्म्यात्तृष्णासु तरङ्गत्वम्, दुष्स्वाभाव्येन ग्रसिष्णुत्वसाम्याद्रागादिषु ग्राहत्वम्, नानाविधगतिमत्त्वसादृश्याद्वितर्केषु विहगत्वम्, स्थिरतरत्वस्वभाव्याद्धैर्ये द्रुमत्वम्, निरन्तरदुरन्तरदुरन्तभ्रामकत्वसाधर्म्यान्मोहेष्वावर्तत्वम्, अगाधभावद्योतकत्वसारूप्याच्चिन्तासु तटत्वं च रूपितमित्यवगन्तव्यम्। अत एव समस्तवस्तुवर्तिसावयवरूपकालङ्कारः॥ १०॥

आशा नाम एक नदी है, मनोरथरूपी जल उसमें भरा है, तृष्णारूपी तरंगोंसे पूर्ण है, प्रीतिही उसमें मगर है, नानाविध तर्कही उसमें पक्षी हैं, धैर्यरूपी वृक्षको ढहानेवाले मोहरूपी भौंरो उसमें पडे हैं, इससे वडी दुस्तर और कठिन हो रही है, वडी चिन्ताही उसके तट हैं उससे पार होकर वडे शुद्ध मननशील योगी आनन्द पाते हैं ॥ १० ॥

## अथ विषयपरित्यागविडम्बना।

यदुक्तं योगिनस्तृष्णानदीं तीर्त्वा नन्दन्तीति तत्र विषयपरित्यागमन्तरा तदसम्भवादथ विषयपरित्यागविडम्बनोच्यते—अथेति॥ अथ तृष्णादूषणानन्तरं

विषयाणां रूपादीनाम् " रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी । " इत्यमरः । यद्वा स्रक्चन्दनवनितादिभोग्यवस्तूनां परित्यागः संन्यासस्तस्य विडम्बनानुकरणमभिनयः इति यावत् । उच्यत इति शेषः । तत्प्रकारमेवाह दशभिः—

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ११ ॥

न संसारोत्पन्नमिति ॥ संसारे अनादिभवपरम्परायामुत्पन्नमुदितं फलोद्देशेनानुष्ठितमिति यावत् । चरितं पुण्याचरणम् । " आदिकर्मणि क्तः कर्तरि च " इति कर्तरि क्तः । कुशलं क्षेमकरं नानुपश्यामि नानुसन्दधामीत्यर्थः । कुतः एतद्वैपरीत्यमित्याशङ्क्य तत्रोपपत्तिमाह—विपाक इति । पुण्यानां पुराकृतसुकृतानां विपाकः सम्पद्रूपपरिपाकः विमृशतः तत्फलं परामृशतो मे मम भयं जनयत्युत्पादयति । तत्पर्यालोचने सम्पदां पुण्यव्ययलभ्यत्वेन विपद्रूपत्वाद्भयजनकत्वमित्यर्थः । अत एवोक्तं कविकुलसार्वभौमेन श्रीहर्षेण—" पूर्वपुण्यविभवव्ययलब्धाः सम्पदो विपद एव विमृष्टाः " इति । अथवा पुण्यानां ज्योतिष्टोमादिसत्कर्मणां विपाकः स्वर्गादिरूपफलपरिणामो विमृशतः पूर्वोत्तरं पर्यालोचयतो मे भयं जनयति । " क्षीणे पुण्ये मर्त्यलोकं विशन्ति " इति भगवद्वचनात् यावन्नियतकालं स्वर्गसुखमनुभूय पुण्यक्षये सति पुनर्मर्त्यलोकप्रवेशे महाविपाद्गर्भनिरयवासजन्मपरम्परादुःखप्रभवत्वाद्भयङ्करत्वमित्यर्थः । अतः कुशलं न पश्यामीति संबन्धः । एतत्फलभूतानां भोगानामप्यनर्थहेतुत्वमेवेत्याह—महद्भिर्भूयिष्ठैः पुण्यौघैः पुण्यसञ्चयैः हेतुभिश्चिरपरिगृहीताश्चिरकालमारभ्य संगृहीता विषयाश्च भोगा अपि विषयिणां विषयासक्तानां व्यसनं विपत्तिं दुःखमिति यावत् । दातुमिव दातुमेव । इवशब्दोऽत्रावधारणार्थकः न तूत्प्रेक्षाभिव्यञ्जकः । अन्यथार्थान्तरता स्यादिति वेदितव्यम् । महान्तः प्रवृद्धा जायन्ते भवन्ति व्यसनप्रदानप्रवणैव एतद्वृद्धिः नान्यदानप्रवणेत्यर्थः । एवमैहिकामुष्मिकभोगानामनिष्टानुबन्धित्वात्तत्त्याग एव श्रेयानिति भावः । शिखरिणीवृत्तम् ॥ ११ ॥

सांसारिक उत्पन्न चरित्रमें हम कुशल नहीं देखते और पुण्यफल स्वर्गादि विचारसे भयदायक ही देख पडता है अर्थात् पुण्यक्षय होनेपर

वहांसे भी पतन होता है और बहुत दिनपर्यन्त पुण्यके समूहसे इस लोकमें जो विषयादि सञ्चित किया है वह भी विषयासक्तोंको अन्त-समय दुःखदायकही है ॥ ११ ॥

अथ सर्वथा विषयाः परित्याज्या इति वक्तुं तेषां व्यवस्थितिमाह—

अवश्यं यातारश्चिरतरमुषित्वापि विषयाः
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥ १२ ॥

अवश्यमिति॥ विषया भोगाश्चिरतरं बहुकालमुषित्वा स्थित्वापि । "वसति-क्षुधोरिट्" इतीडागमः । "वचिस्वपि०" इत्यादिना सम्प्रसारणम् । अवश्यं नियतं सिद्धमिति यावत् । यातारो गन्तारः। आगमापायित्वेनास्थिरत्वात् परिचयानादरेण त्यक्त्वा यातार एव न तु परिचयवशाद्यावज्जीवं स्थातार इत्यर्थः। तदुक्तं भगवता—"मात्रास्पर्शाश्च कौन्तेय शीतोष्णसुखदुःखदाः। आगमापायिनो नित्यास्तांस्तितिक्षस्व भारत।।" इति । यातेर्लुट् । अतः वियोगे विषयविरहे को भेदः को वा विशेषः न कोऽपीत्यर्थः । स्वकर्तृकत्यागे वा पुरुषकर्तृकत्यागे वा तस्य जायमानत्वादिति भावः । तथा हि यद्यस्मात्कारणात् जनो विषयासक्तः पुमान् अमून् विषयान् स्वयं न त्यजति गुणान् गृहीत्वा न विसृजति । स्वयमेव त्यजति चेत्तर्हि तेन कृतार्थो भवेदिति भावः । एतेन विषय-कर्तृकत्यागे तु न कृतार्थत्वमिति सूच्यते । ननु कुत एतद्वैषम्यमित्याशंक्य तत्र व्यवस्थामाह—स्वातन्त्र्यात्कर्तृत्वात् स्वाच्छन्द्यादिति यावत् । "स्वतन्त्रः कर्ता" इत्यनुशासनात् । त्यजन्तः पुरुषं विसृजन्तः सन्तः विषया इति शेषः । मनसः अतुलपरितापाय दुरन्तसन्तापाय भवन्तीति शेषः । अत्यन्त-दुःखकारिणो भवन्तीत्यर्थः । स्वयं स्वेन कर्त्रा पुरुषेण त्यक्ताः तुच्छत्वभाव-नया विसृष्टाश्चेत्तर्हि एते विषया अनन्तमपरिच्छिन्नं शमसुखं तृष्णोपशान्ति-सुखं परमानन्दमिति यावत् । विदधति कुर्वन्ति हि । हिरवधारणे । तदुक्तम् । " यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोड-शीं कलाम् ॥ " इति । अतोऽनर्थोपादकविषयकर्तृकत्यागात्पूर्वमेव स्वयं तत्त्यागतत्परेण भवितव्यं श्रेयस्कामेनेति भावः । वृत्तं पूर्ववत् ॥ १२ ॥

बहुकालपर्यन्त भोग कियेहुए विषय अन्तमें अवश्य छूटेंगे फिर उनके वियोग होनेमें क्या संशय रहा जिसे यह मनुष्य पहिले आपही क्यों न त्याग दे क्योंकि जब वे आपसे छोडेंगे तो मनको बडा संताप देंगे और जो आप छोड देगा तो महासुखको प्राप्त होगा ॥ १२ ॥

ननु कीदृग्विधाः पुरुषाः विषयत्यागसमर्था इत्याकांक्षायां ज्ञानिन एव समर्था न तु मादृशा इत्याह—

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।
सम्प्राप्तान्न पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्ययान्
वाञ्छामात्रपरिग्रहानपि परं त्यक्तुं न शक्ता वयम् ॥ १३ ॥

ब्रह्मेति ॥ ब्रह्मज्ञानेन यो विवेकस्तत्त्वविचारस्तेन निर्मला निष्कलङ्का असम्भावनादिरहितेति यावत् । सा धीर्येषां ते ज्ञानवन्त इत्यर्थः । दुष्करं कर्तुमशक्यं कुर्वन्ति । अहो इत्याश्चर्ये । किं तद्दुष्करमित्याह—यद्यस्मादुपभोगं भजन्तीत्युपभोगभाञ्जि स्रक्चन्दनादिभोगसाधनत्वेनानुभूयमानानीत्यर्थः । धनानि वित्तानि निःस्पृहा निरीहाः सन्त एकान्ततो नितान्तं निरवशेषमिति यावत् । मुञ्चन्ति विसृजन्ति इदमेवातिदुष्करमत्यन्ताश्चर्यं चेत्यर्थः । वयमस्मद्विधा ज्ञानिनस्तु पुरा पुरातनकाले न सम्प्राप्तान्नाधिगतान् सम्प्रतीदानीं वर्तमानकालेऽपि प्राप्तौ वा भविष्यत्काललाभेऽपि वा न दृढप्रत्ययान्न दृढविश्वासान् अविश्वसनीयानिति यावत् । कालत्रयेऽप्यसम्भाव्यमानानित्यर्थः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । किं तु वाञ्छामात्रपरिग्रहान्मनोरथमात्रसंगृहीतान्मनोव्यापारमात्रगोचरीकृतानपीत्यर्थः । अनुभूयमानांस्तु किमुतेति भावः । विषयानिति शेषः । त्यक्तुं परमत्यन्तं न शक्ताः असमर्था अतस्त एव धन्या इति भावः । "शकधृष०" इत्यादिना तुमुन् । विषयपरित्यागे ब्रह्मज्ञानमेव मुख्यसाधनमतस्तत्सम्पादनेन तत्परित्यागोऽवश्यं कर्तव्य इति फलितार्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

ब्रह्मज्ञानके विवेकी निर्मलबुद्धिमान् और सत्पुरुष यह बडा कठिन

---

१ कांचनध० इति पाठान्तरम् ।

व्रत धारण करते हैं कि, उपभोग भूपण वस्त्र चन्दन वनिता शय्या तांबूल और धन इत्यादि विषयक सामग्री सब त्याग देते हैं और निरन्तर निस्पृह रहते हैं, हमको तो ये वस्तु न तो पहिले प्राप्त हुई न अब इच्छामात्रसे ग्रहण हो रहे हैं उसे भी हम त्याग नहीं कर सकते अर्थात् इनकी आशाका भी हमसे त्याग नहीं होता ॥ १३ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुकणान् पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकं तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १४ ॥

धन्यानामिति ॥ गिरिकन्दरेषु गिरिगह्वरेषु । "दरी तु कन्दरो वा स्त्री" इत्यमरः । वसतां विविक्ततया वर्तमानानाम् । "विविक्तसेवी लघ्वाशी" इति वचनादिति भावः । तथा परं ज्योतिः परं ब्रह्म ध्यायतां धन्यानां पुण्यशालिनाम् । "सुकृती पुण्यवान् धन्यः" इत्यमरः । आनन्दे ये अश्रुकणाः बाष्पबिन्दवस्तान् निःशङ्कं तेषां तपःप्रशान्तत्वान्निर्भयं यथा तथा अङ्के शेरत इत्यङ्केशया उत्सङ्गवर्तिनः । "अधिकरणे शेतेः" इत्यच्प्रत्ययः । शकुनाः पक्षिणः पिबन्ति । किंतु मनोरथेन वाञ्छामात्रेणोपरचिताः याः प्रासादेषु हर्म्येषु वापीतटेष्वल्पसरस्तीरेषु क्रीडाकाननेषूद्यानेषु च केलयो विहारास्तासु कौतुकजुषामौत्सुक्यभाजामस्माकमायुः परमायुरेव क्षीयते नश्यति । दुर्लभविषयचिन्तातत्परैर्वृथा कालो यापितः । न तु तत् ब्रह्मज्ञानं सम्पादितमतो वयमपि तथा न धन्या इति भावः ॥ १४ ॥

जो उत्तम पुरुष पर्वतकी कन्दरामें रहते और परब्रह्मकी ज्योतिका ध्यान करते हैं जिनके आनन्दका आंसु पक्षी निडर हो गोदमें बैठकर पीते हैं उनको धन्य है हम और लोगोंकी तो अवस्था केवल मनोरथहीके मन्दिरकी बावडीके तटमें जो क्रीडाका वन तिसमें लीलाके

१ निवसतां । २ जलं । ३ परि० इति च पाठान्तरम् ।

कौतुक करतेही क्षीण होती है। तात्पर्य यह है कि, नानाप्रकारके मिथ्या कल्पनाहीमें जन्म व्यतीत होता है, वास्तवमें कोई मनोरथ सिद्ध नहीं होता ॥ १४ ॥

अथ कस्यचिद्विषयाभिभूतस्य निर्वेदवचनमभिनीयाह—

भिक्षाशने तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं[1] विशीर्णशतखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥ १५ ॥

भिक्षाशनमिति ॥ भिक्षा भैक्ष्यमित्यर्थः । अशनमाहारस्तदपि भिक्षान्नाशनमपि नीरसं मधुराम्लादिरसहीनं तदप्येकवारं न तु द्वित्रिवारमित्यर्थः । शय्या शयनीयं च भूः साप्यास्तरणादिरहितेति भावः। परिजनः सेवकजनो निजदेहमात्रं स्वयमेव परिजनो न तु कश्चिदन्योऽस्तीत्यथः । वस्त्रमाच्छादनं च विशीर्णा शतखण्डमयी विशेषेण जीर्णानेकचीवरशकलनिर्मिता कन्था तथापीदृक्कष्टदशायामपीत्यर्थः । विषयाः भोगवाञ्छा न परित्यजन्ति न विसृजन्ति मामिति शेषः। हा हेति विषादविस्मयातिशयाभिनिवेदनार्थाद् द्विरुक्तिः। पापिष्ठा इमे विषया हतमेव घ्नन्तीति भावः। अत्र विषयपरित्यागकारणसामग्र्यां सत्यां कार्यानुदयाद्विशेषोक्तिरलङ्कारः । "तत्सामग्र्यामनुत्पत्तिर्विशेषोक्तिर्निगद्यते।" इति लक्षणात्। वसन्ततिलकावृत्तम् ॥ १५ ॥

नीरस अन्न एकही वेर भीख मांगके खाते हैं, भूमिही पर सोते हैं, कुटुम्बभी उनका देहही मात्र है, पुराने वस्त्र सैकडो टुकडेकी सी गुदडी पहिने ऐसी दशामें प्राप्त हैं तौभी बडा आश्चर्य है कि उन्हें विषयवासना नहीं परित्याग करती ॥ १५ ॥

अथ विषयाणां कामिनीप्राधान्यात्तद्दूषणाभावे तत्परित्यागो न सुकर इति मनसि निधाय तां दूषयति—

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।

1 वस्त्रं च जीर्णशतखण्डमलीनकंथा इति पाठान्तरम् ।

स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघनं
मुहुर्निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ १६ ॥

स्तनाविति ॥ स्तनौ कुचौ मांसग्रन्थी मांसपिण्डौ तथापि कनककलशौ अनर्घ्यहिरण्मयकुम्भावित्युपमितौ उपमाविषयीकृतकनककलशकल्पत्वेनोपवर्णितावित्यर्थः । मुखं वक्त्रं तु श्लेष्मागारं कफलालादन्तमलादिस्थानं तदपि च शशाङ्केन सुधारसमयेन चन्द्रेण तुलितं समीकृतं तत्तुल्यत्वेनोपवर्णितमित्यर्थः। अत्र तुलितशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि न "तुल्यार्थैरतुलोपमाभ्याम्०" इति तृतीयाप्रतिषेधः । अत्र सूत्रे सदृशवाचिन एव ग्रहणादिति । जघनं कटिपुरोभागस्तु । "पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।" इत्यमरः । स्रवता मदनसदनदार्ढ्याभावाद् द्रवता मूत्रेण क्लिन्नमार्द्रमपवित्रमित्यर्थः । तदपि करिवरशिरःस्पर्धि मदजलपरिप्लुतिश्लाघ्यगजेन्द्रकुम्भस्थलसदृशमित्युपवर्णितमिति भावः।अतः मुहुः पौनःपुन्येन निन्द्यं ग्रन्थ्याद्याकारेण जुगुप्स्यं रूपं स्तनाद्यवयवस्वरूपं कामिन्या इति शेषः । कविजनविशेषैस्तत्ताद्विशेषकल्पनाचतुरकवीश्वरैः गुरु कनककलशादिसादृश्यवर्णनेन श्रेष्ठं कृतम्।कविजनवाङ्मात्रसारमेवैतद्रूपं न तु स्वतःसिद्धसारवादिति भावः । अत्र मांसग्रन्थित्वेन स्तनयोर्मर्दनानर्हत्वं, श्लेष्मागारत्वेन मुखस्य चुंबनाद्ययोग्यत्वं, स्रवन्मूत्रक्लिन्नत्वेन जघनस्य हेयतया सम्भोगापात्रत्वं च सूचितम् । एतत्कुत एव कामिनीनां सम्भोगास्पदत्वेनाभिमतम् । इदमेवेत्थं जुगुप्सितत्वेन दूषितं चेत्तर्हि किमन्यत् कामिन्यां भोगयोग्यमस्तीति श्लोकतात्पर्यम्। "हासोऽस्थिसन्दर्शनमक्षियुग्ममत्युज्ज्वलं तत्कलुषं वसायाः। स्तनौ च पीनौ पिशितास्रपिण्डौ स्थानान्तरे किं नरको न योषित् ॥ " इति ॥ १६ ॥

स्त्रियोंके स्तन मांसके लोंदे हैं उन्हें स्वर्णकलशकी उपमा देते हैं, मुख थूक खकारका गृह है उसे चन्द्रमाके समान कहते हैं और टपकते हुए मूत्रसे भीगी जघनको गजश्रेष्ठके गण्डस्थलके समान कहते हैं तो देखो कि वारंवार निन्दायोग्य स्त्रियोंका रूप है उसे कवियोंने कैसा बढाया है ॥ १६ ॥

---

१ अहो नि० इति पाठान्तरम् ।

अथैकः परमेश्वर एवैकान्ततोऽनुरक्तो विरक्तश्च अन्यस्तु तथाननुरक्तत्वाद्विरक्तत्वाच्च परिक्लिष्ट एवेत्याह—

एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात्परः।
दुर्वारस्मरबाणपन्नगविषव्याविद्धमुग्धो जनः
शेषः कामविडम्बितान्न विषयान् भोक्तुं न मोक्तुं क्षमः॥१७॥

एक इति ॥ प्रियतमायाः पार्वत्याः देहस्य शरीरस्य अर्धमर्धभागम्। "अर्धं नपुंसकम्" इति समासः। तद्धरतीति तथोक्तः। महाकामुकतया क्षणमात्राविश्लेषस्याप्यसहिष्णुत्वान्निजदेहवामार्धपरिक्लृप्तप्रियतम इत्यर्थः। देहार्धधारीति च पाठः। एक एव हरो रागिष्वनुरक्तेषु कामुकेष्वित्यर्थः। राजते अप्रतिनिधित्वेन प्रकाशते। तादृशकामुकान्तरस्यानुपलभ्यमानत्वादिति भावः। तथा नीरागेषु विरक्तेष्वपि विमुक्तस्त्यक्तो ललनासङ्गो योषिदासक्तिर्येन स तथोक्तो जनो वैराग्यपुरुषो यस्माद्धरात् परोऽन्यो नास्ति। तपश्चरणसमये मदनदहनादिना तादृग्वैराग्यप्रकटनात्तथाविधविरक्तो न कश्चिदस्तीत्यर्थः। किन्तु दुर्वाराः निवारयितुमशक्याः स्मरबाणा एव पन्नगाः सर्पास्तेषां विषेण गरलेन तत्सदृशेन व्यामोहेन च व्याविद्धो व्याक्षिप्तोऽत एव मुग्धो मूढो निश्चेष्टश्च शेषोऽवशिष्टो जनः कामेन मन्मथेन हेतुना विडम्बितानतुकृतान् स्वीकृतानिति यावत्। विषयान् स्त्रीसम्भोगादीन् भोक्तुमनुभवितुं वा मोक्तुं त्यक्तुं वा न क्षमस्तादृगनुरागविरागोत्कर्षाभावात्तथाविधभोगत्यागयोरसमर्थ इत्यर्थः। कर्तुमकर्तुमन्यथा कर्तुं समर्थः परमेश्वर एक एवानुरक्तेषु विरक्तेषु च परां काष्ठां प्राप्तस्तदन्यः सर्वोऽप्युभयभ्रष्ट एवेति भावः। स्मरबाणपन्नगेत्यत्र रूपकालंकारः॥ १७॥

रागिजनोंमें अपने वामांगमें दयिताको धारण करनेवाले एक महादेवजीही विराजमान हैं तथा विरक्तोंमेंभी जिन्होंने स्त्रीसंग छोड दिया है ऐसे महादेवजीसे दूसरा कोई जन नहीं हैं किन्तु इन महादेवजीसे इतर जन जो दुर्वार मदनबाणरूप सर्पके विषसे विद्ध होनेसे मूढ हुए हैं वे तो कामसे विडंबित विषयोंको न भोगनेको समर्थ हैं न छोडनेको समर्थ हैं॥ १७॥

अथ विषयदोषपरिज्ञानेऽप्यत्यागे कारणमाह–

अजानन् दाहात्म्यं पततु शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ १८ ॥

अजानन्निति ॥ शलभः पतङ्गो दह्यतेऽनेनेति दाहः। करणे घञ्। तस्य आत्मनः स्वभावस्य भावो दाहात्म्यं भस्मीकरणस्वाभाव्यमित्यर्थः । "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि ।" इति विश्वः । अजानन् अनवबुध्यन् तीव्रदहने जाज्वल्यमानाग्नौ पततु प्रविशतु । प्रविश्य भस्मीभवत्वित्यर्थः । संभावनायां लोट् । तथा स प्रसिद्धो मीनो मत्स्योऽपि अज्ञानादात्मविनाशकारणमेवादित्य विवेकात् बडिशयुतं मत्स्यवेधनसन्दानितमयोमयवक्रकण्टकाप्रस्यूतमित्यर्थः । पिशितं मांसमश्नातु भक्षयतु । आमिषलोभात्कण्टकगिलनेन गलनिरोधात्सोऽपि म्रियतामित्यर्थः । नात्रानयोरपराधः । नाज्ञानमपराध्यति । "पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।" इति च न्यायादिति भावः । "बडिशं मत्स्यवेधनम्, पिशितं तरसं मांसम्" इति चामरः । किंत्विहास्मिन् लोके विजानन्तोऽपि विनिपातहेतव इति । विवेकवन्तोऽप्येते वयं विपज्जालैरापत्परंपराभिर्जटिलान् ग्रथितान् उपद्रवहेतूनपीत्यर्थः । पश्चादित्वान्मत्वर्थीये अच्प्रत्ययः । कामान् विषयान्न मुञ्चामो न त्यजामः । विषयरूपपरिज्ञानेऽप्यमुञ्चतामस्माकमेवापराध इति भावः। "शे मुचादीनाम्" इति नुमागमः । विचार्यमाणे नास्माकमप्यपराधः प्रबलतरकारणसद्भावादित्याह । मोहस्याज्ञानस्य महिमा माहात्म्यं गहनो दुर्विज्ञेयः अघटनघटनापटुतराविद्याविलासमहिम्ना लोके जनः आविहितमपि करोति अतो नास्माकमपराध इति भावः ॥ १८ ॥

देखो पतंग दीपककी अग्निमें आय गिरता है पर यह नहीं जानता कि मैं नष्ट हूंगा, मछली जो कंटियाका मांस निगल जाती है वहभी नहीं जानती कि इससे मेरे प्राण जांयगे पर हम लोगोंको देखो कि हम जान बूझके दुःखदाई विषयोंकी अभिलाषा नहीं छोडते यह महामोहकी महिमा अति कठिन है ॥ १८ ॥

---

१ माहात्म्यं । २ भो दीपद० । इति च पाठांतरम् ।

अज्ञानमहिम्नैव सुखाभासेष्वप्यन्नपानादिविपर्येषु सुखबुद्धिं करोतीत्याह—

तृषा शुष्यत्यास्ये पिबति सलिलं शीतमधुरं
क्षुधार्तः शाल्यन्नं कवलयति मांसादिकलितम्।
प्रदीप्ते कामाग्नौ सुदृढतरमालिङ्गति वधूं
प्रतीकारं व्याधेः सुखमिति विपर्यस्यति जनः॥ १९॥

तृषेति॥ तृषा तृष्णया आस्ये वक्त्रे शुष्यति शोषं प्राप्नुवति सति शीतं च तन्मधुरं चेति विशेषणयोरपि मिथो विशेषणविशेष्यभावाविवक्षायां "विशेषणं विशेष्येण बहुलम्" इति समासः। शैत्यगुणयुक्तं सन्तापहरं चेत्यर्थः। "शीतलीक्रियते तापो येन तन्मधुरं स्मृतम्।" इति लक्षणात्। यद्वा मधुरं शर्करापानकवन्माधुर्यसंयुक्तं सलिलमुदकं पिबति। तथा क्षुधार्तो बुभुक्षापीडितः सन् मांसादिना मांसघृतपयोदध्यादिव्यञ्जनद्रव्येणेत्यर्थः। कलितं रुचिरं स्वादूकृतमित्यर्थः। (कलिःकामधेनुः) शाल्यन्नं कवलयति भुङ्क्ते। तथा कामाग्नौ मदनदहने प्रदीप्ते प्रज्वलित्ते सति मन्मथोद्रेके सतीत्यर्थः। सुदृढतरमतिगाढं वधूं स्त्रियमालिङ्गत्याश्लिष्यति। अतो व्याधेः क्षुत्तृष्णादिरूपामयस्य प्रतीकारं तदुपशान्तिकरान्नपानालिङ्गनरूपौषधसेवनरूपप्रतिक्रियामित्यर्थः। सुखं भोग इति जनो विपर्यस्यति विपर्यस्तबुद्धिं प्राप्नोति न तु तत्त्वम् जानातीत्यर्थः। अतस्मिंस्तद्ग्रहो विपर्यासः। अयं च अज्ञानदुर्विलास एवेति भावः॥ १९॥

जब मनुष्योंका कंठ प्यासते सूखने लगता तब शीतल मधुर जल पीता है, जब क्षुधासे पीडित होता है तो मांस आदि सामग्रीके साथ चावलोंके भोजन करता है, जब कामदेवकी अग्नि प्रचंड होती है तब सुन्दर स्त्रीको हृदयसे लगाता है, विचारो तो यह एक एक व्याधिकी औषधि है परन्तु मनुष्योंने इसे उलटा सुखही समझ लिया है॥ १९॥

एवं तावदज्ञो जनः संसारविषयासक्त्या बद्धो भवति। ज्ञानी तु सर्वसङ्गं परित्यज्य कृतकृत्यो भवतीति निगमयति—

तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः सम्पदः

१ स्वादु सुरभि। २ सन् शालीन्। ३ शाकादिवलितान्। ४ माश्लिष्यति। इति च पा०

कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति ॥ २० ॥

तुङ्गमिति ॥ वेश्म प्रासादादि तुङ्गमुन्नतम्, सुताः पुत्राः सतां साधूनां विदुषामाभिमता इष्टाः सम्प्राप्तविद्याविनयादिगुणा इत्यर्थः । "मतिबुद्धि०" इत्यादिना वर्तमानार्थे क्तः । अत एव "क्तस्य च वर्तमाने" इति षष्ठीविधानात् षष्ठी न समस्यते इति वक्तव्यम् । इति समासनिषेधः । सम्पदः धनधान्यादिद्रव्यसमृद्धयः । संख्यातिगाः असंख्येया अपरिमिता इत्यर्थः । दयिता प्रियतमा कल्याणी आनुकूल्यादिगुणसम्पन्नत्वाच्छोभना । तदुक्तम्– "अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसम्पन्नाम् । पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते ॥" वयश्च नवं नूतनं यौवनमित्यर्थः । "वयः पक्षिणि बाल्यादौ" इत्यमरः । इत्येवमज्ञानेन मोहेन मूढो विवेकशून्यो जनो विश्वं गृहापत्यवित्तदारादिप्रपञ्चमनश्वरं शाश्वतं मत्वा आलोच्य संसार एव कारागृहं बन्दीगृहं तत्र निविशते प्रविशति तदासक्तो भवतीत्यर्थः । न तु तस्यानर्थमूलत्वं जानातीति भावः । "नेर्विशः" इत्यात्मनेपदम् । अतिसङ्कटतया परमनिर्बन्धहेतुत्वात्संसारस्य कारागृहत्वरूपणम् । "कारा स्याद्बन्धनालये" इत्यमरः । धन्यस्तु ज्ञानी तुशब्दः पूर्वस्माद्वैलक्षण्यं द्योतयति । तदेवाह– तदखिलं वेश्माद्यशेषप्रपञ्चं क्षणभंगुरमशाश्वतं संदृश्य सम्यगालोक्य सम्पूर्वाद् दृशेः क्त्वो ल्यबादेशः । संन्यस्यति न तत्रासक्तो भवति किन्तु विरक्तो भवतीति भावः । अतो ज्ञानेन सर्वानर्थमूलमज्ञानं निरस्य कृतकृत्येन भवितव्यमिति तात्पर्यम् ॥ २० ॥

ऊंचा गृह, विद्वानोंके अभिमत सुत, अपरिमित सम्पत्ति, आनुकूल्यादिगुणसम्पन्न कल्याणी भार्या और वय नया इस प्रकार अज्ञानसे मूढ हुआ जन इस विश्वको शाश्वत समझके संसाररूप बन्दीशालामें पडता है और कोई धन्य पुरुष इस अखिलको नश्वर समझके इसमें आसक्त नहीं होता है ॥ २० ॥

अथ याच्ञादैन्यदूषणमारभते । अत्राभिप्रायः । विषयाणां याच्ञादैन्यप्रयोजकत्वाद्विषयपरित्यागविडम्बनानन्तर्येणैतत्प्रयोज्य याच्ञाजनितदैन्यमपि दूषणीयमेवेति अतस्तत्प्रसङ्गानन्तरमेतद्दूषयितुमारभते दीनेत्यादि श्लोकदशकेन—

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्निरन्नविधुरा दृश्या न चेद्गेहिनी।
याच्ञाभङ्गभयेन गद्गदगलत्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी पुमान् ॥ २१ ॥

दीना दीनमुखैरिति॥ दीना दरिद्रा अत एव दीनानि शोभाहीनानि मुखानि येषां तैः। कुतः क्रोशद्भिः रुदद्भिः तत्कुतः क्षुधितैः सञ्जातक्षुधैः बुभुक्षितैरित्यर्थः। क्षुधाशब्दोऽप्याबन्तस्तस्मात् "तदस्य सञ्जातं तारकादिभ्य इतच्" इतीतच्प्रत्ययः। तारकादिराकृतिगणः। क्षुधिति धकारान्तपक्षे तु क्षुधं प्राप्तैः क्षुधितैः क्षुधातुरैः। कर्तरि क्तः। "वसतिक्षुधोरिट्" इतीडागमः। शिशुकैरत्यन्तबालकैः। अल्पार्थे कन्प्रत्ययः। सदा सर्वदैवाकृष्टमन्नपानादियाच्ञापूर्वकमाक्षिप्तं जीर्णाम्बरं विशीर्णं वस्त्रं यस्याः सा। तथा निरन्ना अन्नपानरहिता अत एव विधुरा विह्वला। निरन्ना च सा विधुरा चेति विशेषणसमासः। अन्नाभावात्कष्टजीवनेत्यर्थः। "विधुरः प्रत्यवेते स्यात्कष्टविश्लिष्टयोरपि।" इति विश्वः। गेहिनी गृहिणी दृश्या दृष्टिगोचरा न चेन्न स्याद्यदि तर्हि मनस्वी सुमेधाः धैर्यशाली। प्रशंसायामिनिः। कः पुमान् याच्ञाभङ्गाद्भयं तेन गद्गदो हीनस्वरः। अनुकरणशब्दोऽयम्। यो गलः कण्ठस्तत्र त्रुट्यन्ति शकलीभवन्ति अत एव विलीनान्यनुच्चारितप्रायाण्यक्षराणि वर्णा यस्मिन् कर्मणि तद्यथा तथा। स्वस्य दग्धः लुप्तो यो जठरः उदरं तस्यार्थे तत्पूरणार्थमित्यर्थः। "अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ।" इत्यमरः। दग्धशब्दोऽत्र निर्वेदाभिद्योतकः। यथोक्तं सुरेश्वरवार्तिके। "अस्य दग्धोदरस्यार्थे किं न कुर्वन्त्यसांप्रतम्।" इति। देहीति वदन् ब्रूयात् न कोपीत्यर्थः। तस्यादृश्यत्वादीदृगवस्थापन्नो भवत्यतोऽनर्थमूलत्वात्तत्परित्यागोऽवश्यं कर्तव्य इति भावः॥ २१॥

दीनोंसेभी दीन है मुख जिनका और अन्नके लिये रोते हुए ऐसे बालक जिस स्त्रीके फटे वस्त्रोंको खींचते हों और जो निरन्न और

---

१ नैरन्यं वि०। २ दृश्येत चे०। ३ स्खलत्। ४ जनः। इति च पाठान्तरम्।

दुःखित है ऐसी घरवाली ( पत्नी ) दृष्टिगोचर न होय तो ऐसा कौन धीर मनुष्य है जो केवल अपने उदर भरनेके लिये याचना(मांगने)के भङ्ग ( नाहीं ) के डरसे गद्गद वाक्योंसे टूटे फूटे अक्षरोंवाली 'देहि' इस वाणीको कहे अर्थात् स्त्रीही सब कहाती है और पूरा बंधन है॥२१॥

इदानीं दैन्यानर्थमूलं जठरं निन्दति–

अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीवितानकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनाम्॥२२॥

अभिमतेति ॥ अभिमतः कीर्तिप्रतिष्ठावहत्वादिष्टो यो महामानग्रन्थिर्गरिष्ठाभिमानग्रन्थिस्तस्य प्रभेदे विश्लेषणे पटीयसी समर्थतरा । पटुशब्दादीयसुनि "उगितश्च" इति ङीप् । गुरुतरा अतिशयेन वर्तमाना ये गुणग्रामा गांभीर्यधैर्यादिगुणगणाः त एवाम्भोजानि तेषां स्फुटं यथा तथा उज्ज्वलचन्द्रिका पूर्णिमाकौमुदी तत्संकोचहेतुभूतेत्यर्थः । विपुलं विस्तृतं यथा तथा विलसत् प्रकाशमानं यल्लज्जावल्लीवितानं व्रीडालतादिततिस्तस्य कुठारिका परशुः । तदुच्छेदनसाधनभूतेत्यर्थः । दुष्पूरा पूरयितुमशक्या प्रत्यहमन्नपानादिपूरितापि पर्याप्त्यभावादिति भावः।"ईषद्दुः०"इत्यादिना खल्प्रत्ययः । इयं जठरमुदरमेव पिठरी कुण्डी । " पिठरः स्थाल्युखा कुण्डम् " इत्यमरः । गौरादित्वात् ङीप् । तथा च कृष्णामृतस्तवे–" जठरपिठरपूर्तये नर्तितासि " इति । विडम्बनां याच्ञानुकरणं करोतीति याच्ञादैन्यमस्माभिरभिनाटयतीत्यर्थः । एवद्व्यतिरेकेण दैन्यकारिणी न काप्यस्तीति भावः । वल्लीकठोरकुठारिकेति पाठे निशिततरपरशुरित्यर्थः । रूपकालंकारः ॥ २२ ॥

अभिमत महाभिमानके नाश करनेमें समर्थ, श्रेष्ठ, गांभीर्यादि गुणगणरूप, कमलोंके संकुचित करनेमें उज्ज्वल पूर्णिमाकी चांदनी विपुल तथा प्रकाशमान, लज्जारूप लतासमूहके नाश करनेमें कुठारिका ऐसी यह दुष्पूर जठरपिठरीही सब विडंबना करती है ॥ २२ ॥

अथ मानिनस्तावद्बन्धुयाच्ञाया वरमन्यत्र भिक्षाजनतात्पर्येण प्राणाधारणमित्याह—

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालिं कपालिं
ह्यादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठे।
द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणैः सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥२३

पुण्यग्राम इति ॥ न्यायगर्भं मीमांसाशास्त्रोक्तप्रकारगर्भितं यथा तथा। यद्वा नीयन्ते ज्ञाप्यन्ते बुभुत्सितार्था एभिरिति न्याया वेदशास्त्रपुराणादयस्ते गर्भे कुक्षौ येषां ते न्यायगर्भाः अधीताखिलविद्या इत्यर्थः। "कुक्षिभ्रूणार्भका गर्भाः" इत्यमरः। तथाभूता द्विजा ब्राह्मणास्तैर्हुता आज्यादिहविर्भिः सुतर्पिता ये हुतभुजोऽग्नयस्तेषां धूमेन धूम्राणि कृष्णलोहितवर्णानि उपकण्ठानि अन्तिमप्रदेशा यस्य तस्मिन्। "धूम्रधूमलौ कृष्णलोहिते। उपकण्ठान्तिकाभ्यर्णाभ्यग्रं चाप्यभितोऽव्ययम्।" इति चामरः। अत एव पुण्ये पवित्रे महति विपुले च। विशेषणद्वयेन निःसंकोचसञ्चारार्हत्वं सूच्यते। ग्रामे अग्रहारे वने अरण्ये वा तत्रापि वानप्रस्थादीनां विद्यमानत्वादिति भावः। सितपटेन श्वेतवस्त्रेण छन्ना परेषां दृष्टिगोचरत्वाभावार्थमाच्छादिता तथा विशिष्टाचारात् पालिरश्रिर्यस्यास्ताम्। "पालिः स्त्र्यश्र्यङ्कपंक्तिषु" इति वैजयन्ती। कपालिं भिक्षाहरणोचितशरावमादाय गृहीत्वा क्षुधार्तः क्षुत्पीडितो मानी अभिमानवान् पुरुष इति शेषः। उदरमेव दरी गिरिगह्वरं तस्याः पूरणाय पूर्त्यर्थमित्यर्थः। "तादर्थ्ये चतुर्थी"। अथवा उदरं पूरयितुमित्यर्थः। "तुमर्थाच्च भाववचनात्" इति चतुर्थी। द्वारंद्वारं प्रतिद्वारं गृहमेधिनामिति शेषः। "नित्यवीप्सयोः" इति वीप्सायां द्विरुक्तिः। प्रविष्टः भिक्षार्थमित्यर्थः। प्राणैः सनाथः सहितश्चेति भिक्षाशनेन प्राणधारणतत्परः स्याच्चेदित्यर्थः। वरं मनाक्प्रियम्। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रियम्।" इत्यमरः। दिने दिने अनुदिनं प्रत्यहमित्यर्थः। यथार्थेऽव्ययीभावः। तुल्यकुल्येषु समानकुलोद्भवेषु तन्मध्य इत्यर्थः। दीनः पुनः दैन्यवांश्चेन्न वरम्। बन्धुमध्ये याच्ञादैन्यनीचजीवनाद्वरं भिक्षान्नेन प्राणधारणम्। "न बन्धुमध्ये

१ पुण्ये। २ सुतहुतभुग्धूमधू। ३ प्रवृत्तो पर०। ४ प्राणी स धन्यो०। इति च पाठान्तरम्।

धनहीनजीवनम् " इति वचनादिति भावः । अत्र यद्यपि " त्यजन्त्यसून् शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितं व्रतम् । " इति वचनान्मानिनः सर्वथा अयाचितत्वमेव मुख्यव्रतम् तथापि यदि क्षुधातुरत्वेन याच्ञाप्रवृत्तिः स्यात्तदा कुत्रचिदपरिज्ञातदेशे श्रोत्रियगृहेषु कपालभिक्षान्नभक्षणेनोदरपूरणं कर्तव्यं न तु बन्धुजनयाच्ञा प्राणसङ्कटेऽपि । तस्याः परमनैच्यावहत्वादिति गूढाभिसन्धिः ॥ २२ ॥

पवित्र ग्राम अथवा पवित्र बडे वनमें उज्ज्वलवस्त्रसे ढका हुआ ठिकरा लेकर जिनकी चौखट न्यायपूर्वक ब्राह्मणोंकी होमी हुई अग्निके धूमसे मलिन हो उनके द्वारपर क्षुधासे पीडित पेटरूपी कन्दरा भरनेको नित्यप्रति भ्रमण करता हुआ मानी पुरुष अच्छा है पर समान कुलवालोंमें दीन होना अच्छा नहीं ॥ २३ ॥

अथ विशिष्टगत्यन्तराभाववितर्कद्वारा दूषयति—

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि ।
स्थानानि किं हिमवतः प्रलयं गतानि
यत्सावमानपरपिण्डरता मनुष्याः ॥ २४ ॥

गङ्गेति ॥ गङ्गातरङ्गाणां भागीरथीकल्लोलानां ये कणा बिन्दवस्तेषां शीकरैः प्रालेयप्रायलेशैः। अथवा कणाः स्थूलबिन्दवः शीकराः सूक्ष्मास्तैः शीतलानि शिशिराणि। घनशीकर इति वा पाठः।तथा सान्द्रा इत्यर्थः। विद्याधरैर्देवयोनिविशेषैरध्युषितानि अधिष्ठितानि । "गत्यर्थाकर्मक०"इत्यादिना वसेः कर्मणि क्तः । "वचिस्वपि०" इत्यादिना संप्रसारणम् । अत एव चारूणि मनोहराणि शिलातलानि येषु तानि तथोक्तानि । विशेषणद्वयेनैतेन परमपवित्रत्वं च सूच्यते । हिमवतो हिमाद्रेः सम्बन्धीनि स्थानानि प्रान्तप्रदेशाः प्रलयं गतानि किं नष्टानि किम् । किं शब्दोऽत्र वितर्के।"कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते । " इति शाश्वतः। ननु कुत एवं विद्यमानेष्ववस्थानेषु विनाशो वितर्क्यत इत्याशंक्य तत्र कारणमाह।यद्यस्मात् कारणात् मनुष्या जनाः सावमानेषु याच्ञया तिरस्कार-

१ घन० इति पाठान्तरम्।

त्वरणपूर्वकं दत्तेषु परपिण्डेषु परान्नेषु रता आसक्तास्तादृग्परपिण्डाशनेन प्राणत्राणतत्परा जाता इत्यर्थः। यदि स्थानानि न नश्येरन् तर्हि जना ईदृक्कष्टयाच्ञातत्परा न भवेरन् तेषां नष्टत्वादेवेदृग्दुरवस्थापन्ना इति कृत्वा एवं वितर्क्यत इति वाक्यार्थः। यद्वा गत्यन्तराभावं प्रश्नद्वारा दूषयति—गङ्गेति। किंशब्दोऽत्र प्रश्ने। नन्वेवं कुतः पृच्छयत इत्यत आह। यस्मात्कारणात् हे मनुष्याः सावमानपरपिण्डरता यूयं जाता इति शेषः। अतः प्रश्नस्यावकाश इति भावः। अन्यत्समानम्। एतेन दुर्भगयाच्ञापिशाचिकामूर्धन्यशनिं पातयित्वा गिरिपरिसरेषु सुखेन वर्तितव्यमिति सूचितम्॥ २४॥

गंगाके तरङ्गोंके जलकी बिन्दुओंके छींटोंसे जो शीतल हो रही हैं, जहां विद्याधर ठौर २ सुंदर पत्थरोंकी चट्टानोंपर बैठे हैं ऐसे हिमाचलके स्थानोंका क्या प्रलय हो गया है जो अपमान सहके भी परायें दिये ग्रासमें मनुष्य रत रहते हैं॥ २४॥

इदानीं पुनर्जीवनोपायान्तरभावं वितर्कद्वारा दूषयति—

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता निर्झरा वा गिरिभ्यः
प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः।
वीक्ष्यन्ते यन्मुखानि प्रसभमपगतप्रश्रयाणां खलानां
दुःखोप्तस्वल्पवित्तस्मयपवनवशानर्तितभ्रूलतानि॥ २५॥

किमिति॥ कन्दरेभ्यो गुहाभ्यः सकाशात् कन्दा कन्दमूलादिपदार्थाः। क्षुन्निवारणक्षमा इति भावः। प्रलयं विनाशं विराममिति यावत्। उपगताः प्राप्ताः किम्। "जुगुप्साविराम०"इत्यादिना पञ्चमी। एवमुत्तरत्रापि किंशब्दो वितर्के। तथा गिरिभ्यः सकाशान्निर्झरा वा प्रवाहाश्च वा उपशमकरा इति भावः। प्रलयमुपगताः किमिति सम्बन्धः। "प्रवाहो निर्झरो झरः" इत्यमरः। "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये।" इति चामरः। तथा तरुभ्यो वृक्षेभ्यः सकाशात् सरसानि माधुर्यरसयुक्तानि फलानि बिभ्रतीति तथोक्ताः। वल्कलिन्यो वल्कलवत्यः एतेन विशेषणद्वयेन सुभोज्यवस्तुसमृद्धत्वाच्छादनयोग्यत्वे सूचिते इत्यवगन्तव्यम्। शाखाश्च प्रध्वस्ता वा विनष्टाः

१ वल्कलेभ्यश्च। २ दुःखोपात्तात्प०। ३ वशपवनान० इति च पाठान्तरम्।

-किम्। अव्ययानामनेकार्थत्वात्। ननु विद्यमानकन्दमूलादिष्वविद्यमानकन्द-मूलाभ्यो विद्यमानत्वं कुतो वितर्क्यंत इत्यत आह। यद्यस्मात्प्रसभमत्यन्तमप-गतनश्रयाणां विनयशून्यानां खलानां दुरीशानां दुःखाप्तमतिक्लेशेन प्राप्तं तदपि स्वल्पं यद्वित्तं धनं तेन यः स्मयो गर्वः स एव पवनः स्मयः पवन इव तद्वशा-न्नार्तिताश्चालिता भ्रुवो लता इव च येषां तानि सविकाराणीत्यर्थः। स्मय-पवनेत्यत्र भ्रूलता इत्यत्र च उपमारूपकयोः साधकबाधकप्रमाणाभावात्संदेह-संकरः। मुखानि वीक्ष्यन्ते दृश्यन्ते याचकजनैरिति शेषः। कन्दमूलादीनां ध्वनष्टत्वादेव जनैर्दुरीश्वरपरिचर्यातत्परैर्भूयते जीवनोपायार्थमतस्तदभाववितर्क-स्यावकाश इति भावः। यद्वा जीवनोपायान्तराभावप्रश्नद्वारा निन्दति—किं कन्दा इति। किंवाशब्दौ प्रश्ने अत एव प्रश्नः क्रियते इत्याह। यस्मात्कारणाद्दुर्वि-नीतदुरीश्वरमुखान्यवलोक्यन्ते युष्माभिस्तस्मादभावप्रश्नो युज्यत इति भावः। शेषं समानम्। अत्रायमभिसन्धिः। परमनैच्यावहं शास्त्रनिषिद्धं चेद्दुर्विनीत-सेवनोपजीवनं परिहर्तव्यम् ॥ २५ ॥

पहाडोंकी कन्दराओंसे कन्द मूल और पर्वतोंसे पानीके झरने क्या नष्ट हो गये, वल्कलवाले वृक्षोंमेंसे रससहित फलवाली शाखा क्या ध्वस्त हो गई, जो अनम्र खल जिन्होंने बडे कष्टसे कुछ धन उत्पन्न किया उसके गर्वरूपी वायुसे भौंहरूपी लता जिनकी नाचती है उनका मुख देखते हैं अर्थात् उनके मुखके दर्शनको त्यागकर सत्पुरुष पहा-डोंमें क्यों न वसते हैं ? ॥ २५ ॥

अथ खलानां मुखानि दृश्यन्त इत्यनेन सूचितनिन्दां प्रकटयितुं चिरकाल-दुरीशसेवापरिखिन्नस्य कस्य चिन्निर्वेदवचनमभिनीयाह—

पुण्यैर्मूलफलैस्तथा प्रणयिनीं वृत्तिं कुरुष्वाधुना
भूशय्यां नवपल्लवैरकृपणैरुत्तिष्ठ यावो वनम्।
क्षुद्राणामविवेकमूढमनसां यत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते ॥ २६ ॥

१ प्रिय प्रणयिनीं प्रीतिम्। २ वल्कलैरकरुणैरु०। ३ यामः। ४ चित्तव्याध्यविवेकवि० इति च पाठान्तरम्।

पुण्यैरिति ॥ अधुनेदानीं पुण्यैः पवित्रैः मूलैः कन्दमूलैः फलैः कदलीरसालपनसादिफलैश्च । अपवित्ररक्तमूलककालिङ्गफलादिभक्षणानिषेधस्मरणात्पुण्यैरित्युक्तम् । तथा अनिर्वाच्यतया प्रिय प्रणयिनीं इति पाठे हे प्रियसखे इत्यर्थः । प्रणयिनीं परमसुखावहतया प्रियतमां विशिष्टकन्दमूलाद्यशनस्यानशनप्रायत्वात्तस्यापि "तपो नानशनात्परम्" इतितपःपर्यवसानत्वात्तस्य च "तपसा कल्मषं हन्ति" इति सकलकर्मनिवर्तनद्वारा परमसुखावहत्वादिति भावः । वृत्तिं जीविकाम् । "वृत्तिर्वर्तनजीवने" इत्यमरः । कुरुष्व विधेहि । तथा अक्रपर्णैरम्लानैर्नवपल्लवैर्भुवि शय्यां च कुरुष्व । अतः उत्तिष्ठ उत्थितो भव विलम्बं मा कुर्वित्यर्थः । वनं प्रति यावो गच्छावो यास्याव इत्यर्थः । किमनेन नीचसेवनेनेति शेषः । वर्तमानसामीप्ये वर्तमानप्रत्ययः । यामो वनमिति न साधीयान् पाठः । गमने अभ्युच्चयं फलमाह । यत्र वने क्षुद्राणां दीनानां कुतः अविवेकेनाज्ञानेन मूढानि कर्तव्याकर्तव्यविचारशून्यानि मनांसि येषां तेषाम् । सर्वदा वित्तमेव व्याधिः सन्निपातादिरोगस्तेन यो विकारो विपरीतभावस्तेन विह्वला विकला अविस्पष्टा इति यावत् । तथाभूता गिरो येषां तेषामीश्वराणां राज्ञां नामापि नामधेयमपि न श्रूयते नाकर्ण्यते किमुत दर्शनसेवनादिकथेति भावः । तस्मादैहिकामुष्मिकफललेशसम्बन्धशून्यं नीचसेवनं परित्यज्य सकलश्रेयःसम्पादकं वनं व्रज । वनवास एवावश्यं कर्तव्य इति तात्पर्यम् ॥ २६ ॥

पवित्र फलमूलसे अब अपना पोषण कर बनी बनाई भूमिशय्या और बने बनाये नवीन वल्कलके वस्त्रोंसे निर्वाह कर, जिस वनमें अविवेकसे जिनका मूढ मन है और जो क्षुद्र हैं और धनरूपी व्याधिजनित अविचारसे जिनकी बुद्धि विह्वल है उनका नामभी सुनाई नहीं देता है, चल अब हम उस वनको जावेंगे ॥ २६ ॥

अथ च पुनः सत्यामपि निरवधिकनिरातङ्कजीवनसाधनसामग्र्यां कृपणाः स्वकार्पण्यमत्यजन्तः पराच्चादैन्येन क्लिश्यन्ति किं कर्तव्यमित्याह—

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः ॥२७॥

फलमिति ॥ वनेवने प्रतिवनं न त्वेकत्रैव क्लृप्तमित्यर्थः । " अव्ययं विभक्ति० " इत्यादिना यथार्थेऽव्ययीभावः। न विद्यते खेदो यस्मिन् कर्मणि तद्यथा तथा अखेदमक्लेशं स्वेच्छया स्वच्छन्देन लभ्यं प्राप्यं न तु परप्रेप्यमिति भावः। क्षित्यां रोहन्तीति क्षितिरुहाः । क्विप् । तेषां कदलीरसालपनसादितरूणां फलमस्तीति शेषः । उदरपूरणपर्याप्तमिति भावः । तथा स्थानेस्थाने प्रतिस्थानम्। वीप्सायां द्विरुक्तिः शिशिरमधुरम् । व्याख्यातमेतत् । पिबति सलिलं शीतमधुरमित्यत्र पुण्यसरितां गङ्गागोदावर्यादिपुण्यनदीनां पयस्तीर्थमस्तीति शेषः। स्नानपानाभ्यां बाह्याभ्यन्तरपङ्कप्रक्षालनद्वारा तृष्णोपशान्तिकरमिति भावः। एतेनोभयेषामपि शास्त्रसिद्धं परोपकारत्वं सूचितम् । तदुक्तम् " परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । " इति । तथा मृदुः अकठिनः कोमल इति यावत् । स्पर्शो यस्याः सा । हंसतूलिकातल्पकल्पेत्यर्थः । कुतः सुललितान्यतिकोमलानि यानि लतापल्लवानि तन्मयी तत्प्रचुरा तैर्निर्मितेत्यर्थः । अथवा तन्मयी तद्विकारा । प्राचुर्ये विकारार्थे मयट् इति ङीप् । शय्या चास्तीति शेषः । सुखस्वापोचितेति भावः । तदपि तथापि धनिनां धनाढ्यानां द्वारि प्रतीहारप्रदेशे । " स्त्री द्वार्द्वारं प्रतीहारः " इत्यमरः। कृपणाः धनलिप्सापरतन्त्राः सन्तापं तदनुवर्तनाद्यायासपरितापं सहन्ते मृष्यन्ति। श्रेयोऽर्थिनां किं तत्रास्माभिः कर्तव्यमिति भावः । अतः फललाभसम्बन्धशून्यां प्रत्युत बलवदनिष्टानुबन्धिनीं दुरन्तसन्तापकारिणीं परमकार्पण्यकर्णेजपामिहामुत्र च कीर्तिप्रतिष्ठाभञ्जनीं याच्ञादैन्यपरमनीचत्वादूषणीं पापिष्ठामिमां दुरीश्वरद्वारबहिर्वितर्दिकां दुराकारडाकिनीं विवेकोच्चाटनमन्त्रेणोत्सार्यानेकश्रेयःसम्पादिकां वनवासजीविकाश्रियमेव समाश्रयेद्विद्वानिति तात्पर्यम् । तदुक्तं श्रीभागवते । " चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नो वाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् । शुद्धा गुहाः किमु न सन्ति महानुभावा यस्माद्भजन्ति यतयो धनदुर्मदान्धान् ॥ " इति ॥ २७ ॥

वन वनमें विना क्लेश ही स्वच्छंदतासे वृक्षोंके फल लभ्य हैं, स्थान स्थानमें पवित्र नदियोंका शीतल मधुर जल है, तथा जगह जगहमें अतिकोमल लताओंके पल्लवोंकी मृदुस्पर्शवाली शय्या है तौभी कृपण जन धनियोंके द्वारमें सन्तापको सहन करतेही हैं ॥ २७ ॥

इदानीं दुरीश्वरसेवनयाच्ञादैन्यतत्परविपयाक्षिप्तचित्तं निन्दावशेन स्वस्य सिद्धवद्भाविश्रेयोदशां सूचयन्नाह—

ये वर्तन्ते धनपतिपुरः प्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्याप्तबुद्धेः ।
तेषामन्तः स्फुरितहसितं वासराणि स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ २८ ॥

य इति ॥ धनपतेर्धनाढ्यस्य पुरोऽग्रे प्रार्थनादुःखं याच्ञादैन्यं भजन्तीति तथोक्ताः सन्तः । " भजो ण्विः " । ये पुरुषा वर्तन्ते तथा ये च पुरुषाः विषयाक्षेपे भोगसंग्रहे पर्याप्ता: तावन्मात्र एव पर्यवसिता न तु तत्त्वविचार इत्यर्थः । तादृशी या बुद्धिस्तस्याः । पर्यस्तेति पाठे विषयाक्षेपेण भोगासक्त्या पर्यस्ता विक्षिप्ता या बुद्धिस्तस्याः हेतोरल्पत्वं नीचत्वं दधाति तेषां पुरुषाणां वासराणि दिवसान् तदनुभूतदुर्दिनानीत्यर्थः । " वा तु क्लीबे दिवसवासरौ " इत्यमरः । अभिमतदेवतायां चित्तस्थिरीकरणं ध्यानम्, तस्य विच्छेदे अवसाने ब्रह्मध्यानव्युत्थानसमय इत्यर्थः । शिखरिकुहरे गिरिगह्वरे यो ग्रावः पाषाणः स एव शय्या तस्यां निषण्णः विश्रमार्थं शयितः सन्नित्यर्थः । अन्तरन्तःकरण एव स्फुरितं समुत्पन्नं हसितं हासो यस्मिन् कर्मणि तद्यथा तथा । तदानीं तेषामपहास्यत्वात्तदनुभावत्वेनोत्पन्नहासगर्भितमित्यर्थः । स्मरेयम् । " सदृशादृष्टिचिन्ताद्याः स्मृतिबीजस्य बोधकाः । " इति वचनात्कुतश्चिच्चिन्तावशाद्दृष्टिवशाद्वा समुद्बुद्धसंस्कारस्तदीयदुर्दिनानि स्मृतिविषयाणि कुर्यामित्यर्थः । वासराणां स्मरेयमिति पाठः । तथा " अधीगर्थदयेशां कर्मणि " इति कर्मणि षष्ठी । अधीगर्थानां च शेषाधिकारात् अशेषत्वविवक्षायां तु द्वितीयैव स्मर्यते । सम्भावनायामुत्तमपुरुषैकवचनम् । यथाहं याच्ञादुःखाभिसन्तप्तविषयाक्षिप्तचित्तजनदुर्दशादर्शनात्सञ्जातनिर्वेदः केनचिद्भाग्योदयेन परमेश्वरानुगृहीतस्तद्ध्यानव्युत्थाने तदीयदुर्दिनस्मरणतत्परो भवेयं तथा विवेकिभिः श्रेयोर्थिभिर्भवितव्यं न तु तद्वद्दुर्दशाभाग्भिरिति निगूढोपदेशस्तात्पर्यार्थविषयीकृत इत्यवधेयम् ॥ २८ ॥

जो दिन धनवानोंके निकट प्रार्थनाका दुःख सहनेवालोंके जाते हैं और जो विषयोंके नष्ट होनेसे विपरीत बुद्धिवालोंको छोटे प्रतीत होते

---

१ वर्धन्ते । २ पर्यस्त । ३ वासराणां इति च पाठान्तरम् ।

हैं उन दिनोंको हम अन्तःकरणमें हँसकर ध्यानसे विश्रामको पाकर पर्वतकी कन्दरामें पत्थरकी चट्टानरूपी शय्यापर बैठे हुए स्मरण करेंगे अर्थात् विरक्त होंगे ॥ २८ ॥

अथ तृष्णाया यावताप्युपसंहाराभावात्किं याच्ञादैन्येनेत्याह—

ये सन्तोषनिरन्तरप्रमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलुब्धसङ्कुलधियस्तेषां न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ २९ ॥

य इति ॥ ये पुमांसः दैवाल्लब्धेन वस्तुना जनितमनोविलासः सन्तोषत्वेन निरन्तरं सततं प्रमुदिताः परितुष्टास्तृप्ता इति यावत् । तेषां मुदः आनन्दा न भिन्नाः किन्तु प्रवृद्धा एवेत्यर्थः । तथान्ये इतरे ये पुमांसः धने लुब्धा गार्ध्यवती अत एव संकुला धीर्येषां ते तथोक्तास्तेषां तृष्णा वस्तुस्पृहा न हता न विरतेत्यर्थः । धनलोभस्येयत्ताभावादिति भावः । इत्थमेवं व्यवस्थिते सतीति शेषः । स प्रसिद्धः सम्पदां रत्नादिसमृद्धीनां तादृगित्थमिति वक्तुमशक्यं पदं स्थानमनिर्वाच्यधनसम्पदास्पदमित्यर्थः । तथा स्वात्मन्येव स्वस्मिन्नेव समाप्तः पर्यवसितः न तु परोपकारपर्याप्त इत्यर्थः । तादृशो हेममहिमा काञ्चनसम्पत्तिर्यस्य तथोक्तो मेरुर्विधिना ब्रह्मणा कस्य कृते कस्य पुंसः प्रयोजनार्थं कृतो निर्मितः नित्यसन्तोषसम्पन्नानामनपेक्षितत्वादर्थलुब्धानामपर्याप्तत्वाच्चानुपयोगादिति भावः । अतो निरर्थकत्वात् मे मह्यं न रोचते रुचिगोचरो न भवति । न सम्मत इत्यर्थः । " रुच्यर्थानां प्रीयमाणः " इति चतुर्थी । तस्मात् सुमेरुतुल्यधनलाभेऽपि तृष्णाधनपिशाच्याः परितोपाभावात्तत्प्रयुक्तयाच्ञादैन्यविश्रान्तिं तत्त्वविचारेण निरस्य सन्तुष्टान्तःकरणैर्भवितव्यमायुष्मद्भिरिति तात्पर्यम् ॥ २९ ॥

जो निरंतर तृप्त हैं उनका आनन्द कभी नष्ट नहीं होता और जो सदा धनके लोभसे व्याकुल बुद्धिवाले हैं उनकी तृष्णा कभी नष्ट नहीं होती ऐसी स्थिति होनेपर ब्रह्माने सम्पदाका स्थान मेरुपर्वत किसके लिये बनाया है; न इससे तृप्त मनुष्यका आनंद बढता है और न

धनलुब्ध मनुष्यकी तृष्णा नष्ट होती, इससे अपनेहीमें लीन रहनेवाली कांचनसम्पत्तिसे युक्त यह मेरुपर्वत मुझे सम्मत नहीं है ॥ २९ ॥

तर्हि कथं जीवनमित्याशंक्य तदुपायं सपरिकरं निवेदयन्निगमयति—

भिक्षाहारमदैन्यमप्रतिसुखं भीतिच्छिदं सर्वतो
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।
सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ ३० ॥

भिक्षेति ॥ योगीश्वराः परमार्थतत्त्वज्ञा महायोगिनः भिक्षाहारं भैक्ष्याशनं कर्म न विद्यते दैन्यं याच्ञाकार्पण्यं यस्मिन् तत्तथोक्तं देहीत्युच्चारणानन्तरमेव सद्गृहस्थैर्बहुमानपूर्वकं दीयमानत्वादिति भावः । यद्वा व्यावहारिकदैन्यसम्भवेऽपि पारमार्थिकदैन्याभावादिति भावः । न विद्यते प्रतिसुखं यस्य तत्तथोक्तं स्वयमेव निरतिशयसुखं न तु स्वस्य प्रतिभटभूतं सुखान्तरमस्तीत्यर्थः । सर्वतः सर्वत्रापि भीतिच्छिदं भयविनाशकं भिक्षाशनतत्परस्याकुतोभयत्वादिति भावः । दुष्टानां दुःस्वभावानां मात्सर्यमदाभिमानानामसहिष्णुत्वदर्पाहङ्काराणां मथनं निरासकम् । दुःखौघविध्वंसनं सांसारिकाशेषबाधानिवर्तकम् । यद्वा दुःखौघस्य एकविंशतिमहादुःखसमुदायस्य विध्वंसनं विच्छेदकमेकविंशतिमहादुःखध्वंसरूपमोक्षनिदानमित्यर्थः । " आत्यन्तिकदुःखध्वंसो मोक्षः " इति वैशेषिकास्तार्किकाश्च । अत्र यत्किंचिद्वक्तव्यमस्ति विस्तरभयान्नोच्यते । सर्वत्र सर्वेष्वपि देशेष्वित्यर्थः । तत्राप्यन्वहं प्रतिदिनं तत्रापि चाप्रयत्नं यत्नं विनैव सुलभं सुखलभ्यमित्यर्थः । साधूनामनहंकारिणां प्रियमिष्टं पावनं पवित्रं शम्भोः शिवस्य सत्रं तृप्तिसाधनमित्यर्थः । " रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते " इत्यनेनैवोक्तत्वात् । यद्वा शम्भोः सत्रं शम्भुभक्तिनिरतान्नसत्रमित्यर्थः । खण्डमण्डलाधिपतिसत्रं तु नश्वरमिदं तु सकलभुवनाधीश्वरप्रवर्तितत्वाच्छाश्वतमिति भावः । अत एवावार्यं न केनापि निवारयितुं शक्यमक्षयं निधिमविनाशि निदानं च नित्योपयोगेऽप्यक्षयभावादिति भावः । शंसन्ति कथयन्ति अनुभवसिद्धत्वादित्थं वर्णयन्तीत्यर्थः । अतोऽर्थपरंपराजनितर्हैन्यं याच्ञादैन्यं विहायोक्तरीत्या समस्तसद्गुणाविचित्रं शम्भुसत्रं प्रामाणिकोक्तं समाश्रयणीयमिति भावः ॥ ३० ॥

अदैन्यपूर्वक भिक्षाहारही अतिशय सुखकारक, सर्वत्र भयरहित, दुष्टोंके मात्सर्य और मदको नष्ट करनेवाला, दुःखसमूहका निवर्तक, सर्वत्र प्रातिदिन विना यत्न ही प्राप्त होनेवाला, साधुओंका प्रिय, पवित्र और शिवतृप्तिसाधन तथा अवार्य और अक्षय है, योगीश्वर ऐसी भिक्षाहारकी ही प्रशंसा करते हैं ॥ ३० ॥

अथ. भोगानामस्थैर्याकथने याच्ञादैन्यमदूषितप्रायमेवेति मनसि निधाय तद्रूपणानन्तरं भोगास्थैर्यमाह—

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
मांने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम् ॥ ३१ ॥

भोग इति ॥ भोगे स्रक्चन्दनवनितासम्भोगसुखानुभवे । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः ।" इत्यमरः । रोगाद्वातपित्ताद्यामयाद्भयमस्तीति शेषः । तस्य तदन्तरायत्वादिति भावः । कुले सद्वंशे च्युतेराचारभ्रंशाद्भयं तस्यास्तद्प्रतिष्ठावहत्वादिति भावः । अथवा च्युतेः सन्तानविच्छेदाद्भयं तस्याः सम्प्रदायोपहृतिहेतुत्वादिति भावः । वित्ते द्रव्यसमृद्धौ नृपालाद्राज्ञो भयं तस्य तदपहर्तृत्वादिति भावः । माने अभिमाने दैन्यात्कार्पण्याद्भयं तस्य तद्भङ्गहेतुत्वादिति भावः । बले सामर्थ्ये रिपोः शत्रोर्भयं तस्य तद्दमशीलत्वादितिभावः । रूपे सौन्दर्ये जराया वार्धकावस्थाया भयं तस्यास्तद्विलोपित्वादिति भावः । शास्त्रे वेदान्तादिशास्त्रकलापे वादिभ्यः शुष्कतर्ककलहकंटकेभ्यो भयं तेषां तदपरोक्षकत्वादिति भावः । गुणे विद्याविनयादिगुणगणे खलाद्दुर्जनाद्भयं तस्य तद्दूषकत्वादिति भावः । काये देहे कृतान्ताद्यमाद्भयं तस्य तदन्तकरत्वादिति भावः।"कायो देहः क्लीबपुंसोः, कृतांतो यमसिद्धान्त०"इति चामरः । सर्वत्र "भीत्रार्थानां भयहेतुः" इत्यपादानत्वात्पञ्चमी अतो भुवि नृणां सम्बन्धि सर्वं वस्तु भोगाद्यशेपार्थजातं भयान्वितमुक्तरीत्या भयसहितं सान्वकत्वात् सापायमित्यर्थः । किंतु विरागो विषयानभिलाषो येषां ते विरागास्तेषां भावो

१ मौने । २ वादभ० इति च पाठान्तरम् ।

वैराग्यं तदेकमेव। न विद्यते भयं यस्य तदभयं भयहेतुत्वाभावान्निर्भयम्। निरातङ्कत्वान्निरपायमित्यर्थः। यद्वा विरागा अस्थिरभोगास्तेषां भावो वैराग्यं तदेकमेव न विद्यते भयं यस्य तदभयम्। भयहेतुत्वाद्यभिनिवेशं परित्यज्य सुस्थिरवैराग्यमेवाश्रयणीयं श्रेयस्कामैरिति भावः। इत्थं भोग इत्यादिष्वधिकरणसप्तम्याश्रयणेन व्याख्यास्य सतिसप्तम्याश्रयणेन व्याख्यातम्। सतिसप्तम्याश्रयणे त्वेवं व्याख्येयम्। अतः सर्वं भुवि नृणां भयान्वितं भयकरमित्यर्थः। किंतु वैराग्यमेव। न विद्यते भयं यस्मात्तत् अभयं भयनिवारणमित्यर्थः। सति वैराग्ये सर्वस्यापि मिथ्यात्वेन प्रतीयमानतया द्वितीयाभावात्। अतो भयावहं भोगादिकं परित्यज्य भयापहं वैराग्यमेवाश्रयणीयमिति तात्पर्यम्। शेषं समानम्॥ ३१॥

भोगमें रोगका भय, सुख बढनेमें उसके क्षयका भय, अधिक धन होनेमें राजभय, मान होनेमें दीनताका भय, संग्राम जीतनेमें शत्रुभय, रूपमें वृद्ध अवस्थाका भय, शास्त्रसे मान बढनेमें अपमानका भय, सद्गुणमें दुर्जनका भय और शरीरमें मृत्युका भय यों सर्वत्र भयके ही स्थान देख पडते हैं केवल वैराग्य ही निर्भय ठौर है॥ ३१॥

उपक्रान्तिभोगास्थैर्यं तत्तद्भङ्ग्यन्तरेण नवभिर्वर्णयति आक्रान्तमित्यादिभिः—

आक्रान्तं मरणेन जन्म जरसा चात्युज्ज्वलं यौवनं
सन्तोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा॥ ३२॥

आक्रान्तमिति॥ जन्म उत्पत्तिर्मरणेन स्वरूपनाशकेन मृत्युना आक्रान्तं ग्रस्तम्। "जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च। अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥" इत्यादि वचनादिति भावः। अत्युज्ज्वलमतिशयेन भास्वरं यौवनं नूतनवयस्तारुण्यमिति यावत्। जरसा जरया अपायहेतुभूतया आक्रान्तम्। "जराया जरसन्यतरस्याम्" इति जरसादेशः। सन्तोषो दैववशाल्लब्धवस्तुजनितपरितोषो धनालिप्सया तदुपद्रवकारिण्या धनवाञ्छया

१ विद्युच्चलं। २ विभूतिरप्युपहता। इति पाठांतरम्।

आक्रान्तः। लभेः सन्नन्तात् स्त्रियामप्रत्यये टाप् । शमसुखमिन्द्रियव्यापारोपरमापादितानन्दः प्रौढाङ्गनानां प्रगल्भविलासिनीनां विभ्रमैस्तदुपमर्दकैः कटाक्षविक्षेपकर्णकण्डूयनेन सकोमलकुचमर्दनादिविलासैराक्रान्तम् । गुणा विद्याविनयादयो मत्सरिभिः परोत्कर्षासहिष्णुभिर्लोकैर्जनैस्तदपवादकैरित्यर्थः । उपहृता ग्रस्ता इति यावत् । वनभुवः पुण्यारण्यप्रदेशा व्यालैर्दुष्टगजैः सर्पैर्वा तत्रप्रदेशानवकाशप्रदैरिति भावः । उपहृता ग्रस्ताः। नृपा राजानो दुर्जनैर्दुर्मन्त्रोपदेशेन तद्बुद्धिविपर्यासकारिभिः पिशुनैरुपहृताः समाक्रान्ता इत्यर्थः । विभूतयः सम्पदोऽप्यस्थैर्येण तदप्रतिष्ठावहेनास्थिरत्वेन उपहृता दूषिताः । अतः किं वस्तु केन वा उपद्रवेण न ग्रस्तमुक्तरीत्या सर्वमपि ग्रस्तमेवेत्यर्थः। अतः सर्वस्याप्यस्थिरत्वान्न कुत्रापि चित्तं स्थिरीकर्तव्यमिति भावः ॥ ३२ ॥

मृत्युने जन्मको, बुढापेने युवावस्थाको, धनकी इच्छाने संतोषको सुन्दर स्त्रियोंके हावभावने शान्तिसुखको, मत्सरी ( जो पराई बढाई न सहे )लोगोंने गुणको, सर्पोंने वनभूमिको, दुर्जनोंने राजाको और चञ्चलताने धैर्यको, योंही इस संसारमें किसने किसको नहीं ग्रास कर रक्खा है ? ॥ ३२ ॥

पुनः श्रोतृजनस्य विश्वासदार्ढ्यार्थमुक्तमेवार्थं भङ्ग्यन्तरेणाह—

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत्किं तेन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम् ॥ ३३ ॥

आधीति ॥ विविधैः नानाप्रकारैः आधीनां मनोव्यथानां व्याधीनां पित्तादिशारीररोगाणां च शतैरनेकैराधिव्याधिभिरित्यर्थः । “पुंस्याधिर्मानसी व्यथा, रोगव्याधिगदामयाः” इति चामरः । जनस्यारोग्यं देहस्वास्थ्यमुन्मूल्यते निर्मूलीक्रियते । तथा यत्र यस्मिन् पुरुषे लक्ष्मीरैश्वर्यसमृद्धिस्तिष्ठतीति शेषः । तत्र तस्मिन् पुरुषे व्यापदः महोपद्रवा विवृतान्युद्घाटितानि कवाटानि द्वाराणि यासां तास्तथोक्ता इव पतन्ति तद्विघटनार्थमप्रतिबन्धं प्रविशन्तीत्यर्थः । तथा मृत्यु-

१ नाम इति पाठान्तरम् ।

रन्तकः जातं जातं प्रारब्धकर्मवशात्पुनः पुनरुत्पन्नम्। वीप्सायां द्विर्भावः। अत एव विवशं विह्वलं जन्तुमिति शेषः। अवश्यं नियतमाशु शीघ्रमेवात्मसात् आत्माधीनं करोति। मारयतीत्यर्थः। "तदधीनवचने सातिः" इति सातिप्रत्ययः। अतस्तेन प्रसिद्धेन निरंकुशेन निरर्गलेन अप्रतिहतव्यापारेणेत्यर्थः। विधिना ब्रह्मणा यद्वस्तु निर्मितं तत्किं वा सुस्थिरं न किमपीत्यर्थः। अतोऽस्थिरभोगाशंसनं न कर्तव्यमिति भावः॥ ३२॥

सैकडों मानसिक दैहिक रोगव्याधिने मनुष्योंकी आरोग्यताको मूलसे उखाड डाला है, जहां द्रव्य बहुत होता है विपत्ति द्वार तोडके आ पडती है, जो जन्मता है उसे मृत्यु बलात्कारसे अवश्य वश कर लेती है ऐसी कौन वस्तु है कि जिसे निरकुंश विधाताने स्थिर बनाई॥३३॥

तर्हि किं कर्तव्यमित्याशङ्कायां तेषामस्थैर्यकथनपूर्वकं कर्तव्यं तावन्निभिरुपदिशति—

भोगास्तुङ्गतरङ्गभङ्गतरलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखस्फूर्तिः प्रियासु स्थिता।
तत्संसारमसारमेव निखिलं बुद्धा बुधा बोधकाः
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३४ ॥

भोगा इति॥ भोगाः स्रक्चन्दनादिविषयाः तुङ्गतरङ्गाः कल्लोला भङ्गा अल्पतरङ्गाः त इव तरलाश्चपला अतिसूक्ष्मा इत्यर्थः। न तु कतिपयेष्वपि दिवसेषु स्थायिन इति भावः। प्राणाः क्षणध्वंसिनः क्षणे क्षणकाल एव ध्वंसो विनाश एषामस्तीति तथोक्ताः। अस्थिरा इति यावत्। यौवने या सुखस्फूर्तिवैषयिकसुखाभिव्यक्तिः सा स्तोकान्येव दिनान्यल्पेष्वेव दिवसेष्वित्यर्थः। अत्यन्तसंयोगे द्वितीया। प्रियासु वनितासु स्थिता स्थायिनी। कर्तरि क्तः। न तु यावज्जीवभाविनी वार्धकदशायां तदपायादिति भावः। तत्तस्मात्कारणात् बोधका हितोपदेष्टारः हे बुधा विद्वांसः। निखिलं संसारं भोगादिरूपमसारमस्थिरमेव बुद्वा आलोच्य परमदयालुत्वप्रयुक्तानुग्रहतया युष्माभिर्ज्ञानोपदेशादिना संसारार्णवनिमग्ना जनास्तारयितव्या न तूपेक्ष्यास्तथाविधजनोद्धरणे महाफलश्रवणादिति भावः। यद्वा लोकानुग्रहे पेशलेनानुरक्तेन मनसा यत्नः ब्रह्म-

-ध्यानप्रयत्नसमाधीयतार्थत्वेऽपि युष्माभिरयं यत्नःकर्तव्यः। यतो युष्मत्कृतप्रयत्नतात्पर्येण जना अति कृतार्था भविष्यन्ति । " यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते " इति भगवद्वचनादिति भावः। समाधीयतामिति विध्यर्थे विहितोऽयं लोट्प्रयोगः। परमपुरुषार्थसाधकब्रह्मध्यानप्रयत्नस्यावश्यविधेयभाविपक्षे अनर्थप्राप्तिं ज्ञापयतीत्यवधेयम् ॥ ३४ ॥

भोग तो बडे तरंगोंके भंगके समान चञ्चल हैं, प्राण भी क्षणभरमें नष्ट होनेवाले हैं, यौवनसुखकी स्फूर्तिभी प्रियतमाओंके विषयमें थोडे ही दिनोंतक ठहरती है इसलिये हे बोधक बुधो ! यह अखिल संसार निःसार समझके लोकानुग्रहके विषयमें मनको अनुरक्त कर ब्रह्मध्यान करनेके लिये प्रयत्न करो ॥ ३४ ॥

पुनः प्रत्ययदार्ढ्यार्थं युक्त्यन्तरालाभाच्च उपदिष्टमेवार्थं भङ्ग्यन्तरेणोपदिशति द्वाभ्याम्--

भोगा मेघवितानमध्यविलसत्सौदामनीचञ्चला
आयुर्वायुविघाट्टिताब्जपटलीलीनाम्बुवद्भङ्गुरम् ।
लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विधध्वं बुधाः ॥ ३५ ॥

भोगा इति ॥ तनुभृतां शरीरिणां भोगाः पूर्वोक्ताः मेघवितानस्याभ्रवृन्दस्य विलसन्त्यः परिस्फुरन्त्यो याः सौदामन्यस्तडितस्ता इव चञ्चला क्षणिका इत्यर्थः । " तडित्सौदामनी विद्युत् " इत्यमरः । सुदाम्ना अद्रिणा एकदिक् सौदामनीति विग्रहः । " तेनैकदिक् " इत्यण् । तथा आयुर्जीवितं च वायुना विघट्टितं तरलयितं यदब्जपटलीलीनाम्बु पद्मपत्रप्रान्तसंश्लिष्टजलबिन्दुस्तद्वद्भङ्गुरं भङ्गलीलावन्नश्वरमित्यर्थः । तथा यौवने लालसाः महाभोगाभिलाषाः । " कामोऽभिलाषस्तर्षश्च स महान् लालसा द्वयोः " । इत्यमरः । लोला अस्थिरा इत्येवमाकलय्य आलोच्य हे बुधाः, द्रुतं शीघ्रमेव विलम्बस्यानवकाशादिति भावः । धैर्यं धीरत्वं समाधिश्चित्तस्थैर्यं तयोः सिद्ध्या निष्पत्त्या सुलभे सुखलभ्ये योगे ब्रह्मध्याने बुद्धिं निश्चयात्मिकां मनीषां विधध्वं कुरुत ब्रह्मज्ञाननिष्ठा भवतेत्यर्थः ॥ ३५ ॥

१ तात्र० । इति पाठान्तरम् ।

विस्तृत मेघमें चमकती हुई बिजुलीके समान देहधारियोंका मार्ग चञ्चल है, वायुसे हिलते हुए पद्मके पत्रमें लीन हुये जलबिंदुके सदृश आयुष्य नाशवान् है और यौवनकी उमंगभी स्थिर नहीं है। हे पंडितो! ऐसा समझकर धैर्य समाधिकी सिद्धिसे सुलभ जो योग है तिसमें बुद्धि धारण करो ॥ ३५ ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूंगाः ।
कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ ३६ ॥

आयुरिति ॥ आयुः कल्लोललोलं कल्लोलवल्लोलमतिभंगुरं न त्वाचन्द्रार्कस्थायीत्यर्थः । यौवनश्रीर्यौवनसम्पत् कतिपयेष्वल्पेषु दिवसेषु तिष्ठतीति तथोक्ता न तु यावज्जीववर्तिनीत्यर्थः । अर्थाः धनधान्यग्रामपश्वादिवस्तुविभवाः सङ्कल्पकल्पा मनोरथतुल्या इत्यर्थः । तेऽपि न चिरस्थायिन इति भावः । "ईषदसमाप्तौ कल्पब्देश्यदेशीयरः"इति कल्पप्प्रत्ययः। भोगपूगा विषयपरम्पराः घनसमये वर्षाकाले यास्तडितस्तासामिव विभ्रमाः स्फुरणानि येषां ते तथोक्ताः। क्षणभंगुरा इत्यर्थः । तथा प्रियाभिः प्रौढाङ्गनाभिर्यत्कण्ठाश्लेषेण कण्ठग्रहेणोपगूढमुपगूहनमालिङ्गनमिति यावत् । भावे क्तः । प्रणीतं रचितं तदपि प्रौढाङ्गनालिङ्गनमपि न चिरं चिरकालावस्थायि न भवतीत्यर्थः । अतो हे बुधाः भवात्संसाराद्यद्भयं तदेवाम्भोधिस्तस्य पारं तरीतुं संसारसागरमुल्लङ्घितुमित्यर्थः । ब्रह्मण्यासक्तचित्ता भवत ब्रह्मध्यानैकतत्परा भवतेत्यर्थः । न ह्येतद्व्यतिरेकेण तरणोपायं किञ्चिदपि पश्यामीति भावः । त्रिवारशुद्धया दृढतरविश्वासोत्पादनार्थं त्रिभिः श्लोकैः परमार्थपर्यवसायिनी ब्रह्मध्याननिष्ठोपदिष्टा न त्वनर्थपर्यवसायिनी संसारासक्तिः । यदत्र युक्तं तद्ग्राह्यं तत्त्वविचारपारावारपारीणैरिति श्लोकत्रयतात्पर्यम् ॥ ३६ ॥

आयुष्य जलतरंगसी चञ्चल है, यौवनावस्थाकी शोभा अल्प काल रहनेवाली है, धन मनके संकल्पसे भी क्षणिक है, भोगके समूह वर्षा-

---

१ भोगपूरा इति पाठान्तरम् ।

कालके मेघकी बिजलीसे चञ्चल हैं और प्यारी स्त्रीको गलेसे लगाना बहुत दिन स्थिर नहीं रहता इसलिये संसारके भयरूपी समुद्रसे पार होनेके लिये ब्रह्ममें चित्तको लीन करो ॥ ३६ ॥

ननु लोके प्रायः संसारसुखतत्परा एव दृश्यन्ते अतः कथमयं निषिध्यत इत्याशङ्क्यादित आरभ्य विचार्यमाणे न तत्र सुखलेशोऽप्यस्तीत्याह—

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भमध्ये
कान्ताविश्लेषदुःखव्यतिकरविषमो यौवने चोपभोगः ।
वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥ ३७

कृच्छ्रेणेति ॥ गर्भवासे गर्भावस्थानदशायाममेध्यमध्ये मूत्रपुरीषमध्ये नियमिततनुभिः संकुचितगात्रैः प्राणिभिरिति शेषः । कृच्छ्रेणातिकष्टेन स्थीयते । तथा यौवने उपभोगः सम्भोगश्च कान्ताविश्लेषेण प्रियतमावियोगेन यो दुःखव्यतिकरो दुःखसम्पर्कस्तेन विषमो विकलो भवतीति शेषः । तथा वामाक्षीणां मनोहरनयनानामवज्ञाविहसितानामवमानपूर्वकपरिहासानां वसतिः स्थानं तासां तस्य हेतुत्वात्परिहासास्पदमित्यर्थः । वृद्धभावो वृद्धत्वमप्यसाधुरसमीचीनः अपहासास्पदीभूतस्य कुतः साधुत्वमिति भावः । अतो रे इति नीचसम्बोधने । नीचत्वं च सांसारिकत्वादिति द्रष्टव्यम् । "नीचसम्बोधने तु रे" इत्यमरः । संसारे गर्भवासजन्मजरादिरूपे स्वल्पं तुच्छं किञ्चिदीषदपि सुखमस्ति यदि वर्तते चेत्तर्हि तद्वदत ब्रूत।अतः किमर्थं क्लिश्यथ गर्भवासनिरयवासादिसांसारिकदुःखैः पुनरावृत्तिरहितनित्यनिरतिशयानन्दबन्धुरब्रह्मपदप्राप्त्यर्थमेव प्रयतध्वमित्यर्थः ॥

अपवित्र मलमूत्रके स्थानमें बडे कष्टसे हाथ पैर बन्धे हुए बाल्यावस्थामें गर्भ बन्दीगृहमें रहता है, फिर युवावस्थामें स्त्रियोंके वियोगदुःखसे क्लेशित रहता है और वृद्धावस्थामें नारियोंसे निरादर पाकर नीचा शिर किये शोचमें पडा रहता है तो हे मनुष्यो ! इस संसारमें किंचित् मात्रभी सुख होय तो वह हमसे कहो अर्थात् सुखका लेशभी नहीं है ॥ ३७ ॥

---

१ विप्रयोगः । २ नारीणामप्यवज्ञा विलसति नियतं । इति च पाठान्तरम् ।

अथ स्वविनिपातहेतौ सन्निहिते लोका न कुशला भवन्ति महदेतदाश्चर्यमित्याह--

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम्।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३८ ॥

व्याघ्रीति ॥ जरा वार्धकावस्था व्याघ्री व्याघ्राङ्गनेव ॥ "जातेरस्त्रीविषयादयोपधात्" इति ङीप्। परितर्जयन्ती भीषयन्ती सती तिष्ठति। कलेवरकवलनाभिवेशेन वर्तमाना मृत्योः प्रत्यासत्तिमभिनिवेदयतीत्यर्थः। रोगाः वातपित्तश्लेष्मादिव्याधयश्च शत्रवो वैरिण इव देहं प्रहरन्ति ताडयन्ति परिपीडयन्तीत्यर्थः। आयुश्च भिन्नघटात् छिद्रकलशादम्भ इव परिस्रवति प्रतिक्षणं नश्यतीत्यर्थः। तथापि लोको जनः अहितं परापकारमाचरतीति चित्रमाश्चर्यम्। परापकारादन्यत्किमकुशलमिति भावः। यद्वा अहितं स्वस्यानिष्टमाचरति स्वविनिपातहेतुभूतमेव कर्म करोति न स्वात्मोद्धरणार्थं ब्रह्मध्यानादि करोतीत्यर्थः। चित्रमाश्चर्यम्। तदुक्तं गीतासु--"उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥" इत्यादि। तर्जयन्तीत्यत्र तर्जयतेः परस्मैपदम्। "तर्जयन्निव केतुभिः" इत्यादिमहाकविप्रयोगात्सिद्धम्। तर्जयतेरनुदात्तत्वेऽपि चक्षिङो ङित्करणेन अनुदात्तत्वनिमित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात्परस्मैपदमिति। उपमा ॥ ३८ ॥

वृद्धावस्था वाघिनीसी सन्मुख खडी है, सब रोग शत्रुओंके समान देहपर दण्डप्रहार कर रहे हैं, आयु प्रतिदिन इस प्रकार निकलती जाती है जैसे फूटे घडेसे पानी निकलता जाय, तिसपरभी लोक जिसमें अपना बुरा हो वही काम करते जाते हैं यह बडा आश्चर्य है ॥ ३८ ॥

अथ सर्वथा यद्यस्मदुपदेशे विश्वासस्तर्ह्यात्मन्येव मनः समाधेयं न त्वन्यत्रेत्याह--

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-
स्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः।

---

१ कस्यच। इति पाठान्तरम्।

आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोत्पत्तिवशात्स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥ ३९ ॥

भोगा इति ॥ भोगा विषया भंगुरा भङ्गशीला च वृत्तिर्येषां ते तथोक्ता आगमापायित्वादस्थिरा इत्यर्थः । बहुविधाः नानाप्रकाराश्च कारणवैचित्र्यपूर्वकत्वात्कार्यवैचित्र्या इति भावः । अस्तु ततः किं ? तत्राह—तैर्भोगैरेवायं परिवर्तमानो भावः शरीरधारणादिसंसारः कल्पित इति शेषः । जन्मान्तरीयकत्वात्तस्येति भावः । "भोगायतनं शरीरम्" इति वैशेषिकः । तत्तस्मात्कारणात् रे लोका जना इहात्र भवे कस्य कृते कस्य भोगस्य प्राप्त्यर्थमित्यर्थः। "अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ ।" इति वचनात् । परिभ्रमतः सञ्चरतः न परिभ्रमितव्यमित्यर्थः । सञ्चितकर्मवशात्स्वत एव तेषां सम्भाव्यमानत्वादिति भावः । अतश्चेष्टितैर्भोगसंग्रहव्यापारैः कृतं तत्संग्रहव्यापारा न कर्तव्या इत्यर्थः । कृतमिति निषेधार्थकमव्ययं चादिषु पठ्यते । कृतमिति निवारणातिनिषेधयोरिति गणव्याख्याने । तर्हि किमतः परं कर्तव्यमुपदिश्यत इत्यत आह । अस्मद्वचः अस्मदीयमुपदेशवचनं श्रद्धेयं यदि विश्वसनीयं चेत् युष्माभिरिति शेषः। आशा अतितृष्णास्ताः पाशा रज्जव इव बन्धहेतुत्वात्। "आशा दिगतितृष्णयोः" इति वैजयन्ती । तेषां शतानि अनेक आशापाशा इत्यर्थः । तेषामुपशान्त्योपशमनेन विशदं निर्मलं चेतश्चित्तं कामोत्पत्तिवशादनुरागोदयवशादनुरागमुत्पाद्येत्यर्थः । स्वरूपमात्मा तद्रूपं धाम स्थानं तस्मिन् । "स्वो ज्ञाता वात्मनि स्वम्" इत्यमरः । समाधीयतां स्थिरीक्रियतामन्तरात्मप्रवणमेव क्रियताम् । न बाह्यविषयासक्तमित्यर्थः। अन्यथा महाननर्थः स्यादिति भावः । यद्वा स्वशब्देन जीव उच्यते तस्य धामनि निलये स्थाने परब्रह्मणि । अथवा स्वधामनि स्वयंज्योतिषि स्वरूपभूततेजसीति वा । इहात्यन्तविप्रकृष्टार्था बहवः परिस्फुरन्ति विस्तरभयान्न लिख्यन्ते । समाधीयतां समाहितं क्रियतामित्यर्थः । अयमेव हितोपदेष्टृत्वान्मुख्यगुरूणामस्माकं परमोपदेशः । एतद्विश्वासेनान्यासङ्गं परित्यज्य मनो ब्रह्मणि कृत्वा तदाज्ञया श्रेयः संपादनीयम् । "सत्सम्प्रदायसंयुक्तब्रह्मविद्याविशारदः । एवमादिगुणोपेतो देशिकोऽशेषवन्दितः ॥" इत्युक्तलक्षणदेशिकाचार्योपदेशवचनश्रद्धाभक्तियुक्तस्य श्रेयोलाभावश्यम्भावात् । "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ मंत्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ । यादृशी भावना यत्र

१ कामोच्छित्तिवशे स्व० । इति पाठान्तरम् ।

सिद्धिर्भवति तादृशी ॥" इत्यादिश्रुतिस्मृतिसहस्रेभ्योऽयमर्थो निश्चीयत इत्यलमतिप्रसङ्गेन। शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

जितने भोग हैं उनकी वृत्ति नाशवान् है, उनके संसर्गसे भय है अर्थात् वारंवार जन्म मरण है यह जानकरभी हे लोगो ! किसलिये भोगरूपी चक्रमें भ्रमते हो? ऐसी चेष्टासे क्या फल मिलता है? यदि हमारे वचनका विश्वास मानो तो स्वयंप्रकाशरूप परब्रह्ममें आशापाश छेदन करनेसे शुद्ध हुआ चित्त अनुरागसहित निरन्तर लगाओ ॥ ३९ ॥

ननु यदि ते सर्वथा भोग एव स्पृहा तर्ह्यस्मदुपदिष्ट एवाभिरतिं कुरु नान्यत्रेत्युपसंहरति——

ब्रह्मेन्द्रादिमरुद्गणांस्तृणकणान् यत्र स्थितो मन्यते
यत्स्वादाद्विरसा भवन्ति विभवास्त्रैलोक्यराज्यादयः।
भोगः कोऽपि स एक एष परमो नित्योदितो जृम्भते
भो साधो क्षणभङ्गुरे तदितरे भोगे रतिं मा कृथाः॥ ४० ॥

ब्रह्मेति ॥ यत्र यस्मिन् निरतिशयैकनित्यभोगसाम्राज्ये स्थितो वर्तमानः सन् पुमानिति शेषः। ब्रह्मेन्द्रावादी येषां ते तथोक्ता ये मरुद्गणाः सुरसंघाः तानपि किमुतान्यानिति भावः। "मरुतौ पवनामरौ" इति वैजयन्ती। तृणकणान् तृणलेशान् अत्यन्तनिःसारान् परमनीचानिति यावत्। मन्यते अवबुध्यते। पारमेष्ठ्यस्वाराज्ययोरप्येतादृशभोगसाम्राज्यसहस्रांशसादृश्यस्याप्यनर्हत्वादिति भावः। "मन्यकर्मण्यनादरे विभाषाप्राणिषु" इति विकल्पाद्द्वितीया। तथा यस्य विशिष्टभोगसाम्राज्यस्य स्वादात् रुच्यनुभवात् त्रयो लोकास्त्रैलोक्यम्। ब्राह्मणादित्वात् ष्यञ्। तत्र यद्राज्यमाधिपत्यं तद्रादिर्येषां ते तथोक्ता विभवाः सम्पदो विरसा अनभिमताः हेया इति यावत्। भवन्ति तेषु तथाविधरुच्यतिशयाभावादिति भावः। यद्वा यस्य ब्रह्मानन्दरूपभोगस्य स्वादात् त्रैलोक्यराज्यमादिः कारणं येषां ते तथोक्ताः सकलभुवनाधिपत्यसम्भवा इत्यर्थः। विभवाः सुखसम्पदः विरसा रसहीना निकृष्टा इति यावत्। भवन्ति ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात्। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेरिति भावः। कोऽप्यनिर्वाच्यः। कुतः परमः सर्वोत्कृष्टः निरतिशय

इति यावत् । तत्कुतः नित्योदितः नित्याभ्युदयसम्पन्न इत्यर्थः । स एक एव भोगो ब्रह्मानन्दरूपो जृम्भते । महाराजश्रोत्रियाद्यानन्दानामुत्तरोत्तरतारतम्य-मुक्त्वाऽस्य सर्वोत्कृष्टत्वस्य श्रुत्युक्तत्वादिति भावः । अतो भो साधो सज्जनेत्यु-पदेशश्रवणाभिमुखीकरणार्थं स्तुत्या अत्रैकवचनं समुदायाभिप्रायमत एव 'रे लोकाः' इति न पूर्वश्लोकोक्तबहुवचनविरोधः । अत्रास्मदुपदेशं ये न शृण्वन्ति त एव नीचाः यस्तु शृणोति स एव साधुरिति सम्बोधनद्वयतात्पर्यम् । क्षण-भंगुरे अनित्ये उपलक्षणमेतत् । परमनीच इत्यर्थः । तदितरे तस्माद्विशिष्टभो-गादितरस्मिन् । अत्र अस्मिन्नादेशाभावश्चिन्त्यः । भोगे सांसारिकसुखानुभवे रतिं रागं प्रीतिमिति यावत् । " रतिः स्मरप्रियायां च रागेऽपि सुरतेऽपि च । " इति विश्वः । मा कृथाः मा कार्षीः । किन्तु पूर्वोक्त एव तस्मिन् भोगे रतिं कुरु । तस्यैव परमश्रेयस्करत्वादिति भावः । कृञो लुङि " न माङ् योगे " इत्यडागमप्रतिषेधः ॥ ४० ॥

जिसमें स्थित हुआ मनुष्य ब्रह्मेंद्रादि देवगणको तृणके समान तुच्छ मानता है, जिसके स्वादसे त्रैलोक्यके राज्यादिक विभवभी विर-ससे जान पडते हैं ऐसा वह एक परम नित्य उदित ब्रह्मानन्दरूप भोगही सर्वोत्कृष्टतासे विराजता है । इसलिये हे साधो ! तदितर इस क्षणभंगुर भोगमें प्रीति मत करो ॥ ४० ॥

अथ सर्वस्यापि कालनियम्यत्वात्तन्महिमानं दशभिर्वर्णयति । तत्रादौ तस्य नियामकत्वं प्रकटयन्नमस्करोति—

सा रम्या नगरी महान्स नृपतिः सामन्तचक्रं च तत्-
पार्श्वे तस्य च सा विदग्ध परिषच्चाश्चन्द्रबिम्बाननाः ।
उद्वृत्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ ४१ ॥

सेति ॥ अत्र सर्वत्रापि तच्छब्दः पूर्वानुभूतविषयः अत एव न यच्छब्दः । तदुक्तं काव्यप्रकाशे—" प्रक्रान्तप्रसिद्धानुभूतार्थगोचरस्तच्छब्दो न यच्छब्दम-पेक्षते " इति । तथा च सा पूर्वानुभूता रन्तुं योग्या रम्या मनोहरा नगरी

१ भ्रातः कष्टमहो । २ सापि राजप० । ३ उद्रिक्तः इति च पाठान्तरम् ।

राजधानी च तत्र स महान् साम्राज्यभारधौरेयतया पूज्यो नृपतिः राजा च। तस्येति सम्बन्धसामान्ये षष्ठी सर्वत्र सम्बध्यते। तस्य नृपतेस्तत् सामन्तचक्रं प्रत्यर्थिराजमण्डलम्। यद्वा सेवार्थं समागताखण्डमण्डलाधिपतिपरिवारश्च। तस्य पार्श्वे स्थितामिति शेषः। सा विदग्धपरिषत् विद्वत्सभा च। अथवा विदग्धानां कर्तव्यार्थचतुराणां परिषत् समुदायश्च। "कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते।" इति लक्षणात्। तस्य ताश्चन्द्रबिम्बमिवाननं यासां ताः सुन्दर्यश्च। तस्य स उद्धृत्त उत्पथगत उद्दण्ड इति यावत्। राजपुत्रनिवहो राजकुमारवर्गश्च। तस्य ते वन्दिनः स्तुतिपाठकाश्च। "वन्दिनः स्तुतिपाठकाः" इत्यमरः। तस्य ताः कथाः श्राव्यवाचश्चेति सर्वमशेषमपि यस्य वशादायत्तत्वात्। "वश आयत्ततायां च" इत्यमरः। स्मृतिपथं स्मरणमार्गम्। "ऋक्पू०" इत्यादिना समासान्तोऽच्प्रत्ययः। अगात् प्रापत्। कालमहिम्ना सर्वमपि नष्टमभूदित्यर्थः। सर्वसंहर्तुः कालस्य महिमा वर्ण्यत इति भावः। "इणो गा लुङि" इतीणो गा लुङि गादेशः। तस्मै कालाय नमः प्रह्वभावः। "कालः कलयतामहम्" इति भगवद्वचनात् कालो भगवानेव तथा च तन्नमस्काररूपमङ्गलाचरणं युज्यत इति भावः। "नमःस्वस्ति०" इत्यादिना चतुर्थी ॥ ४१ ॥

पहिले यहां कैसी सुन्दर नगरी थी, उसका राजा कैसा उत्तम था और राज्य उसका कैसा दूरतक था उसके निकट विदग्धसभा कैसी होती थी और चन्द्रमुखी स्त्रियां कैसी शोभायमान थीं और राजाके पुत्रोंका समूह कैसा प्रबल था, कैसे वे वन्दीगण थे और कैसी अच्छी कथा कहते थे अब वे सब जिस कालके वश हो लुप्त हो गये उस कालको नमस्कार है ॥ ४१ ॥

अथास्याक्षधूर्तसाम्येन सर्वप्राणिनियन्तृत्वमाह—

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते।
इत्थं नेयौ[1] रजनिदिवसौ लोलयन्[2] द्वाविवाक्षौ
कालः कल्यो[3] भुवनफलके क्रीडति प्राणशारैः[4] ॥ ४२ ॥

---

१ नेमौ। २ दोलयन्। ३ काल्या। ४ सह बहुकलः इति च पाठांतरम्।

यत्रेति ॥ यत्र यस्मिन् गृहे वेश्मनि कोष्टे च क्वचित्कदाचित् । यद्वा यत्र क्वचिदपि यस्मिन् कस्मिंश्चिद् गृहे अनेकः बहुलः प्राणी शारश्च तिष्ठति । अथानन्तरं तत्र तस्मिन्नेव गृहे कदाचिदेकस्तिष्ठति । एकत्र कालभेदवशादन्यत्र पारिणामवशाच्चेति भावः । तथा यत्र यस्मिन् गृहे कदाचिदेकस्तिष्ठति तदनु तदनन्तरं बहवस्तिष्ठन्तीति शेषः। तत्र तस्मिन् गृहे अन्ते अवसानकाले द्यूतसमाप्तौ च एकोऽपि च न तिष्ठति। इत्थमुक्तरीत्या भुवनं फलकमिव शारप्रवर्तनोचितकोष्ठयन्त्रमिव तस्मिन् नेयैः प्रवर्तनीयैरितियावत्। प्राणिनः शाराः द्यूतगूढा इव अक्षोपकरणानीवेति यावत् । तैः साधनैः । " पल्याणे स्त्री विहङ्गे ना शारो द्यूतगूढे नपुंसकम् । " इति वैजयन्ती । कल्यः कलनासमर्थः देवनचतुरश्च कालः कर्ता अक्षधूर्तश्च गम्यते । रजनिदिवसौ रात्र्यहनी कर्म द्वावक्षौ पाशकाविव। "पणोऽक्षेषु ग्लहेऽक्षास्तु देवनाः पाशकाश्च ते " इत्यमरः । लोलयन् पौनःपुन्येन गृह्णन् सृजंश्चेत्यर्थः । क्रीडति दीव्यति । प्राणिसंयोगवियोगयोर्वृद्धिक्षयादीनां च काल एव कर्तेति भावः । अत्राक्षाविवेति स्पष्टोपमालिङ्गात्सर्वत्रोपमितसमासः । यदि चक्रक्रीडनोपयोगित्वाद्रूपकमेवाश्रयणीयमित्यभिमानस्तदैकदेशवर्तिरूपकमुपमा त्वङ्गमिति संक्षेपः ॥ ४२ ॥

जिस घरमें अनेक थे वहां एक दृष्टि पडता है और जहां एक था वहां अनेक देख पडे, फिर वहांही एकही रह गया तो देखो रात और दिनके पासे ढुळा ढुळाके इस संसाररूपी चोपडमें प्राणियोंको गोटी बनाके कलनासमर्थ काल पुरुष खेल रहा है ॥ ४२ ॥

अथ नित्यप्रमत्तोऽयं लोको नैतन्महिमानं ज्ञातुं शक्नोतीत्याह—

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ४३ ॥

आदित्यस्येति ॥ आदित्यस्य सूर्यस्य गतागतैरुदयास्तमयैरिति यावत् । अहरहः प्रत्यहमहन्यहनीत्यर्थः । वीप्सायां द्विरुक्तिः । अत्यन्तसंयोगे द्वितीया । जीवितमायुः संक्षीयते विनश्यति कालक्रमेणायुःक्षयो भवतीत्यर्थः । " क्षि

क्षये " इत्यस्माद्धातोः कर्तरि ल्ट् । तथापि सोऽयं न ज्ञायत इत्याह । बहवोऽनेके ये कार्यभाराः देहगेहादिनिमित्तकर्तव्यार्थपरम्परास्तैर्गुरुभिर्गरिष्ठैर्व्यापारैर्जीवनोपायोद्योगैः कालोऽपि जीवितक्षयकरसमयोऽपि न ज्ञायते । कार्यशतपर्याकुलव्यापारपारवश्यान्नावबुध्यत इत्यर्थः । तथा जन्मजराविपत्तिमरणमुत्पत्तिजरावस्थापन्निधनानीत्यर्थः । " सर्वो द्वंद्वो विभाषयैकवद्भवति " इत्येकवद्भावः । दृष्ट्वा त्रासो भीतिश्च नोत्पद्यते नोदेति । किं जगत् सर्वोऽपि लोको मोहमयीमज्ञानप्रचुरां बुद्धिविपर्यासकारिणीमिति यावत् । प्राचुर्ये मयट् टित्त्वात् ङीप् । प्रमादमदिराम् । " प्रमादोऽनवधानता " इत्यमरः । मदिरा मद्यं तां पीत्वा निपेव्य उन्मत्तभूतं क्षीवकल्पं विवेकशून्यमिति यावत् । भवतीति शेषः। कालेनैव प्रमादं प्रापितोऽयं लोकः कथंकारमेतन्माहिमानं ज्ञास्यतीति भावः॥४३

सूर्यके उदय अस्त होनेसे आयु दिन दिन घटती जाती है, अनेक कार्योंसे भारी व्यापारमें काल बीता जाना नहीं जाता और जन्म वृद्धापन विपत्ति और मरण देखकेभी त्रास नहीं होता, इससे यह निश्चित हुआ कि मोहमयी प्रमादरूपी मदिरा पीके जगत् मतवाला हो रहा है ॥ ४३ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतप्रारब्धतत्तत्क्रियाः ।
व्यापारैः पुनरुक्तभुक्तविषयैरित्थंविधेनामुना
संसारेण कदर्थिता वयमहो मोहान्न लज्जामहे ॥ ४४ ॥

रात्रिरिति॥ रात्रिरियं प्रवर्तमाना रजनी सैव पुनः गतरात्रिसदृश्येवेत्यर्थः। पुनःशब्दो वाक्यालङ्कारे । अथ रात्रिः पुनः भूयोऽपि सैव गतरात्रिरेव नैतद्भेदो विज्ञायत इति भावः।तथा दिवसोऽह्नः स पुनः स एव गतदिवससदृश एवेत्यर्थः। पूर्ववद्विकल्पोऽत्राप्युन्नेयः इति मत्वा बुद्ध्वापि जन्तवः प्राणिनः उद्यमिनस्तत्तदर्थसाधनोद्योगवन्तः । तथैव निभृतं निगूढं परेषामप्रकाशमिति यावत् । प्रारब्धा उपक्रान्तास्तत्तत्क्रियास्तत्तदर्थसाधनकर्माणि येषां ते तथोक्ताश्च सन्तः

१ मुधा । २ रेवं । ३ कथमहो । इति च पाठान्तरम् ।

पुनरुक्तभूताः पुनः पुनरनुभूतकल्पाश्चर्वितचर्वणप्राया इति यावत् । तथाभूता विषया जग्धियच्ध्यादिभोगाः तैर्व्यापारैश्चेष्टाभिः मुधा व्यर्थं धावन्ति वृथा प्रयासमन्तरेण फलान्तरसम्भवादिति भावः । किंत्वित्थंविधेनैवम्प्रकारेणामुना परिवर्तमानेन संसारेण कुत्सितोऽर्थः कदर्थः । "कोः कत्तत्पुरुषेऽचि" इति कुशब्दस्य कदादेशः । कदर्थवन्तः कृता कदर्थिता हीनार्थीकृता अपि । कदर्थशब्दात् "तत्करोति०" इति ण्यन्तात्कर्मणि क्तः । णाविष्ठवद्भावे "विन्मतोर्लुक्" इति लुक् । वयं मोहादज्ञानान्न लज्जामहे न जिह्रेम । अहो एवं कालमहिम्ना निःसार्य तिरस्कृता अपि लज्जां न प्राप्नुम इत्याश्चर्यमित्यर्थः॥४४॥

वही रात और वही दिन नित्य होते हैं यह जानकेभी बुद्धिमान् मनुष्य उद्योग करते हुए उसी प्रतिदिनकी रीतिसे यथार्थ तिस २ कार्यका प्रारंभ करके वारंवार कहे और भोगे हुए हैं विषय जिनमें ऐसे २ व्यापारोंसे जहां तहां दौडते हैं इस पूर्वोक्त प्रकारके इस संसारसे निंदित अर्थवालेभी हम मोहसे लज्जाको प्राप्त नहीं होते ॥ ४४ ॥

अथ लोके तावत्पुरुषाणां धर्मार्थकाममोक्षरूपचतुर्विधपुरुषार्थसम्पादनसाधनीभूततया परमेश्वरपदध्यानेज्याध्ययनयशोवित्तार्जनगुरुशुश्रूषाङ्गनालिङ्गनादयो यथायोगं विधेयाः। अस्माभिस्तु तेषां मध्ये न कश्चिदपि विरचितः अतोऽस्मज्जन्म निरर्थकमिव जातमिति वारंवारं शोचतां वचनमभिनीयाह न ध्यातमित्यादित्रिभिः—

न ध्यातं पदमीश्वरस्य विधिवत् संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ४५ ॥

न ध्यातमिति ॥ संसारविच्छित्तये संसारोच्छेदार्थं मोक्षप्राप्त्यर्थमित्यर्थः । ईश्वरस्य शम्भोः । "स्थेशभास०" इत्यादिना वरच् । पदं पादारविन्दयुगलमित्यर्थः । विधिवत् विध्यर्हं यथाशास्त्रमित्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । न ध्यातमेकाग्रचित्ततया न ध्यानविषयीकृतम् । यतः "शम्भुपादाम्बुजध्यानं साक्षान्मोक्षैकसाधनम् ।" इत्यनेकपुराणेतिहाससंहितावचनैः

साक्षान्मोक्षसाधनतया विधेयमित्यभिहितं शम्भुपदध्यानं न विहितमतस्त-त्साध्यमोक्षपुरुषार्थो न सम्पादित इति भावः। तथा धर्मार्थसम्पादनानुशोचनं कथयन्ति। अत्र "अथातो धर्मजिज्ञासा" इत्युपक्रममाणः सूत्रकृन्महर्षि-र्धर्मस्य प्राधान्येन स्वतःसिद्धं पुरुषार्थत्वं मन्यते, फलं त्वानुषङ्गिकमस्य पुनः साक्षात्परम्परया च स्वर्गापवर्गपुरुषार्थद्वयसाधनतया सुखहेतौ चन्दने सुखत्व-वदौपचारिकं मन्यते। तत्र च द्वितीयं पक्षमाश्रित्याह—स्वर्गेति। अत्र स्वर्गशब्दोऽ-पवर्गस्योपलक्षकः। तथा च स्वर्गापवर्गद्वारयोः कवाटे तयोः पाटने विदलने पटुः समर्थः स्वर्गापवर्गसाधक इत्यर्थः। धर्मो ज्योतिष्टोमादिरपि नोपार्जितो न सम्पादितः। यतः "ज्योतिष्टोमेन स्वर्गकामो यजेत, धर्मात्सुखं च, ज्ञाना-न्मोक्षमवाप्नुयात्" इत्यादिश्रुतिस्मृतिभिः पुरुषार्थद्वयसाधकत्वेनावश्यमनु-ष्ठेय इति बोधितो धर्मोऽपि नानुष्ठितः। अतस्तत्साध्यपुरुषार्थद्वयमपि न सिद्ध-मिति भावः। अत्र देहलीदीपन्यायेन स्वर्गापवर्गसाधकत्वकथनं धर्मस्य किञ्चि-दतिशयं द्योतयति ततो न पौनरुक्त्यमित्यनुसन्धेयम्। तथा नारीणां पीनौ पीवरौ यौ पयोधरौ स्तनौ तयोरुरु दुर्भरं यद्युगलं पीवरदुर्भरकुचकुम्भयुग्म-मित्यर्थः। यद्वा पयोधरयोरूर्वोश्च युगलं पयोधरयुगलमूरुयुगलं चेत्यर्थः। तत्स्वप्नेऽपि स्वप्नावस्थायामपि किमुत जाग्रदवस्थायामिति भावः। नालिङ्गितं नाश्लिष्टम्। "संसारे पटलान्ततोयतरले सारं यदेकं परं यस्यायं च समग्र एष विषयग्रामप्रपन्नो जनः। तत्सौख्यं परतत्त्ववेदनमहानन्दोपमं मन्दधीः को वा विन्दति सूक्ष्ममन्मथकलावैचित्र्यमूढो जनः॥" इत्यादिकामशास्त्रोक्त्या कामपुरुषार्थस्याप्युपादेयत्वात्तन्निष्पादकत्वेनाधिगतमङ्गनाकुचकुम्भालिङ्गनाधर-चुम्बनादिकमपि न कृतमतस्तन्निष्पाद्यकामपुरुषार्थोऽपि न समर्थित इति भावः। अयमेव भावः उत्तरपद्यद्वयेऽप्यनुसन्धेयः। अत्र बाह्यसुरते पयो-धरालिङ्गनं सुरतप्रयोज्यग्राम्यकरणे दोलायितबन्धे ऊरुयुगलालिङ्गनमिति विवेकः। अत्र वात्स्यायनीयः। "बाह्यमाभ्यन्तरं चेति द्विविधं रत-मुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्॥ द्वितीये सुरतं साक्षा-न्नानाकरणकल्पितम्।" इति। किन्तु केवलमत्यन्तं मातुर्जनन्या यौवनं तारुण्यमेव वनं सुपुष्पितोद्यानं तस्य च्छेदे विदारणे वयं कुठाराः परशव एव यौवनस्य पुत्रोत्पत्त्यवधिकत्वात्तदुच्छेदनसाधनभूता एव न त्वर्थान्तरसाधकाः अतो निरर्थकं मज्जन्मेति भावः॥ ४५॥

संसार छेदनेके लिये ईश्वरके चरणकमलोंका विधिवत् ध्यान न

किया, स्वर्गद्वार खुलनेके लिये कोई निपुण धर्म भी संचय न किया और नारीके पुष्ट पयोधर और दोनों जंघा स्वप्नमें भी छातीसे न लगाये, केवल हम माताके यौवनरूपी वन काटनेके हेतु कुल्हाडे ही उत्पन्न हुए ॥ ४५ ॥

नाभ्यस्ता प्रतिवादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ४६ ॥

नेति ॥ दम्यते भज्यते अनयेति दमनी भञ्जनी प्रतिवादिवृन्दानां प्रतिभटवादीश्वरनिवहानां दमनी अथवा प्रतिवादिनां वृन्दानि दमयतीति तथोक्ता संप्रदायशुद्धदेशिकाचार्यशिक्षानिबन्धनानिष्कृष्टकर्तृप्रयुक्तवीर्योतिशयवर्तमानप्रतिवादिपाण्डित्यगर्वनिर्वाणसमर्थेत्यर्थः । "कृत्यल्युटो बहुलम्" इत्युभयत्रापि कर्मकर्तरि ल्युट् टित्वात् ङीप् । तथा विनीतानां साधूनामुचितसहृदयदुर्हृदयाह्लादिनीत्यर्थः । यद्वा विनीतानां विनयविधेयत्वादि गुणोपेतानां शिक्षितानामीति यावत् । उचिता अभ्यासार्हा । "अभ्यासेऽप्युचितं न्याय्यम्" इत्यमरः । विद्या वेदशास्त्रपुराणादिरूपा नाभ्यस्ता नाभ्यासविषयीकृता सम्यक् न परिशीलितेति यावत् । अधीतापि विद्या सम्यक्परिशीलनाभावे फलवदर्थावबोधापर्यवसायित्वादनधीतप्रायैव भवतीति यावत् । "आवृत्तिरसकृदुपदेशात्" इति न्यायेन तत्परिशीलनस्य कल्पोक्तेश्च सर्वथा परिशीलनयैव प्रथमत अनधीतैव चेन्न तत्र प्रत्युत्तरावकाशः । एवं व्यवस्थायां सत्यां "विद्या नाम नरस्य रूपमधिकम्" इत्यादिवचनेन कीर्तिप्रतिष्ठाविज्ञानादिफलसाधनतया अध्ययनपूर्वकमभ्यसनीयेति बोधिता विद्या नाधीता नाभ्यस्ता च । ततस्तत्साध्यफलजातमपि न संगृहीतमिति भावः । तथा करिकुम्भाः पीठानीव तेषां दलनैर्विदारणैरथवा करिकुम्भपीठानि दलयन्तीति तथोक्तानि तैः शत्रुसेनासंरम्भविजृम्भमाणकरिकुम्भस्थलपाटननिराघाटपाटवैरित्यर्थः । "दल विदलने" इति धातोः पूर्ववल्ल्युट् । खड्गाग्रैः यशः कीर्तिं नाकं स्वर्गम् । "स्वर्गान्तरिक्षयो-

---

१ भुवि इति पाठान्तरम् ।

नोकः " इत्यमरः । न नीतं न प्रापितम् । क्षत्रधर्मेण लोकान्तरश्लाघनीयकीर्तिरपि न सम्पादितेत्यर्थः । यथा लोके प्रासादाद्युन्नतस्थानं प्रापणीयं वस्तु वेणुदण्डाग्रादिना प्रापयन्ति तद्वदिति ध्वनिः । अथवा खड्गाग्रैः खड्गधाराभिः साधनैर्यानि करिकुम्भपीठानां दलनानि विदारणानि तैर्हेतुभिः शत्रुसेनादन्तिनिवहारुंतुदखड्गप्रहारैरित्यर्थः । यशः नाकं न नीतम् । "कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः ।" इत्यादिवचनैः स्वसाधनत्वेन निवेदिता कीर्तिर्न सम्पादिता । ततस्तत्साध्यफललाभो न जात इति भावः । अत्र "क्षितितले किं जन्म कीर्तिं विना " इति वचनाज्जन्मसाफल्यार्थं कीर्तेः पृथङ् मुख्यत्वेन संपादनीयत्वादानुषङ्गिकफलत्वात्साधनान्तरत्वात्स्वर्गमात्रसाधकत्वाच्च " स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः"इत्यनेन पौनरुक्त्यमित्यवगन्तव्यम् । नाकं न नीतं यश इत्यत्र " नीवह्योर्न " इति वचनाद्द्विकर्मकान्नयतेः कर्मणि क्तप्रत्ययः । अत एव यशसः प्रथमान्तस्य प्रधानकर्मत्वम् । अन्यत " अकथितं च " इति । "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ " इति वचनात् । तथा चन्द्रोदये चन्द्रोदयसमये कान्तायाः प्रियतमायाः कोमलो मृदुलो यः पल्लवाधरः किसलयकल्पाधरोष्ठस्तस्य रसः अधरामृतमित्यर्थः । न पीतः नास्वादितः "तिक्तादौ चामृते चैव निर्यासे पारदे ध्वनौ । रसः " इति शब्दार्णवः । पल्लवाधरसुधा पीतेति पाठे स्पष्टोऽर्थः । अतो न तृतीयपुरुषार्थोऽपि संपादित इति भावः । तटस्थोद्दीपनविभावस्य चन्द्रस्य शृङ्गाररसनिमित्तकारणत्वात्तदुदयोक्तिः। तदुक्तं शृङ्गारतिलके- "मलयानिलचन्द्राद्यास्तटस्थाः परिकीर्तिताः।" इति।अतस्तारुण्यं यौवनं शून्यालये निर्जनगेहे दीपेन तुल्यं दीपवत् । " तेन तुल्यं क्रिया चेद्वतिः " इति वतिप्रत्ययः । निष्फलं निरर्थकमेव गतम् । यथा शून्यगृहदीपस्य कस्याचिदप्यनुपयोगान्निरर्थकत्वं तथा तारुण्यस्यापि कस्याचिदप्यर्थस्यासाधकत्वान्निरर्थकत्वमित्यर्थः । अहो इत्याश्चर्ये विषादे वा । तद्धितगतेयमुपमा ॥ ४६ ॥

नम्र जनोंकी प्रसन्नताके योग्य और वादियोंके समूहको दमन करनेहारी विद्याका अभ्यास हमने न किया,तरवारकी धारसे हाथीके मस्तकका पृष्ठभाग काटके स्वर्गलों अपना यश न पहुँचाया और चांदनी रातमें सुन्दर स्त्रीके कोमल अधरपल्लवका रसभी न पान किया तो इस भूमिपर हमारी युवा अवस्था योंही बीती जैसे शून्य मंदिरमें दीपक जलकर आपही ठंडा हो जाता है ॥ ४६ ॥

विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता ।
आलोलायतलोचनाः प्रियतमाः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेर्यते ॥ ४७ ॥

विद्येति ॥ कलङ्करहिता निष्कलङ्का सप्रमाणेत्यर्थः । विद्या नाधिगता नाभ्यस्ता नाधीतेति यावत् । "नाभ्यस्ता प्रतिवादिवृन्ददमनी" इत्यत्र उक्तभाव एवात्राप्यनुसंधेयः । वित्तं त्यागभोगपर्याप्तं धनं नोपार्जितम् । "यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता सच दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥" इत्युक्तेः । "धनमार्जय काकुत्स्थ धनमूलमिदं जगत् । अन्तरं नाभिजानामि निर्धनस्य मृतस्य च ॥" इत्यादिवचनेन च बहुफलसाधनतया आर्जनीयमित्युपदिष्टं वित्तं नार्जितं ततस्तत्साध्यफलमपि न साधितमिति भावः । ननु "अर्थानामार्जने दुःखमार्जितानां च रक्षणे । रक्षितानां व्यये दुखं धिगर्थं दुःखभाजनम् ॥ इति निषेधोक्तेः कथं तदुपार्जनाभावानुशोचनमिति चेत्सत्यम्, तस्याव्यवहितासंवादैहिकामुष्मिकफलजनकत्वेनाभ्यार्हतत्वात्पुरुषार्थपर्यवसनाच्च न दोष इति मन्तव्यम् । तथा समाहितेन सावधानेन प्रसन्नेनेत्यर्थः । मनसा अन्तःकरणेन । अन्तःकरणशुद्धिपूर्वकं विहितस्य कर्मणः फलजनकत्वं नियमादिति भावः । पित्रोर्मातापित्रोरित्यर्थः । मातापितरौ पितरौ ". इत्यमरः । "पिता मात्रा" इत्येकशेषः । शुश्रूषा परिचर्या सेवेति यावत् । "शुश्रूषा श्रोतुमिच्छायां परिचर्याप्रधानयोः ।" इति विश्वः । न सम्पादिता न कृता । "मातापितृसमं दैवं सर्वेषां न हि विद्यते । तस्मात्समर्चयेन्नित्यं पितरौ देवरूपिणौ ॥" इत्यादिवचनैः परमेश्वराराधनकल्पतया बहुफलदायकत्वेन कर्तव्येति बोधिता पितृसेवा न कृता । ततस्तत्साध्यफलमपि न सम्पादितमिति भावः । आलोले चञ्चले तरले आयते कर्णान्तविश्रान्ते च लोचने यासां ताः । जगन्मोहननयनविलासवत्य इत्यर्थः । प्रियतमा अत्यन्तमनोविनोदकारिण्यः सम्भोगयोग्याः समानुरागिण्यस्तरुण्य इत्यर्थः । अन्यथा रसाभासप्रसङ्गात् । स्वप्नेऽपि नालिङ्गिताः एतेनात्यन्तामिथ्याभूतस्वप्नालिङ्गनाभावानुशोचनेन जाग्रद्दशायां तस्यात्यन्तासम्भावितत्वं सूच्यते । ननु कामनिष्पत्त्यर्थमङ्गनालिंगना-

१ युवतयः । २ प्रेरितः । इति च पाठान्तरम् ।

धरचुम्बनादिकमावश्यकं तत्र पूर्वश्लोके अधरचुम्बनमुक्तं किंतु पूर्वतरश्लोकोक्तमेवालिङ्गनं पुनरत्राप्युक्तमतः पौनरुक्तदोषः प्रसक्त इति चेन्न । तत्र कतिपयालिङ्गनाभावमात्रानुशोचनमत्र तु सर्वाङ्गनालिङ्गनाभावानुशोचनमिति न दोषप्रसक्तिरिति वेदितव्यम् । किं त्वयं परिवर्तमानः काकैर्बलिभुग्भिरिवि अस्माभिरिति शेषः । परपिण्डेषु परान्नेषु लोलुपतया लालसतया सावमानपरपिण्डादनकाङ्क्षिभरितयेत्यर्थः । प्रेर्यते .याप्यते । न त्वर्थसाधकतयेति भावः " परान्नः परपिण्डादः " इत्यमरः । प्रपूर्वादीरयतेः । कर्मणि लट् । एतत्सर्वं कालविलसितमेवेति तात्पर्यम् । यद्यप्यत्र वैराग्यप्रकरणे धर्मार्थपितृशुश्रूषाविद्यायशोऽधिगमानां यथाकथंचित्पुरुषार्थोपयोगितया तदभावानुशोचनं वक्तुं युक्तं न त्वङ्गनालिङ्गनादिसम्भोगाभावानुशोचनम् । तदपि श्लोकत्रयेण त्रिवारासिद्धयर्थं कथयितुमत्यन्तायुक्तम्। ननु विद्याध्ययनाभावे द्विवारानुशोचनं न युक्तमिति चेन्न तस्याः उपादेयत्वेन शतकृत्वस्तदभावानुशोचनेऽप्यनौचित्याभावात् । अन्यस्य त्वनुपादेयत्वादेतदनुशोचनमनुचितमिव प्रतिभाति। तथापि तस्यापि पुरुषार्थमध्यपरिगणनया संपातापातत्वात्, प्रसूतिभाजो विश्वस्य स्त्रीपुंसाभ्यामेव निष्पन्नत्वात्कामस्य पुरुषार्थत्वेन च पितृऋणविमोचनहेतुभूततया च तादृशशास्त्रस्य :महापुरुषप्रणीतत्वात्।"धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।" इति भगवद्वचनात्द्विरुद्धस्यैवानुपादेयत्वात् । अत्र तु तदविरुद्धस्यैतत्कामस्य विवक्षितत्वेनोपादेयत्वाच्च तदभावानुशोचनमुचितम् । यद्वा लोके तावदुत्तमवस्त्वलाभे अधमवस्त्वपेक्षा तस्याप्यलाभे तदनुशोचनं प्रायशः प्रसिद्धम् । यथा पिपासितस्यालब्धशर्करापानकस्यारनालापेक्षायां तदलाभेऽनुशोचनं तद्वत्कालविप्रलब्धस्याधिगतपरमार्थकामापेक्षायां तदलाभेऽनुशोचनमुचितमेव । अत एव श्लोकत्रयेऽपि प्रतिश्लोकं पूर्वार्धे उत्तममध्यमभेदेन पक्षद्वयाभावानुशोचनमुक्त्वा अधमत्वातिशयेन तृतीयपक्षे तदभावानुशोचनमुक्तमित्यलमतिप्रपञ्चेन ॥ ४७ ॥

निष्कलंक विद्या नहीं पढ़ी, धन न कमाया, एकाग्रचित्त होके मातापिताकी सेवा न की, तथा चञ्चल और बडे नेत्रवाली स्त्रियोंको स्वप्नमेंभी गलेसे न लगाया किंतु पराये ग्रासका लोभ करते करते काकके समान सब समय योंही विताया ॥ ४७ ॥

अथ कालविकलनाविपाकवचनमाह—

वयं येभ्यो जाताश्चिरपरिचिता[1] एव खलु ते

---

[1] परिगता । इति पाठांतरम् ।

समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतनाः
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ४८ ॥

वयमिति ॥ वयं येभ्यो मातापितृभ्यो जाता उत्पन्नास्ते चिरपरिचिता एव चिरकालपरिचयवन्त एव विनष्टा एवेत्यर्थः । खलुशब्दोऽत्र निश्चये वाक्यालङ्कारे वा । तथा यैर्जनैः समं संवृद्धाः सम्यग्वृद्धिं गताः । संवृत्ता इति पाठे प्रवृत्ता इत्यर्थः । तेऽपि स्मृतिविषयतां स्मरणगोचरत्वं गमिताः प्रापिताः कालेनेति शेषः । तेऽपि विनष्टा इत्यर्थः । गमेर्ण्यन्तात्कर्मणि क्तः । "गतिबुद्धि०" इत्यादिना अणि कर्तुः कर्मणि चिण्यन्ते कर्तुश्च कर्मण इति वचनात् । अथवा गमिता गता इत्यर्थः । स्वार्थे णिचि "रामो राज्यमकारयत्" इतिवत् । इदानीं वार्धकावस्थायामेते वयं प्रतिदिवसं प्रत्यहम् । यथार्थेऽव्ययीभावः । आसन्नं समीपवर्ति पतनं निधनं येषां ते तथोक्ताः । अत एव सिकतास्मिन्नस्तीति सिकतिलं सैकतप्रायम् । "देशे लुबिलचौ च" इत्यनेन तदस्त्यस्मिन्नित्यर्थे इलच्प्रत्ययः । यन्नदीतीरं नदीतटप्रदेशस्तत्र ये तरवः वृक्षास्तैस्तुल्यावस्थां गताः समदशां प्राप्ताः स्मः क्षिप्रमेव यास्याम इत्यर्थः । एतत्सर्वं कालकृतमेव अन्यथा कथमन्यस्येदृक्सामर्थ्यमिति भावः । अत्र तरङ्गभङ्गस्याघातैः सिकतापनये अविलम्बेन तरूणां निर्मूलोन्मूलनतद्द्योतनार्थं नदीतीरस्य सिकतिलविशेषणम् । "स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादिमावेवमुन्नेयाः सिकतावति ॥" इत्यमरः । शिखरिणीवृत्तम् ॥ ४८ ॥

जिनके संग हम जन्मे थे उनको तो गये बहुत दिन बीते फिर जिनके साथ हम बडे हुए वेभी स्मरणपथमें गये अर्थात् मरे;अब हमभी दिन दिन गिरते देख पडते हैं, वालुकामय नदीतटके वृक्षके तुल्य दशाको प्राप्त हो रहे हैं ॥ ४८ ॥

अथ प्राणिनां विचार्यमाणे लेशस्याप्यवकाशो नास्तीत्याह—

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ।

१ संवृत्ता । २ पतनाद् । इति च पाठान्तरम् ।

शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ ४९ ॥

आयुरिति ॥ नृणां मर्त्यानामायुर्जीवितावधिकालो वर्षशतं शतसंवत्सरात्मकं परिमितं क्लृप्तं ब्रह्मणेति शेषः । " विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः । " इत्यमरः । तदर्धं तस्य वर्षशतस्यार्धं पञ्चाशद्वत्सरात्मकं रात्रौ गतमिन्द्रियव्यापारोपरमरूपनिद्रावस्थया गलितं भवतीत्यर्थः । परस्य तस्य जागरूकेण वर्तमानस्यार्धस्य पञ्चाशद्वत्सरात्मकस्यापरमन्यदर्धं पञ्चविंशतिसंवत्सरात्मकं बालत्ववृद्धत्वयोर्गतमज्ञानाशक्तत्वावस्थाविषयतया नष्टमित्यर्थः।द्वादशसंवत्सरात्मकमेकमर्धं बालत्वेऽन्यद्वृद्धत्वे इति विवेकः। शेषं पञ्चविंशतिसंवत्सरात्मकमेतदवशिष्टमेतदवशिष्टार्धं व्याधिभिः रोगैः वियोगदुःखैः पुत्रकलत्रादिविरहप्रयुक्तदुःखैः सहितं सत् सेवादिभिः स्वजीवनार्थं वित्तवत्परिचर्यादिकष्टकर्मभिर्नीयते अतिवाह्यते । अतो वारितरङ्गवच्चञ्चलतरे अतिचञ्चले क्षणिके इत्यर्थः । जीवे जीवने प्राणिनां सौख्यं सुखं कुतः न कुतोऽपीत्यर्थः । उक्तरीत्या विचार्यमाणे सुखलेशस्याप्यनवकाशादिति भावः ॥ ४९ ॥

प्रथम तो मनुष्यकी आयुष्यही सौ वर्षकी प्रमाण हुई है उसमेंसे आधी पचास वर्ष रात्रिको सोनेहीमें व्यतीत होती हैं, शेष आधीके तीन भाग करो, उनमेंसे प्रथम अंश बालपनके अज्ञानतामें जाता है, दूसरा वृद्धा ( जरा ) अवस्थामें जाता है जो बची सो व्याधि, वियोग, दुःख, पराई सेवा, कलह, हर्ष, शोक, हानि, लाभ इत्यादि नाना क्लेशमें व्यर्थ व्यतीत होती है । यदि सौ वर्षपर्यन्त जीवन हो तोभी लेखासे सुखके दिन कुछ नहीं निकलते । यह तो जलतरङ्गके समान जीवन है इसमें प्राणियोंको कहांसे सुख प्राप्त होगा ॥ ४९ ॥

अथ कालत्रययुक्तबाल्याद्यवस्थाक्रमेण मर्त्यः सर्वोऽपि म्रियत इत्युपसंहरति-

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु-
र्नरः संसारान्ते विशति यमधानीयवनिकाम् ॥ ५० ॥

क्षणमिति ॥ क्षणं क्षणमात्रमीपत्कालमित्यर्थः । अत्यन्तसंयोगे द्वितीया। बालः शिशुर्भूत्वा । तथा क्षणमपि कामेन मन्मथेन रसिकः शृङ्गाररसाभिनिविष्टः । यद्वा काम्यन्ते अभिलष्यन्ते इति कामाः कामिनीसम्भोगादिविषयास्तै रसिकोऽनुरागवान् युवा तरुणश्च भूत्वा । तथा क्षणं वित्तैर्हीनो निर्धनो भूत्वा। क्षणमपि सम्पूर्णविभवः परिपूर्णधनश्च भूत्वा । "अर्थरैविभवा अपि" इति पर्यायेष्वमरः । तथा क्षणं जरया जीर्णैः शिथिलैर्विश्लिष्टसंधिबन्धैरिति यावत्। अङ्गैरुपलक्षितः अत एव वलिभिर्विश्लथचर्मभङ्गीभिर्मण्डिता भूपिता चिह्नितेति यावत् । "मडि भूषणे" इति धातोः कर्मणि क्तः । तनुर्गात्रं यस्य सः तथोक्तो भूत्वा नरः सर्वोऽपीत्यर्थः ।' नटस्तत्तद्वेषधारी नर्तक इव संसारस्य बाल्यौवनाद्यवस्थानुभवरूपसंसारकपटनाटकस्य नाट्यप्रसङ्गाडम्बरस्य च अन्ते अवसाने यमो धीयतेऽत्रेति यमधानी यमराजधानी संयमनीनाम्नी यमपुरी । "करणाधिकरणयोश्च" इति ल्युट् । टित्वात् ङीप् । सा यवनिका प्रतिसीरा तिरस्करिणीव तां विशति मृतो भवति अन्यत्र प्रविष्टो भवतीत्यर्थः । "प्रतिसीरा यवनिका" इत्यमरः । नव विशेषाणि योज्यानि । उपमालङ्कारः । शिखरिणीवृत्तम् ॥ ५० ॥

यह मनुष्य क्षणमें बालरूप और क्षणमें युवा रसिक कामरूप, क्षणमें दरिद्री, क्षणमें धनाढ्य, क्षणमें बुढापेसे जीर्ण और सिकुडे चमडेवाला ऐसे रूप दिखाकर फिर नट ( बहुरूपिये ) के समान यमराजके नगरकी ओटमें छिप जाता है ॥ ५० ॥

अथ इह कश्चित्कुतश्चिद्भाग्योदयादित्थंभूतकालवैषम्यं ज्ञात्वा वैराग्याद्यदि यतिर्भवेत्तदा नैरपेक्ष्यस्तृणमिव जगज्जालमालोकयन्नवधीरितानुवर्तनेच्छू राज्ञा सह संवादं कर्तुं शक्नुयान्नान्यथा अतो निरंकुशत्वयतिभावोऽवश्यं सम्भावनीय इति विवेकिनां ज्ञापयितुं तत्संवादप्रकारमाह---

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मा[1]नधनातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥५१॥

---

1 मानद नाति० इति पाठान्तरम् ।

त्वमिति । त्वं रञ्जयतीति राजा महोन्नत इत्यर्थः । वयमप्युपासिताः सेविता गुरवः आचार्या यया सा तथोक्ता । "आचार्यवान् पुरुषो वेद" इति श्रुतेः। निरन्तरगुरुसेवातत्परेत्यर्थः । यद्वा उपासिता गुरूपासनावशात्सम्पादिता गुरुः श्रेष्ठा च या प्रज्ञा त्रैकाल्यगोचरबुद्धिविशेषप्रवृत्तिस्तया योऽभिमान आग्रहस्तेनोन्नता उत्कृष्टाः। त्वं विभवैर्धनसम्पद्भिः ख्यातः सर्वत्र प्रसिद्धः । तथा कवयो विद्वांसः। यद्वा विचित्रप्रबन्धवचनरचनाचातुरीधुरीणप्रतिभासम्पन्नाः कवयितारः नोऽस्माकं यशांसि कीर्तिं दिक्षु दिगन्तरालेषु प्रतन्वन्ति विस्तारयन्ति । एते महान्तः सन्ततपरिचर्याभिनन्दिताचार्यकृपाकटाक्षलब्धप्रज्ञाभिमानमानसमहोत्सवशालिनः ज्ञानविज्ञानसम्पन्ना मोक्षसाम्राज्यपट्टबद्धास्तृणीकृतत्र्यक्षपुरन्दरा इत्यस्मानपि कीर्तयन्तीत्यर्थः । तस्माद्वयमपि ख्याता एवेति भावः । अत इतः इत्थमनेन प्रकारेण त्वं चाहं चावां तयोः । "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषः । उभयोरप्यन्तरं तारतम्यं मानधनाभ्यामतिदूरमत्यन्तविप्रकृष्टम् । त्वं केवलं धनवान् वयं तु प्रज्ञाप्रयुक्ताभिमानधनवन्तः अतस्तव चास्माकं च सुमेरुसर्षपयोरिव महदन्तरमित्यर्थः । अतस्त्वमस्मासु विषये पराङ्मुखोऽनादरपरोऽसि यदि तर्हि वयमप्येकान्ततो निःस्पृहा निरपेक्षा अनादरपरा इत्यर्थः । त्वयीति शेषः । अनादरे व्यवस्थाने संसारे नास्माकमत्र प्रयोजनमस्ति तस्मात्दस्मास्वादरश्चेदस्माकमपि त्वय्यादरस्तद्वशादत्र स्थास्यामोऽन्यथान्यत्र गमिष्याम इति भावः । अत्र त्वं राजा वयमित्युपक्रमे वयमप्येकान्ततो निःस्पृहा इत्युपसंहारे च बहुवचनं प्रयुज्य आवयोरिति द्विवचनप्रयोगः कथमुपज्युत इति चेत्सर्वेषां समुदायविवक्षया आत्मसम्भावनायां बहुवचनप्रयोगेण वा युक्तत्वान्न कोऽपि विरोधः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५१ ॥

तू राजा है तो मैंभी गुरुकी सेवा कर बुद्धिमान् हो उच्च पदको प्राप्त हुआ हूं, तू यदि धनसे प्रसिद्ध है तो हमारी विद्याका यह कविलोग देशान्तरमें वर्णन कर रहे हैं, इस प्रकार हम दोनोंमें मान धनादिका बहुत अन्तर है इसलिये तू हमसे यदि मुख फेरता है तो हमभी तुमसे अधिक निःस्पृह हैं ॥ ५१ ॥

उक्तमेवार्थं भङ्ग्यन्तरेणाह—

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरोपशमनविधावक्षयं पाटवं नः ।

१ यावदित्थं । २ ज्वर । इति च पाठान्तरम् ।

**सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामाः**
**मय्यप्यास्था न [1]ते चेत्त्वयि मम [2]नितरामेव राजन्ननास्था ५२**

अर्थानामिति ॥ त्वमर्थानां धनानामीशिषे ईश्वरो भवसि तथा वयमपि च यावानर्थो यावदर्थं यावदभिधेयं यथा तथेत्यर्थः । "यावदवधारणे" इत्यव्ययीभावः । "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।" इत्यमरः । गिरां शास्त्रवचनानामीश्महे अशेषशास्त्रविशेषार्थानां प्रभवाम इत्यर्थः । विद्महे इति पाठे गिरां यावदर्थमित्यर्थः। विद्महे जानीमहे। तथा त्वं शूरः शौर्यवान् रिपुदलने इति शेषः । तथा नोऽस्माकं वादिदर्पव्युपशमनविधौ प्रतिवादिगर्वनिर्वापणविधाने। "विधिर्विधाने दैवे च" इत्यमरः । अक्षयमविनाशि पाटवं सामर्थ्यमस्तीति शेषः । त्वां धनाढ्या धनस्वामिनः । "इभ्य आढ्यो धनी स्वामी" इत्यमरः। सेवन्ते भजन्ते । तद्विनाशार्थं तदभिवृद्ध्यर्थं चेति भावः । यद्वा धनाढ्याः धनाढ्यत्वाभिलाषिणो राजसेवया धनसंपादनेच्छव इत्यर्थः। त्वां सेवन्ते । मामप्यस्मानपीत्यर्थः । मतिमलहतये बुद्धिजाड्यनिवृत्त्यर्थम् । "यस्तु पर्यटते देशान् यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥" इति वचनादिति भावः । यद्वा मतिमलानि रागद्वेषादयस्तेषां हतये प्रक्षालनार्थं बुद्धिशुद्धिद्वारा ज्ञानावाप्त्यर्थमित्यर्थः । श्रोतुं कामोऽभिलाषो येषां ते श्रोतुकामाः शुश्रूषवः । "गुरुमुखाच्छ्रोतव्यम्" इति न्यायेनास्मन्मुखाच्छास्त्रार्थश्रवणेच्छवः । "गुरुशुश्रूषया विद्या" इत्युपदेशवचनविश्वासवन्तः शिष्या इत्यर्थः । सेवन्ते इति सम्बन्धः । "तुं काममनसोरपि" इति तुमुनो मकारलोपः । अतो हे राजन्, ते मय्यपि आस्था न चेदनादरो यदि तदा मम त्वय्यपि नितरामत्यन्तम् । अव्ययादाम्प्रत्ययः । अनास्था निरपेक्षत्वादिति भावः । किं त्वेषोऽहं गतोऽस्मि अन्यत्र. गमिष्यामीत्यर्थः । वर्तमानसामीप्ये वर्तमानप्रत्ययः । स्वस्य निरंकुशत्वद्योतनार्थमेतच्छब्दप्रयोगः । पूर्वश्लोकोक्तभाव एवात्रप्यानुसन्धेयः । स्रग्धरा वृत्तम् ॥ ५२ ॥

तुम धनके कोशके ईश्वर हो तो हमभी विद्याके कोशके ईश्वर हैं, तुम युद्ध करनेमें वीर हो तो हमभी शास्त्रार्थ करनेवाले वादिप्रतिवादियोंके अभिमानके तोडनेमें कुशल हैं, तुम्हें वडे लोग धनाढ्य अथवा धन चाहनेवाले आशाग्रसित सेवन करते हैं तो हमेंभी अपनी बुद्धिका अज्ञान दूर करनेको शास्त्र सुननेकी इच्छावाले सेवते हैं

1 चेत्तत्त्व० । 2 सुतरामेव राजन्नतोऽस्मि इति च क्षपापाठांतरम् ।

तो हे राजन् ! यदि हमारे विषय तुम्हारी श्रद्धा नहीं है तो हमारीभी तुममें नहीं है, लो हम अब जाते हैं ॥ ९२ ॥

अथ कथमन्यत्र गमिष्यसीत्याशङ्कायामस्माकं नित्यसन्तुष्टान्तःकरणत्वान्न किंचिदपि कृच्छ्रमित्याह—

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इव[2] परितोषो निर्वि[3]शेषो विशेषः ।
स तु भवति दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥९३॥

वयमिति ॥ हे राजन्, वयमिदानीं वल्कलैर्दारुत्वङ्गनिर्मितचीवरैः परितुष्टाः सन्तुष्टाः त्वं दुकूलैः क्षौमैर्विचित्रचीनाम्बरैरित्यर्थः । परितुष्ट इति वचनपरिणामेन संबन्धः । परितोषः अस्माकं तव सन्तोषः सम इव तुल्य एव । इवशब्दोऽत्रावधारणार्थकः । विशेषः अन्यतरोत्कर्षस्तु निर्विशेषो विशेषरहितः मामकतावकपरितोषयोरन्तरं न किंचिदप्यस्तीत्यर्थः । सम इव परितोषो जायते को विशेषः इति वा पाठः । किंतु यस्य पुंसस्तृष्णा धनलिप्सा विशाला अत्यायता स पुमान् दरिद्रोऽकिंचनो भवतु न त्वन्य इत्यर्थः । सम्भावनायां लोट् । कथमेतदित्याशंक्योक्तमर्थमर्थान्तरन्यासेन द्रढयति। मनसि च परितुष्टे चित्ते येनकेनचित्संतुष्टे सति कः पुमानर्थवान् द्रव्यसंपन्नः कश्च वा दरिद्रः द्रव्यहीनो न कोऽपीत्यर्थः । मनःपरितोषे लाभालाभयोरकिञ्चित्करत्वादिति भावः । अतो न किंचिदप्यस्माकं कृच्छ्रमिति वेदितव्यम् ॥ ९३ ॥

हम वृक्षके वकले पहिरके संतुष्ट हैं, तुम दुकूलोंसे हो जब हमारी तुम्हारी तुष्टि सम ठहरी तब संतोष निर्विशेष हुआ अर्थात् भेद न रहा, दरिद्री वह होता है जिसे वडी तृष्णा है, जब मन संतोषसे पूर्ण हुआ तो फिर कौन दरिद्री और कौन धनवान् है ॥ ९३ ॥

तथापि शरीरयात्राया अन्यथा संभाव्यमानत्वान्न दुर्जनाविनयं सोढुं शक्नोमीत्याह—

---

१ च लक्ष्म्या । २ इह । ३ निर्विशेषाविशेषः । इति च पाठान्तरम् ।

फलमलमशनाय स्वादु पानाय तोयं
क्षितिरपि शयनार्थं वाससे वल्कलं च ।
नवघनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ५४ ॥

फलमिति ॥ फलमशनाय भोजनाय क्षुन्निवारणार्थमित्यर्थः । अलं पर्याप्तम् । अलमिति पर्याप्त्यर्थग्रहणात् " नमः स्वस्ति० " इत्यादिना चतुर्थी । एवमुत्तरत्रापि द्रष्टव्यम् । तथा स्वादु मधुरम् । " त्रिष्विष्टे स्वादु मधुरम् " इत्यमरः । तोयमुदकं पानाय तृष्णोपशान्त्यर्थमलम् । क्षितिरपि शयनार्थं संवेशनायालम् । तथा वल्कलं च वाससे आच्छादनार्थमलम् । अतः नवं सद्यः सम्भावितं यद्धनं तदेव मधुपानं मद्यपानं तेन भ्रान्तान्यन्यमार्गवर्तीनि सर्वाणीन्द्रियाणि येषां तेषाम् । धनमधुपानस्य चित्तविकाराविवेकादिकारित्वेन यथाकथंचिद्विवेकलेशसंभवे तन्निवृत्तिर्धनविशेषणमत्तस्य । दुर्जनानां दुर्मार्गशालिनामविनयं दुर्विनयमनादरमिति यावत् । अनुमन्तुमङ्गीकर्तुं नोत्सहे न मृष्यामि । सति गत्यन्तरे किमर्थं सोढव्यमिति भावः ॥ ५४ ॥

वहुतसे फल भोजनके लिये, मधुर जल पीनेको, पृथ्वी सोनेको और वृक्षके वक्कले पहिरनेके निमित्त हैं फिर थोडासा धनरूपी मदिरापानवाले जिनकी सब इन्द्रियां घूमती हैं ऐसे दुर्जनोंका निरादर हम क्यों सहें ५४

एनमेवाथ भङ्ग्यन्तरेणाह—

अशीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ५५ ॥

अशीमहीति ॥ वयं भिक्षान्नमशीमही भोक्ष्यामः । " अश भोजने " इति धातोर्लिङ् । आत्मनेपदोत्तमपुरुषवहुवचनम् । एवमुत्तरत्रापि द्रष्टव्यम् । तथा आशा एव वासो वसीमहि आच्छादयिष्यामः दिगम्बरा भविष्याम इत्यर्थः । महीपृष्ठे भूतले शयीमहि स्वप्स्यामः । अतः इश्वरैः राजभिः किं कुर्वीमहि करिष्यामः न किमपीत्यर्थः । शरीरयात्राया अन्यथैव सम्भाव्यमानत्वादिति भावः । इत्थं स्थितित्वमेव ब्रह्मनिष्ठयतिलक्षणम् । तदुक्तं महाभारते उद्योग-

१ विस० । इति । २ शयनमवनिपृष्ठे वल्कले वाससी च । इति च पाठान्तरम् ।

पर्वणि धृतराष्ट्रं प्रति सनत्सुजातेन" येन केनचिदाच्छन्नो येन केनचिदाशितः। यत्र कचन शायी स्यात्तं देवा ब्राह्मणं विदुः ॥" इति । उक्तं च महाभागवते—"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नो वांघ्रिपाः परभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किमु न सन्ति महानुभावाः कस्माद्भजन्ति यतयो धनदुर्मदान्धान् ॥" इति । तथा चोक्तं शिवगीतायाम्—"संवीतो येन केनाश्नन् भक्ष्यं वाभक्ष्यमेव वा।शयानो यत्र कुत्रापि सर्वात्मा मुच्यतेऽत्र सः॥"इति॥५५

हम भिक्षान्न भोजन करेंगे, दिशारूप वस्त्र पहनेंगे अर्थात् नग्न रहेंगे और पृथ्वीतलपरही सोवेंगे, जब हम इस प्रकार वर्तन करेंगे तो हमारा पृथ्वीश्वरों ( राजाओं ) से क्या काम है ? ॥ ५५ ॥

अथ स्वस्य राजदर्शनयोग्यतायाः प्रकटतापदेशेन तं निन्दति—

न नटा न विटा न गायका न च सभ्येतरवादचुञ्चवः ।
नृपमीक्षितुमत्र के वयं स्तनभारानमिता न योषितः ॥५६॥

नेति ॥ वयं नटा विविधवेषधारिणो विचित्रनाटयनिपुणाः न भवाम इत्यर्थः। येन नयनानन्दो भवेदिति भावः । विटा एकविद्याः नायकानुकूलनचतुराः न भवामः । येन तत्तन्नायिकानुकूल्यप्रयोजनं सिद्धयेदिति भावः । तदुक्तमलङ्कारशास्त्रे—" नायकानां नायिकानुकूलने सहायाः पीठमर्दविटचेटविदूषकादयः " इति । तल्लक्षणं च तत्रैव । " किञ्चिदूनः पीठमर्द एकविद्यो विटः स्मृतः । सन्धानकुशलश्चेटो हास्यप्रायो विदूषकः ॥ " इति । गायन्तीति गायकाः सङ्गीतकुशलाः ते न भवामः । येन श्रवणानन्दो भवेदिति भावः । सभायां साधवः सभ्याः । " तत्र साधुः " इति यत्प्रत्ययः । तेभ्य इतरे ये वा अशिष्टगर्ह्यालापाः साधारणजनमनोविनोदमात्रपर्यवसायिनो न तु शास्त्रसंवादिन इत्यर्थः । यद्वा सभ्या विद्वांसस्तदितरे साधारणजनास्तेषां वादास्तद्वदनयोग्यवाक्यानि तैर्वित्ताश्चुञ्चवो हास्यकारिण इत्यर्थः । न भवाम येन मनोविनोदो भवतीति भावः । " तेन वित्तश्चुञ्चुप्चणपौ " इति चुंचुप्प्रत्ययः । तथा स्तनभारैः कुचकुम्भभारैरानमिता ईषन्नम्राङ्ग्यः योषितोऽपि न भवामः । येन संरम्भसम्भोगौत्सुक्यं भवेदिति भावः । अतो नृपं राजानमीक्षितुं द्रष्टुमत्र नटादिषु च वयं के न केचिदित्यर्थः । एतेषामन्यतरत्वे योग्यता स्यादिति भावः ।

१ गायना । २ परद्रोहनिबद्धबुद्धयः । ३ नृपसद्मनि नाम । ४ कुच इति च पाठान्तरम् ।

एतेन असभ्यानामेवावकाशप्रदो न तु सभ्यानामिति नृपस्य निन्दा गम्यते। नृप वीक्षितुमिति पाठस्तदा हे नृपेत्यामन्त्रणं त्वामिति शेषः। अन्यदुक्तार्थं वैतालीयाख्यमर्धसमवृत्तम्। "षड् विषमेऽष्टौ समे कलाः षट् च समे स्युर्नो निरन्तराः। न समात्र पराश्रिताः कला वैतालीयेऽन्ते रलौ गुरुः॥" इति लक्षणात्॥ ५६॥

न तो हम नट हैं, न परस्त्रियोंसे लम्पट हैं, न गवैये हैं, न झूठे लवार हैं और न बडे २ स्तनवाली स्त्री हैं फिर हमको राजाका दर्शन किस तरहसे होगा? ॥ ५६ ॥

निन्दामेव चतुर्भिः प्रपञ्चयति—

विपुलहृदयैरीशैरेतज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः॥ ५७॥

विपुलेति॥ पुरा पूर्वकाले विपुलहृदयैर्महमानसैरुदारबुद्धिभिरित्यर्थः। ईशैर्हरिश्चन्द्रादिसार्वभौमैः। एतत्परिदृश्यमानं जगद्भूमण्डलं जनितमुत्पादितं समग्रधर्माचरणे संस्थापितमित्यर्थः। तथा परैर्ययातिप्रभृतिभिरीश्वरैर्विधृतं विशेषेण धृतं सम्यक्परिपालितमित्यर्थः। तथान्यैर्बलिप्रभृतिभिर्विजित्य शत्रुजयेन स्ववशं कृत्वा तृणं यथा तृणमिव दत्तमर्थिसात्कृतम्। एतेनैतेषां महौदार्यं सूच्यते। इह हि इदानीमपि अन्ये धीरा धैर्यशालिनश्चतुर्दशभुवनानि भूरादिचतुर्दशविष्टपानि भुञ्जते अनुभवन्ति। तादृक्सामर्थ्यसम्पन्नास्तिष्ठन्तीत्यर्थः। "भुज पालनाभ्यवहारयोः" इति धातोर्लट्। "भुजोऽनवने" इत्यात्मनेपदम्। अतः कतिपयानि च तानि पुराणि च तेषां द्वित्राणां पञ्चषाणां वा पुराणामित्यर्थः। स्वाम्ये आधिपत्ये सति पुंसामेषः परिदृश्यमानो मदो दर्प एव ज्वरः सन्निपातज्वरः बुद्धिभ्रंशहेतुत्वात् कः किमर्थमित्यर्थः। अतः पुरातनमहाराजचरितानुस्मरणाल्लज्जितव्यं न तून्मत्तेन भवितव्यमिति भावः॥ ५७॥

---

१ धन्यैः कैश्चि० इति पाठान्तरम्।

कोई महात्मा ऐसे भये जिन्होंने जगत्को उत्पन्न किया, कोई ऐसे भये जिन्होंने धारण किया, कोई ऐसे हुए जिन्होंने इसे जीतकर तुच्छ समझ औरोंको दे दिया और कोई ऐसे हैं कि चौदह भुवनको पालते हैं। अब यहां देखो कि थोडेसे गांवकी ठकुराई पाकर जो अभिमानका ज्वर लोगोंको होता है वह क्या ? ॥ ९७ ॥

अभुक्तायां यस्यां क्षणमपि न जातं नृपशतैः
भुवस्तस्या लाभे क इव बहुमानः क्षितिभृताम् ।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्त्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ५८ ॥

अभुक्तायामिति ॥ नृपशतैरनेकभूपालैर्यस्यां भुवि अभुक्तायामननुभूतायां सत्यां क्षणं क्षणमात्रमपि जातम् । किन्तु क्षणमात्रव्यवधानरहितमेवानुभूयते इत्यर्थः । तस्या भुवो लाभे प्राप्ते क्षितिभृतां राज्ञां क इव । इवशब्दो वाक्यालङ्कारे । "इवेतीपदर्थोपमावाक्यालङ्कारेषु" इति गणव्याख्याने । बहुमान उत्कर्षो न कोऽपीत्यर्थः । सर्वसाधारण्यादित्यर्थः । किन्तु तस्या भुवोंऽशस्यापि अंशे भागे च तथा तस्यांशस्य योऽवयव एकदेशस्तस्य लेशे अत्यल्पकोणेऽपि चेत्यर्थः । पतयः ईश्वरा जडाः मन्दा विषादे स्वल्पतमभूखण्डाधिपतयो वयं जाता इति विषादे दुःखे कर्तव्ये सति प्रत्युत वैपरीत्येन मुदं सन्तोषं विदधति कुर्वन्ति मोदन्त इत्यर्थः । अहो महानयमेतेषामविवेक इत्यर्थः । "प्रत्युतेत्युक्तवैपरीत्ये" इति गणव्याख्याने ॥ ५८ ॥

सैकडों राजा इस पृथ्वीका अपनी २ मान चले गये पर उनसे यह भोगी न गई तो इसके लाभ होनेसे राजाओंको क्या अभिमान करना चाहिये ? अब तो उसके टुकडेका टुकडा फिर तिसका टुकडा उससेभी न्यून अंश पाके अपनेको भूपति मानते हैं तो जो बात सोच करनेको योग्य है उसमें मूर्खलोग देखो उलटे आनंदही मानते हैं यह आश्चर्य है ॥ ५८ ॥

---

१ यातं । २ क्षितिभुजां इति च पाठान्तरम् ।

आस्तां तावत् क्षुद्रनृपवार्ता तद्याचकापरास्तु ततोऽप्यत्यन्तक्षुद्रा इत्याह—

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं न त्वणुः
स्वांशीकृत्य तमेव सङ्गरशतै राज्ञां गणा भुञ्जते ।
ते दद्युर्ददतोऽथ वा किमपरं क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान्पुरुषाधमान्धनकणान्वाञ्छन्ति तेभ्योऽपि ये ॥५९

मृत्पिण्ड इति ॥ जलरेखया समुद्रकारणजलरेखया जलधारया च वलयितो वेष्टितपुञ्जीकृतश्च योऽयं परिदृश्यमानः सर्वोऽशेषोऽपि मृत्पिण्डश्च अणुर्नेनु । तं तादृशमृत्पिण्डमेव सङ्गरशतैर्युद्धशतैः स्वांशीकृत्य स्वभागीकृत्य ये राज्ञां गणा भुञ्जते अनुभवन्ति ते राजगणा दद्युर्हि अर्थं वितरेयुर्वा । ददातेर्भविष्यति लिङ् । अथवेति पक्षान्तरे । ददतो वितरन्तो वा । ददातेर्वर्तमाने शतृप्रत्ययः । "नाभ्यस्ताच्छतुः" इति नुमभावः । ददतेऽथवेति वा पाठः । अपरमन्यद्दुष्करादिकं किमस्ति किमपि नास्त्येवेत्यर्थः । भृशमत्यर्थं क्षुद्रा हीना दरिद्रा दीनाश्च । अनेकसंयुगक्लेशार्जितमृत्पिण्डभोक्तृत्वात् क्षुद्रत्वं तत्राप्यंशभागित्वाद्दारिद्र्यत्वं चावगन्तव्यम् । ततस्तेभ्यः क्षुद्रदरिद्रेभ्यो राजगणेभ्यो ये पुरुषाधमा धनकणान् धनलेशान् वाञ्छन्त्यभिलपन्ति तान् पुरुषाधमान् मानुषापसदान् धिग्धिक् । कूर्पराधःप्रसृतजलपानवत्तथाविधक्षुद्रयाच्ञायाः परमनैच्यावहत्वात्तद्याचितारस्ततोऽपि नीचास्ते नराधमाः पौनःपुन्येन निन्द्या इत्यर्थः । "धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः । "उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥" इति वचनात् पुरुषाधमानिति द्वितीया । वीप्सायां द्विर्भावः । स्वदग्धकुक्षिकुण्डपूर्णैकप्रयोजनायाः पुरुषाधमत्वजनन्याः क्षुद्रयाच्ञाया धिक्कारं विधाय स्वतःसिद्धानन्दव्याकुलस्य पुरुषोत्तमत्वजनकस्य यतिभावस्यैव जीवातुमार्गणं विधेयमिति तात्पर्यम् ॥५९॥

यह भूमि एक मिट्टीका लोंदा पानीकी रेखासे घिरा हुआ है, पहिले आपही यह सम्पूर्ण छोटासा है तिसे राजा सैकडों लडाइयां लडलडकर अपना अपना भाग बांटके किसी प्रकारसे भोगते हैं, ऐसे क्षुद्र

---

१ अंगीकृत्य स एव संयुगशतै राज्ञो गणैर्भुज्यते । २ तद्द्युर्ददतेऽथ वा न किमपि इति च पाठांतरम् ।

और दरिद्रीको जो वडे दानी कहते हैं, अवभी देखें दान करते हैं या नहीं यों कह कहके उनसे धनके कणिकाकी वांछा करते हैं तिन अधम पुरुषोंको धिक्कार है ॥ ५९ ॥

किं वहुना स एव सफलजन्मेति निगमयति—

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलङ्कारविधये[1] ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ६० ॥

स इति ॥ स पुमान् कोऽपि कश्चिदेव जातः सफलजन्मासीत्। न सर्व इत्यर्थः । कोऽसावित्यत आह। यस्य पुंसः धवलं शुभ्रं कपालं शिरोऽस्थि मदनरिपुणा शम्भुना उच्चैरुन्नते सर्वोपरिवर्तमान इत्यर्थः । मूर्ध्नि निजमस्तके अलङ्कारविधये भूषणविधानाय विनिहितं निक्षिप्तं स एक एवेति सम्बन्धः। सकलसुरासुरमौलिखचितमणिप्रभादीपितपादारविन्दस्य कैलासमेरुगिरिश्वरस्य भगवतः शम्भोः कपालशेखरत्वादिति भावः । किन्त्वधुनेदानीं प्राणत्राणे तुच्छप्राणसंरक्षणे प्रवणा सक्ता मतिर्येषां तैस्तथोक्तैरत एव नमद्भिर्नमस्कुर्वाणैः कैश्चित कतिपयैरेव नृभिर्मनुष्यैः । हेतौ तृतीया । अथवा नमद्भिः पुंसां नरवरंमन्यानां राज्ञामयं परिदृश्यमानः अतुलो निःसीमो दर्पो मदः स एव ज्वरभरो ज्वरोद्रेकः अपभ्रंशहेतुत्वात् कः किमर्थमित्यर्थः । मरणानन्तरेऽपि यस्य शिरः आदरपूर्वकं महदुपादेयं भवति स एव सफलजन्मा पुरुषोत्तमश्च। अन्यः सर्वोऽपि निष्फलजन्मा पुरुषाधमश्चेति भावः ॥ ६० ॥

पहिले तो ऐसे पुरुष हुए हैं कि जिनके उज्ज्वल मस्तककी माला बनाकर तो शिवजीने धारण कर लिया कि जिससे कंठका भूषण हो, अब देखो अपने प्राण पोषण करनेवाले तथा नमस्कार करनेवाले थोडेसे मनुष्योंसे प्रतिष्ठा पाकर अपनेको नरवर माननेवाले राजा क्यों अभिमानके ज्वरसे भारी हो रहे हैं ? ॥ ६० ॥

---

[1] विषये इति पाठान्तरम्।

अथ मनोनियमनदक्षस्यैव यतित्वात्तत्प्रसङ्गानन्तरं मनःसम्बोधनपूर्वकं तन्नियमनप्रकारमाह—

परेषां चेतांसि प्रति दिवसमाराध्य बहुधा
प्रसादं किं नेतुं विशसि हृदयं क्लेशकलितम्।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगणो
विविक्तः सङ्कल्पः किमभिलषितं पुष्यति न ते॥ ६१॥

परेषामिति॥ हे हृदय! प्रतिदिवसमनुदिनं बहुधा बहुप्रकारैः "संख्याया विधार्थे धा" इति धाप्रत्ययः। परेषां चेतांसि आराध्य प्रसाद्य तत्कालोचितानुवर्तनैरुन्मुखीकृत्येत्यर्थः। क्लेशेनातिप्रयासेन कलितं सम्पादितं प्रसादमनुग्रहं नेतुं प्रापयितुं मनांसीवेत्यर्थः। नयतेर्द्विकर्मकात्तुमुन्प्रत्ययः। विशसि किं प्रवर्तसे किमित्यर्थः। अथ यथाकथञ्चित्पराचित्तप्रसादनेनाभिलषितं साधयिष्यामि अतः किमर्थमेव निषिध्यत इत्यत आह--प्रसन्न इति। त्वयि अन्तरभ्यन्तरं प्रसन्ने समाहिते सति बहिर्मुखत्ववैमुख्येन स्वस्थान एव स्थिते सतीत्यर्थः। स्वयं स्वप्रयत्नं विनैवेत्यर्थः। उदित आविर्भूतश्चिन्तामणिगणः चिन्तारत्ननिचयरूप इत्यर्थः। एवमेव चिन्तामणिरशेषाभिलषितदानसमर्थस्तद्गणश्च किं वक्तव्यमिति भावः। विविक्तो निष्कलङ्कः सङ्कल्प इच्छाविशेषः ते तवाभिलषितं वाञ्छितं न पुष्यति किं न पूरयति किम्। पूरयत्येवेत्यर्थः। अतः आत्मप्रसक्त्यैवाभिलषितप्राप्तौ किमन्यप्रसादनायासेनेत्यर्थः। अन्यथा संस्यक्षेत्रं विहायारण्यकर्षणन्यायः प्रसज्येतेति तात्पर्यम्॥ ६१॥

हे मन! तू पराये चित्तमें प्रसन्न करनेको किस प्रसादके लेनेके हेतुसे क्लेशसे मलीन होता हुआ घुसता है? तू सर्व संकल्प अर्थात तृष्णा छोडकर अपनेहीमें प्रसन्न होकर चिन्तामणिकेसी गुण प्रकट करेगा अर्थात् शांति संतोषादि गुण ग्रहण करेगा तो क्या तेरी अभिलाषा पूरी न होगी?॥ ६१॥

एवं मनःप्रसादे गुणमुक्त्वा तस्यागुणत्वमाह—

परिभ्रमसि किं मुधा क्वचन चित्त विश्राम्यतां

---

१ हा। २ विमुक्त इति च पाठांतरम्।

स्वयं भवति यद्यथा भवति तत्तथा नान्यथा।
अतीतमननुस्मरन्नपि च भाव्यसंकल्पय-
न्नतर्कितसमागमाननुभवामि भोगानहम् ॥ ६२ ॥

परिभ्रमसीति ।। हे चित्त ! मुधा व्यर्थं किं किमर्थं परिभ्रमसि सञ्चरसि न परिचरितव्यमित्यर्थः। प्रयोजनाभावादिति भावः। तर्हि किं कर्तव्यमत आह। कचन कुत्रचित् स्थले विश्राम्यतां स्थीयतां स्वस्थान एव स्वैरं वर्ततामित्यर्थः। नन्वेवं चेत्कथं कार्यसिद्धिरित्यत आह। यत्कार्यं यथा येन प्रकारेण भवति तत्तथा स्वयमप्रयत्नेनैव भवति अन्यथा वैपरीत्येन न भवति। "यद्भावि तद्भवत्येव" इत्यादि वचनात्सर्वमेतद्दैवायत्तमित्ति भावः। अतो विश्राम्यतामिति संबन्धः। विश्रमे किं फलमित्यत आह। अहमतीतमतिक्रान्तमर्थमननुस्मरन्नचिन्तयन्ननुशोचयन्नित्यर्थः। तथा भावि चापि भविष्यदर्थमपि चावस्तुसामस्त्ये नपुंसकत्वनिर्देशः। असंकल्पयन्ननाकांक्षन् अतर्कितोऽनभ्यूहितः समागमो येषां तानचिन्तितोपनतानित्यर्थः। भोगान् विषयाननुभवामि दैववशात्संभावितार्थान् भोक्ष्यामि। वर्तमानप्रत्ययः। यद्वा अनुभवामि भुंजे। अतो मदर्थं न परिभ्रमितव्यमिति भावः। एवं चेत्परमेश्वरस्याप्यवश्यं प्रियो भवेयमिति तात्पर्यम्। तदुक्तं भगवता—"यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति। शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥" अन्यत्राप्युक्तम्—"गतार्थान्नानुशोचन्ति नार्थयन्ते मनोरथान्। वर्तमानेन वर्तन्ते तेन मे पाण्डवाः प्रियाः॥" इति ६२

हे मन ! तू क्यों जहां तहां घूमता है ? कहीं विश्राम ले लें। जो होनेवाला है सोही होगा, अन्यथा कभी नहीं होगा और मैं न व्यतीत हुएका स्मरण करता हूं न होनेवालेका संकल्प करता हूं किंतु अतर्कित प्राप्त हुए भोगोंको भोगता हूं ॥ ६२ ॥

अथ विशिष्य संबोधनप्रकारमेवाह—

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात्।
स्वात्मीभावमुपेहि सन्त्यज निजां कल्लोललोलां गतिं

---

१ शान्तं भा० इति पाठान्तरम्।

मा भूयो भज भङ्गुरां भवरतिं चेतः प्रसीदाधुना ॥ ६३ ॥

एतस्मादिति ॥ हे चेतः ! एतस्मात्परिदृश्यमानात् आयासयतीत्यायासकात् । दुःखजनकात् । इन्द्रियार्थाः शब्दादिविपया एव गहनमरण्यं तस्मात् दुर्विगाहत्वादेतद्रूपणं विरम विरामं प्राप्नुहि । अत्यन्तदुःखविपयासक्तिं मा कुर्वित्यर्थः । " जुगुप्साविराम०" इत्यादिना पञ्चमी । "व्याङ्परिभ्यो रमः" इति परस्मैपदम् । किंतु क्षणात् क्षणमात्रेणैव अशेपदुःखशमनमेकविंशतिमहादुःखविध्वंसनमेव व्यापारस्तत्र दक्षं समर्थं श्रेयोमार्गं ज्ञानमार्गमाश्रय अनुसर। तत्र प्रवर्तस्वेत्यर्थः। तथा स्वात्मीभावं स्वरूपानुसन्धानतत्परत्वमुपैहि प्राप्नुहि । तथा निजां स्वकीयाम् । " चञ्चलं हि मनः कृष्ण " इत्यादौ प्रसिद्धमित्यर्थः । कल्लोलवल्लोलामातिचपलां गतिं व्यापारं सन्त्यज सम्यग्विसृज्य सुस्थिरं भवेत्यर्थः । भूयः पुनरपि भंगुरां भङ्गशीलामशाश्वतां भवरतिं संसारासक्तिं मा भज न सेवस्व । किन्त्वधुनेदानीं प्रसीद प्रसन्नं भव । चित्तप्रसादमन्तरा पुण्यशतैरपि श्रेयःप्राप्त्यसम्भवादिति भावः ॥ ६३ ॥

हे चित्त ! बडे परिश्रमसे प्राप्त हुए और दुःखदाई आश्रयवाले इन्द्रियोंके विपयरूपी वनसे विश्राम ले, सकल दुःखध्वंस करनेके व्यापारमें समर्थ कल्याणमार्गको शीघ्र प्राप्त हो, शांतभाव ग्रहण कर, तरंगसी अपनी चञ्चल गति छोड दे, इस नाशवान् संसारी इच्छाको फिर सेवन मत कर; अब तू आपही प्रसन्नरूप हो ॥ ६३ ॥

अथ विश्वसनीयेष्वेव विश्वासं कुरु नान्यत्रेत्याह—

मोहं मार्जय तामुपार्जय रतिं चन्द्रार्धचूडामणौ
चेतः स्वर्गतरङ्गिणीतटभुवामासङ्गमङ्गीकुरु ।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च श्रीषु[1] च
ज्वालाग्रेषु च पन्नगेषु च सुहृद्वर्गेषु[2] च प्रत्ययः ॥ ६४ ॥

मोहमिति ॥ हे चेतः ! मोहं पुत्रमित्राद्यासक्तिजनकाज्ञानं मार्जय शोधय त्यजेति यावत् । तत्र विश्वासं मा कुर्वित्यर्थः । किन्तु चन्द्रार्धं चूडामणिर्यस्य तस्मिन् चन्द्रशेखरे शम्भौ तां तथाभूतामनिर्वाच्यामित्यर्थः । रतिमनुरक्तिमुपा-

१ स्त्रीषु च । २ सरिद्वेगेषु इति च पाठान्तरम् ।

जैय सम्पादय । तथा स्वर्गतरङ्गिण्या मन्दाकिन्या यास्तटभुवस्तीरप्रदेशास्तासामासङ्गं तत्र निवासासक्तिमंगीकुरु अनुमन्यस्व । उभयत्रैव विश्वासं कुर्वित्यर्थः । एतस्यैव श्रेयस्करत्वादिति भावः । कुत एतदित्याशङ्क्यान्यत्राविश्वासोत्पादनार्थमस्वरसमुद्भावयति । वीचिषु वारितरङ्गेषु च, बुद्बुदेषु जलस्फोटेषु च, तडितो लेखा इव तासु विद्युल्लतासु च, श्रीषु सम्पत्सु च । तडिल्लेखामतल्लीषु चेति पाठे प्रशस्तास्तडिल्लेखास्तडिल्लेखामतल्ल्यस्तासु च । "प्रशंसावचनैश्च" इति नित्यसमासः । "मतल्लिका मर्चचिका प्रकाण्डमुद्धतल्लजौ ।" इत्यमरः । ज्वालाग्रेष्वग्निशिखामुखेषु च, पन्नगेषु सर्पेषु च, सुहृद्वर्गेषु बन्धुजनसमुदायेषु च को वा प्रत्ययः । उत्तरोत्तरं तारतम्येन नश्वरतया प्रत्यक्षसिद्धेषु विचित्रसंस्थितिषु चतुर्षु, गृहदीप इति चुम्बनकरणे श्मश्रुदाह इति लोकन्यायेन प्रत्यक्षेण च दाहहेतुतया प्रसिद्धेषु ज्वालाग्रेषु च, स्पष्टतया प्राणहृतेषु पन्नगेषु च विपत्सु परित्यागशीलेषु बन्धुजनेषु च को वा विश्वासः न कोऽपीत्यर्थः । उत्तरोत्तरमविश्वसनीयत्वादिति भावः । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।" इत्यमरः । अत्र प्रस्तुतानां स्वबन्धुजनानामप्रस्तुतानां वीचिप्रभृतीनां च यथा कथञ्चिदौपम्यस्य गम्यत्वाद्दीपकालङ्कारभेदः । तदुक्तं विद्यानाथेन–प्रस्तुताप्रस्तुतानां च सामस्ये तुल्यधर्मतः । औपम्यं गम्यते यत्र दीपकं तन्निगद्यते।।"इति।।

हे चित्त ! मोहको छोड, जिनके शिरमें अर्द्धचन्द्र विराजमान है उन शिवजीसे प्रीति कर और गंगातटके वृक्षोंके नीचे विश्राम ले, देखो-तरंग, पानीके बुलबुले, विजुलीकी चमक, श्री, अग्निकी ज्वालाकी शिखा, सर्प और सुहृद्वर्गमें स्थिर रहनेका क्या विश्वास है अर्थात् इन सबके विलासमें तू मत भूल ॥ ६४ ॥

अथ प्रकारान्तरेण सम्बोधयति—

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीविहरणव्यापारपण्याङ्गनाम् ।
कन्थाकञ्चुकिनः प्रविश्य भवनद्वाराणि वाराणसी-
रथ्यापंक्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे ॥ ६५ ॥

चेत इति ॥ हे चेतः ! अस्थायिनीमस्थिरां कुतो भूपालानां राज्ञां भ्रुकुटीभङ्ग

एव कुटी कुटीरं तत्र विहरणं विहारो यस्य तथोक्तो यो व्यापारस्तेन पण्याङ्गनां व्यभिचारिणीमिति यावत् । भ्रूसंज्ञाया नरवरणशीलामित्यर्थः । तदायत्तत्वात्तस्या इति भावः । यद्वा भूपालभ्रुकुटीकुटीरे विहरणमेव व्यापारो यस्याः सा तथोक्ता सा च पण्याङ्गना वारविलासिनी तां तथाभूतां तदधीनत्वात्तत्प्रयुक्तप्रवृत्तिनिवृत्तिकामित्यर्थः । अत्र पण्याङ्गनारूपणं विहारे विशृङ्खलत्वद्योतनार्थं नैयत्येन व्यभिचरणशीलत्वप्रकटनार्थं च । यथा वारवनिता कुत्रचित्किञ्चित्कालं विहृत्यानन्तरमन्यत्र गच्छति तद्वादिति ध्वनिः । इह कानिचिदर्थान्तराणि स्फुरन्ति बुद्धिमद्भिरुन्नेयानि ग्रन्थगौरवभयान्न लिख्यन्ते । तामिमां परिदृश्यमानां रमां सम्पत्तिमास्थायादरेण सकृत्कदाचिदपि मा चिन्तय मा कांक्षय तत्सम्प्रार्थनप्रयत्नं मा कुर्वित्यर्थः । तर्हि कथं जीविकेत्याशङ्कायामाह । कन्थैव कञ्चुकमेषामस्तीति कन्थाकञ्चुकिनः कन्थावर्मितगात्राः सन्तः । अत्र यद्यपि बहुव्रीहिणैव विवक्षितार्थलाभात्पुनः प्रत्ययान्तरग्रहणे प्रक्रियागौरवं 'न कर्मधारयान्मत्वर्थीयः' इति निषेधात् तथापि "त्वगुत्तरासङ्गवतीम् । कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।" इत्यादिमहाकविप्रयोगश्च वर्तते इति वैयाकरणाः कथयन्ति । यद्वा कन्थया कञ्चुकिनः कञ्चुकवन्तः कन्थाच्छादितगात्राः सन्त इत्यर्थः । वयमिति शेषः । वाराणस्याः काशीपट्टनस्य । "काशी वाराणस्यवन्ती" इत्यमरः । रथ्यापङ्क्तिषु राजमार्गश्रेणिषु । "रथ्या प्रतोली विशिखा" इत्यमरः । भवनद्वाराणि गृहप्रतिहारप्रदेशान् प्रविश्य पाणिरेव पात्रं तत्र पतितां निक्षिप्ताम् । एतेन याच्ञापूर्वकत्वं सूच्यते । भिक्षामपेक्षामहे स्पृहयामहे । "पाणिपात्र उदरमात्रपात्रे पतितमश्नीयात्" इत्यादिश्रुतेः । अनायाससिद्धभिक्षाहारेण शरीरयात्रां निर्वर्तयन्तः पुण्यक्षेत्रेषु सुखेन निवसिष्याम इत्यर्थः । तदुक्तम्—"भिक्षाहारो निराहारो भिक्षान्नेन प्रतिग्रहः । असतो वा सतो वापि सोमपानं दिने दिने ॥" इति ॥ ६५ ॥

हे मन ! राजाओंकी भ्रुकुटीरूप कुटीमें विहार करनेवाली मानो पण्यांगनाही ऐसी इस चञ्चल लक्ष्मीकी आकांक्षा तू आदरपूर्वक कभी मत कर, क्योंकि अब हम कंथारूप कंचुकोंको पहिनके काशीनगरकी वीथियोंमें घूमते २ वहांके गृहद्वारोंमें प्रवेश कर वहां हस्तरूप पात्रमें गिरी भिक्षाकीही इच्छा करते हैं ॥ ६९ ॥

अथ तव यदि सर्वदा संसाररसानुभवेऽभिनिवेशस्तावदित्थंभूतसामग्र्यां तत्राभिरतिं कुरु अन्यथा ध्याननिष्ठो भवेत्याह—

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ६६ ॥

अग्र इति॥अत्र गीतशब्देन गायकजनो लक्ष्यते।तथा च हे चेत इत्यध्याहारः। अग्रे पुरस्ताद्गीतं] वीणावादनप्रवीणगायकसमुदायश्च । तथा पार्श्वयोरपीत्यर्थः। दाक्षिणात्या दक्षिणदेशोद्भवास्तेषामेव विचित्रप्रबन्धनिर्माणकौशलसम्भवादिति भावः । "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः । सरसा रसोल्लसितशब्दार्थसङ्घटनाचतुरा ये कवयः कवयितारस्ते च । तथा पश्चात् पृष्ठभागे चामराणि प्रकीर्णकानि गृह्णन्तीति चामरग्राहिण्यस्तासां वालव्यजनवीजनतत्पराणां रमणीनाम् । "चामरं तु प्रकीर्णकम्" इत्यमरः । लीलया वीजनवैचित्र्यविलासेन ; यद्वलयरणितं मणिकङ्कणझणत्कारस्तच्चेत्येतत्सर्वम् । "नपुंसकमनपुंसकेन" इत्यादिना नपुंसकैकशेषः । एवमुक्तप्रकारेणास्ति यदि वर्तते चेत्तर्हि भवे संसारे यो रसस्तस्यास्वादने अनुभवे लंपटत्वं लोलुपत्वं कुरु तदासक्तं भवेत्यर्थः । "लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः ।" इति यादवः । नो चेदेवं नास्ति चेत् सहसा अविलम्बेनैव । "स्वरादिपाठाद्व्ययम्" इति शाकटायनः । निर्विकल्पे निरातङ्के समाधौ ध्याने प्रविश ब्रह्मध्यानानिष्ठ भवेत्यर्थः । किमन्यथोभयभ्रंशहेतुना वृथादैन्येनेति भावः ॥ ६६ ॥

सम्मुख प्रवीण गवैये गाते हों दहिने बाएँ दक्षिण देशके सरस कविलोग काव्य सुनाते हों और पीछे चँवर डोलानेवाली सुंदर स्त्रियोंके कंकणकी मधुर झनकार होती हो जो ऐसी सामग्री तुझे प्राप्त हो तो संसारके रसका स्वाद लेनेमें लिपट, नहीं तो हे चित्त ! स्थिर समाधिमें प्रवेश कर ॥ ६६ ॥

अथ विचार्यमाणे सम्पत्तिलाभशत्रुजयादीनामप्यकिंचित्करत्वमेवेत्याह—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ।

१ पार्श्वतो । २ पृष्ठे लीलावशपरिणतिश्चा० । ३ दत्तं इति पाठान्तरम् ।

सम्पादिताः प्रणयिनो विभवैस्ततः किं
कल्पस्थितास्तनुभृतां तनवस्ततः किम् ॥ ६७ ॥

प्राप्ता इति ॥ हे चेतः! तनुभृतां शरीरिणां सकलकामान् दुहन्तीति सकलकामदुघा अशेषमनोरथपरिपूरका इत्यर्थः । श्रियः प्राप्तास्ततः किम् । तथा विद्विषताममित्राणाम् । "द्विषोऽमित्रे" इति शतृप्रत्ययः । शिरसि पदं न्यस्तं निक्षिप्तं पराक्रमातिशयेन सर्वे शत्रवः पादाक्रान्तीकृता इत्यर्थः । ततः किम् । विभवैर्धनैः प्रणयिनः सुहृदः सम्पादिताः संगृहीता वशंवदीकृता इत्यर्थः । संमानिता इति पाठे बहुमानितास्ततः किम् । तथा कल्पस्थिताः कल्पान्तरस्थायिन्य इत्यर्थः । तनवः शरीराणि सम्पादिता इति सम्बन्धः । केनाचिद्योगेन संगृहीतास्ततः किम् । तेषां श्रेयःसाधनत्वनिषेधादिति भावः । एतदादिश्लोकचतुष्टयं वसन्ततिलकावृत्तम् ॥ ६७ ॥

इन नश्वर शरीरधारियोंने सब कामनाओंकी दुहनेवाली लक्ष्मी पाई तो क्या, शत्रुओंके शिरपर पग दिया तो क्या, धनसे मित्रोंको प्राप्त किया तो क्या, फिर इन देहधारियोंके देह कल्पभर रहे तोभी क्या अर्थात् परलोक न बनाया तो कुछ न किया ॥ ६७ ॥

नन्वेवं श्रेयःसाधनत्वेन व्यवहृतानामेतेषां निषेधे किमन्यच्छ्रेयःसाधनमित्यत आह—

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ताः
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ६८ ॥

भक्तिरिति ॥ हे चेतः ! भवे शम्भौ भक्तिर्भजनानुरागः कार्य इति शेषः । किञ्च मरणजन्माभ्यां महोपद्रवकारिभ्यां निधनोत्पत्तिभ्यां भयं हृदि तिष्ठतीति हृदिस्थं कर्तव्यमिति शेषः । न तु विस्मर्तव्यमिति भावः । बन्धुषु पुत्रमित्रकलत्रादिषु विषये स्नेहोऽनुरागो न कार्यः । तथा मन्मथाज्जायन्त इति तथोक्ता विकाराः

१ संमानिताः । २ कल्पं स्थितं त० । ३ तनुभिस्त० । ४ परमार्थनीयम् इति च पाठान्तरम् ।

स्त्रीपरतन्त्रत्वादयो न कार्याः श्रेयोऽन्तरायत्वादिति भावः । इत्थं श्रेयःसाधनत्वेन कर्तव्यद्वयं तदसाधनत्वेनाकर्तव्यद्वयं चोपदिश्येदानीं पुनर्मुख्यं कर्तव्यान्तरमुपदिशति । संसर्गदोषैः संगदोषै रहिताः कामक्रोधादिप्रसङ्गवर्जिता इत्यर्थः । "सङ्गात्सञ्जायते कामः" इत्यादिभगवद्वचनेन सङ्गजनितकामादिदोषपरम्पराया अनर्थहेतुत्वादिति भावः । कुतः विजनाः विविक्ताः वनान्ता वनप्रदेशाः सेव्या इति शेषः । तत्र किमस्तीत्याशंकायामाह । वैराग्यमस्ति सम्भवतीत्यर्थः । अतो वैराग्यात्परमन्यत्किमर्थनीयमभिलषणीयं न किमपीत्यर्थः । तस्यैव परमश्रेयःसाधनत्वादिति भावः ॥ ६८ ॥

सदाशिवकी भक्ति हो, जन्म मरणका भय हृदयमें न हो, बन्धुवर्गमें स्नेह न हो, कामदेवका विकार मनसे दूर हो, संसर्गदोषसे छूटे निर्जन वनमें बैठे हों इससे अधिक और क्या वैराग्य है जो ईश्वरसे मांगने योग्य है अर्थात् यही वैराग्य है ॥ ६८ ॥

अथ ब्रह्मविचारतत्परस्य ते सर्वेऽपि भुवनादिपत्यादयस्तुच्छा इव प्रतिभान्तीत्युपसंहरति—

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिण इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ६९ ॥

तस्मादिति ॥ तस्मात् यस्माद्वैराग्यमेवार्थनीयं तस्मादित्यर्थः । हे चेतः! अनन्तमपरिच्छिन्नं त्रिविधपरिच्छेदशून्यम् । तथा अजरं जन्मजरामरणवर्जितमत एव परमं सर्वोत्कृष्टम् । तथा विकासि विकस्वरं सर्वव्यापीत्यर्थः । यद्वा विकासि भास्वरं तद्ब्रह्म चिन्तय विचारय । एभिः क्रियमाणैरसद्विकल्पैरसद्भिरसाधुभिरसत्यैर्वा विकल्पैस्तत्तद्भोगप्राप्त्यप्राप्तिगोचरविचारैः किं विकल्पसाध्यं नास्तीत्यर्थः । "गम्यमानसाधनक्रियापेक्षया करणत्वात्तृतीया न केवलं श्रूयमाणैव क्रिया निमित्तं कारकभावस्य अपि तु गम्यमानापि" इति वचनात् । यत्तदोर्नित्यसम्बंधात्तच्छब्दस्य यच्छब्दाकांक्षामाह । यस्य ब्रह्मणः अनुषङ्गिणः सम्बन्धवन्तः यद्ब्रह्मविचार इत्यर्थः । तवेति शेषः । इमे काम्यमाना भुवनाधिपत्यं लोकाधिपत्यं भोगः स्वर्गादिसत्यान्तलोकसमुदायस्थस्तावादी येषां ते तदा-

दयो भोगाः कृपणलोकानां ब्रह्मविचारहीनजनानां मता इष्टा योग्या इति यावत् । भवन्ति प्रतिभान्ति तेषामेव योग्यास्ते न मादृशानामिति प्रतीयत इत्यर्थः । भुवनाधिपत्यादीनामेवं प्रतीयमानत्वं किमुतान्येषामिति भावः । तदानीं तव तृणीकृतब्रह्मपुरन्दरत्वात्सर्वेऽपि तुच्छा एव प्रतिभान्तीति परमार्थः । यद्वा ननु सर्वथा भोगजातमेव ममाभिलषितं नान्यदिति यदि मन्यसे तदा इत्थम्भूतस्य तव सर्वे भुवनाधिपत्यादिभोगा अनुषङ्गात्स्वयमेव सम्भवन्तीति समाधानमभिप्रेत्याह। हे चेतः! तत् सकलवेदान्तप्रसिद्धम्।यद्वा तच्छब्दलक्ष्यार्थभूतमित्यर्थः। तत्त्वमसीति महावाक्ये तथा व्याख्यानादिति भावः। ब्रह्म चिन्तय। चिन्तनफलमाह—यस्य ब्रह्मचिन्तनतत्परस्य ते कृपणलोकमता इमे भुवनाधिपत्यभागोदयः अनुषङ्गिणः भवन्ति । अनुषङ्गात्स्वयमेव संभवन्तीत्यर्थः । ब्रह्मध्याननिष्ठसाम्राज्यलक्ष्मीपतेः किं ते दुर्लभमिति भावः । शेषं समानम् । यद्वा यस्य ब्रह्मचिन्तनस्येमे भुवनाधिपत्यादयः अनुषङ्गिणः अनुबंधिनः भवन्ति । तथा च सति ब्रह्मचिन्तने तदनुबन्धवशात्सर्वेऽपि स्वयमेव संभवन्तीति भावः । अत्र " शिखा ते वर्धते नूनं गुडूचीं पिब श्रावक । " इति शास्त्रवचनमनुसृत्य तात्पर्यान्तरेणैवं समाहितमित्यनुसन्धेयम् । कृपणलोकमता इत्यत्र यद्यपि " मतिबुद्धि० " इत्यादिना वर्तमानार्थे क्तप्रत्यये " क्तस्य च वर्तमाने ." इति षष्ठीसमासनिषेधः तथापि निरंकुशाः कवय इत्यलम् ॥ ६९ ॥

जिस ब्रह्मका लेशमात्र आनन्द पानेवालोंके निकट त्रिभुवनके राजाओंका भोग विलास मूर्खोंके योग्य ठहरता है अत एव उसी अनन्त अजर और सर्वोत्तम शोकरहित ब्रह्मका चिन्तवन करो इन विकल्पोंसे क्या फल है अर्थात् देहादि अहंभाव त्यागके ब्रह्मको चिन्ता करो ॥६९॥

एवमेवार्थं पुनः प्रकारान्तरेणोपदिशन्निगमयति—

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि येन ॥ ७० ॥

---

१ मात्मलीनम् इति पाठान्तरम् ।

पातालमिति ॥ हे मानस ! चापलेन तत्तद्विषयासक्तजनितचापल्येन । युवादित्वादण् । हेतौ तृतीया । पातालमाविशसि अत्यन्ताधःप्रदेशमपि गच्छसीत्यर्थः। तथा नभोऽन्तरिक्षं विलंघ्य यासि अत्यूर्ध्वप्रदेशमपि गच्छसीत्यर्थः । तथा दिङ्मण्डलं दिक्चक्रवालं भ्रमसि अतिदूरदेशमपि धावसीत्यर्थः । सर्वत्रापि मनोगतेर्निरर्गलत्वादिति भावः । किन्तु भ्रान्त्या भ्रमवशेनापि मास्तु । विवेकेनेत्यपिशब्दार्थः । तथापि जातु कदाचिदपि विमलं निर्मलमविद्याकार्यसम्बन्धशून्यमित्यर्थः । सर्वत्रापि मनोगतेर्निरर्गलत्वादिति भावः । किन्तु आत्मसाहितमात्मनीनं सुखस्वरूपत्वात् । " आत्मन्विश्वजनभोगोत्तरपदात्खः " इति खप्रत्ययः । आत्मलीनामिति पाठे आत्मन्यन्तरात्मनि लीनं निलीय स्थितं सर्वान्तर्यामित्वात् । ब्रह्म कथं न संस्मरसि न ध्यायसि सर्वदा स्मर्तव्यमित्यर्थः । कुतः येन संस्मरणेन निर्वृतिमानन्दमेपि प्राप्नोपि। अतः यथाकथंचित्स्मरणेऽप्यानन्दजनकत्वादवश्यं स्मर्तव्यमेव । " हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥ " इत्यादिवचनादिति भावः ॥ ७० ॥

हे चित्त ! तू अपनी चंचलतासे पातालमें प्रवेश करता है, आकाश उलंघकर ऊपर जाता है और सब दिशाओंमें भ्रमण करता है पर भूलेभी कदाचित् अपने हृदयमें स्थित विमल ब्रह्मका स्मरण नहीं करता है कि, जिसके स्मरणसे परमानन्दको प्राप्त होगा ॥ ७० ॥

अथ वेदाध्ययनस्मृतिपर्यालोचनशास्त्रपठनपुराणश्रवणादिभिर्न कोऽपि लाभः किंतु विचारात् श्रवणमनननिदिध्यासनादिभिरात्मानुभव एव लाभ इति मत्वा जनानुद्दिश्य बोधयति किं वेदैरिति श्लोकेन—

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥ ७१ ॥

किमिति ॥ वेदैःऋग्यजुःसामाथर्वणसंज्ञिकैश्चतुर्भिर्वेदैः किं प्रयोजनं न किमपि प्रयोजनमित्यर्थः । स्मृतिभिः मन्वाद्यष्टादशस्मृतिभिरुपस्मृतिभिश्च किं प्रयोजनं न किमपीत्यर्थः । पुराणपठनैः ब्रह्माण्डपुराणाद्यष्टादशपुराणोपपुराणपठनैश्च न

१ भवबन्धदुःखर० । २ शेषैर्वणिग्वृत्तिभिः । इति च पाठान्तरम् ।

किमपीत्यर्थः । महाविस्तरैरतिविस्तृतैः शास्त्रैस्तर्कव्याकरणादिषड्दर्शनैर्न किमपीत्यर्थः । स्वर्गे सर्वपुण्यकृन्निवासे नाकलोके च ग्रामेषु ब्राह्मणप्रधानवर्णानां निवासेषु कुटीषु पर्णगृहेषु यो निवासस्तेन फलदैः फलप्रदैः कर्मणां स्नानसन्ध्यावन्दनौपासनयज्ञादीनां क्रियाभिर्व्यापारैर्विभ्रमैश्च न किमपि प्रयोजनमित्यर्थः । भवात् जननमरणरूपसंसारात् यद्दुःखं दारिद्र्यं भार्यापुत्रादिनाशस्तस्य भारः असह्यातिशयस्तस्य रचना कलना तस्याः विध्वंसो नाशस्तस्य कालानलं प्रलयाग्निरूपम् । स्वस्य आत्मानन्दः आत्मसुखानुभवस्तस्य पदं स्थानं तस्मिन् प्रवेशस्तस्य कलनमेकम् ।" एके मुख्यान्यकेवलाः " इत्यमरः । मुक्त्वा विहाय शेषा उक्तेभ्यः अन्या वणिग्वृत्तयः । वर्तकव्यापारा जना इत्यर्थः । आत्मज्ञानं विना उक्तानां वेदादीनामध्ययनादिभिरपि फलं नास्तीत्युक्तत्वात् सर्वेषां वेदान्तवाक्यानाम् अद्वैते ब्रह्मणि तात्पर्यमित्युक्तरीत्या ब्रह्मज्ञानमेव सम्पादनीयं न त्वितरदित्याशयः । शेषैर्वणिग्वृत्तिभिरिति पाठे वर्तकव्यापारसदृशैः शेषैरुक्तान्यैः न किमपि प्रयोजनमित्याशयः ॥ ७१ ॥

श्रुति, स्मृति, पुराण और बडे विस्तारपूर्वक शास्त्रोंके पढनेसे क्या फल है और जिसका फल स्वर्गरूपी ग्राममें कुटी बनाके रहनाही है ऐसे कर्मकाण्डकी कर्तव्यताके विभ्रमसे क्या है, संसारबन्धनके दुःखरचनाके विध्वंस करनेके हेतु प्रलयाग्निकी सदृश ब्रह्मानन्दपदमें एक प्रवेशके उद्योगके विना और सब शेष वणिज(वैश्यों)का व्यापार है७१

अथातिरिक्तस्यानित्यत्वमेव प्रपञ्चयति—

यतो मेरुः श्रीमान्निपतति युगान्ताग्निवलितः
समुद्राः शुष्यन्ति प्रचुरमकरग्राहनिलयाः ।
धरा गच्छत्यन्तं धरणिधरपादैरपि धृता
शरीरे का वार्ता करिकलभकर्णाग्रचपले ॥ ७२ ॥

यत इति॥यतो यस्मात्कारणात् श्रीमान् मणिहिरण्यादिसकलवस्तुसमृद्धिमान् मेरुः मेरुगिरिरपि युगान्ताग्निना प्रलयकालानलेन वलितः संवेष्टितः सन् निपतति॥विशिष्टाग्निसम्पर्कान्निलीनो भवतीत्यर्थः।तथा प्रचुराः प्रभूता मकरा नक्रा ग्राहा इत्यर्थः । जलग्राहाश्च तेषां निलयाः समाश्रयाः समुद्राः सप्त सागराश्च

१ यदा । २ निहतः । ३ निकर० इति च पाठान्तरम् ।

शुष्यन्ति शोषं प्राप्नुवन्ति । तथा धरन्तीति धराः । पचाद्यच् । धरण्याः धराः महेन्द्रादिसप्तकुलाचलास्तेषां पादैः प्रत्यन्तपर्वतैः । "पादाः प्रत्यन्तपर्वताः" इत्यमरः । धृता सम्यगवष्टब्धा धरा भूमिश्च अन्तं नाशं पातालं वा गच्छति प्राप्नोति । उभयत्रापि प्रलयाग्निमेलनादेवेति भावः । तस्मात् कारणात् । यत्त-दोर्नित्यसंबन्धात् । करिकलभस्य करिपोतस्य कर्णाग्रं कर्णाञ्चलं तद्वच्चले चञ्चले शीर्यत इति शरीरे का वार्ता का कथा । न कापीत्यर्थः । यतोऽत्यन्तस्थिराणा-मपि ईदृश्यवस्था किमु तत्क्षणभंगुराणां शरीराणाम् । "गजा यत्र न गण्यन्ते मशकानां तु का कथा ।" इति न्यायादिति भावः । सर्वेऽपि नश्वरा एव ततोऽप्यतिनश्वरं शरीरमिति तात्पर्यम् । करिकलभेत्यत्र करिशब्दस्य विशेष-प्रतिपत्तिहेतोर्विशेष्यप्रतीत्यर्थत्वादपौनरुक्त्यमत एवैकारार्थीभूतमप्रयोज्यमित्युक्त्वा "करिकलभकर्णावतंसादिषु प्रतिविशेषकरेषु न दोषः" इत्याह वामनः ॥७२॥

प्रलयकालकी अग्निका मारा जब श्रीमान् सुमेरु पर्वत गिर पडता है और बडे बडे मगर और ग्राहोंके स्थान ऐसे समुद्रभी जब सूख जाते हैं और पर्वतोंके पगसे दबी हुई पृथ्वीभी नष्ट हो जाती है तब हाथीके बच्चोंके कानके कोरके समान चञ्चल मनुष्यके शरीरकी क्या गणना है अर्थात् यह तो अवश्य नष्ट होगा ॥ ७२ ॥

अथ शरीरिणो जरया दुरवस्थामाह द्वाभ्याम्—

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालयते ।
वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ७३ ॥

गात्रमिति ॥ गात्रं शरीरं संकुचितं भग्नमभूदिति शेषः । गतिः सञ्चारोऽपि गलिता सञ्चारशक्तिरपि नष्टेत्यर्थः । दन्तावलिर्दन्तपंक्तिश्च भ्रष्टा पतिता । दृष्टिश्चक्षुरिन्द्रियं च नश्यति अर्थग्रहणापटुर्भवतीत्यर्थः । बधिरता श्रोत्रेन्द्रिया-पाटवं वर्धते वृद्धिं प्राप्नोति । वक्त्रं च लाला दन्तान्तर्गतजलं लालेवाचरति लालायते लालामयं भवतीत्यर्थः । "सृणिका स्यन्दिनी लाला" इत्यमरः । तथा बन्धव एव बान्धवाः स्वार्थेऽण्प्रत्ययः । त एव जनो बन्धुवर्गश्च वाक्यं वचनं नाद्रियते न रोचयत इत्यर्थः । किं बहुना भार्यापि न शुश्रूषते न सेवते । यद्वा

सेवितुं नेच्छति सेवा दुरापास्तेति भावः । अतो जीर्णवयसो जरावस्थासम्पन्नस्य पुरुषस्य । हेति विषादे । कष्टं कृच्छ्रं कुतः पुत्रोऽप्यात्मसम्भवोऽपि अमित्रायते अमित्रः शत्रुरिवाचरति प्रतिकूलाचरणतत्परो भवतीत्यर्थः । लालायत इत्यत्र "कर्तुः क्यङ् सलोपश्च" इति क्यङ् । अत्र "उपमानादाचारे" इति उभयत्रापि "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घः ॥ ७३ ॥

बडा खेद है कि वृद्ध मनुष्यकी यह दशा होती है कि गात सुकड जाता है, गति ( चलना ) नष्ट हो जाती है, दांतोंकी पंक्ति गिर जाती है, दृष्टि नष्ट हो जाती है, बहिरा हो जाता है, मुखसे लार टपकने लगती है, बन्धुजन वाक्यका आदर नहीं करते, स्त्रीभी सेवा नहीं करती और पुत्रभी शत्रुके समान हो जाता है इससे ईश्वरकी भक्तिही श्रेष्ठ है ॥

वर्णं सितं झटिति वीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य तथा पुमांसम् ।
आरोपितास्थिशतकं परिहृत्य यान्ति
चण्डालकूपमिव दूरतरं तरुण्यः ॥ ७४ ॥

वर्णमिति ॥ तरुण्यो युवतयः । कर्त्र्यः । "वयसि प्रथमे" इति ङीप् । शिरसि रोहन्तीति शिरोरुहाश्चिकुराः । "इगुपधज्ञाप्रीकिरः कः" इति कप्रत्ययः । तेषां सितं वर्णं धावल्यगुणं पलितत्वमिति यावत् । झटित्यञ्जसा वीक्ष्य दृष्ट्वा । "द्राग्झटित्यञ्जसाह्नाय" इत्यमरः । तदा तस्मिन्समये दर्शनसमनंतरकाल एवेत्यर्थः । जरया वार्धकावस्थया यः परिभवः अवमानस्तस्य स्थानमास्पदं तथा आरोपितं बहिः स्फुटलक्ष्यत्वादारोपितप्रायमस्थिशतकं यस्य तं तथोक्तम् । अन्यत्रारोपितं निक्षिप्तमस्थिशतकं यस्मिन् तम् । आरोपितास्थिशकलमिति पाठे एकत्रारोपितप्रायकीकसखण्डमन्यत्र निक्षिप्तकीकसखण्डमित्यर्थः । पुमांसं पुरुषं चण्डालकूपं चण्डालसंबन्धिजलाशयमिव परिहृत्य परित्यज्य दूरतरमतिविप्रकृष्टं यान्ति हेयत्वाद्विहायान्यत्र गच्छन्तीत्यर्थः । अतः कष्टं जीर्णवयसोऽपि जीवनमिति भावः ॥ ७४ ॥

तरुण स्त्रियां वृद्ध पुरुषके बालोंका सफेद वर्ण देखके जिसको जरासे होनेवाले अवमानका स्थान तथा सैकडों हाड जिसमें आरोपित

किये हैं ऐसा चांडालका कूप समझके उसको छोडके दूर चली जाती हैं ॥ ७४ ॥

अतो दुरवस्थाक्रान्तेः पूर्वमेव श्रेयःसम्पादनार्थं यत्नः कर्तव्यो नान्यथेति सदृष्टान्तमाह—

यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७५ ॥

यावदिति ॥ यावत् यावत्पर्यन्तमिदमेतच्छरीरं स्वस्थं पीडारहितं भवतीति शेषः । एवमुत्तरत्रापि । तथा यावत् न विद्यते रुजा रुग्यस्य तत्तथोक्तमारोग्य-युक्तं भवति । " स्त्री रुग्रुजा चोपतापः " इत्यमरः । यद्वा अरुजं सत् स्वस्थम-विकलं भवति । तथा यावज्जरा दूरतः दूरे भवति वार्धकदशा यावत्पर्यन्तं नाक्रमतीत्यर्थः । तथा यावदिन्द्रियशक्तिश्चक्षुरादीन्द्रियपाटवं च अप्रतिहता अखण्डिता भवति । यावदायुषः क्षयो नाशो न भवति तावत् तावत्पर्यन्त-मेव तन्मध्यकाल एवेत्यर्थः । वेत्तीति विद्वान् तेन विदुषा अभिज्ञेन । " विदेः शतुर्वसुः " इति वसुप्रत्ययः । आत्मनः श्रेयसि विषये मोक्षप्राप्तावित्यर्थः । महान् फलजननपर्याप्तत्वेन पूज्यः प्रयत्नः ज्ञानवैराग्यतपःसम्पादनोद्योगः कार्यः । ननु कोऽयं नियमः अवसानेऽपि प्रयत्नस्य कर्तुं युक्तत्वादित्याशंक्या-वकाशाभावान्न युक्त इति व्यतिरेकदृष्टान्तमाह । भवने गृहे सन्दीप्ते अग्निना दह्यमाने सति कूपखननं प्रति कूपनिर्माणं प्रत्युद्यमः प्रयत्नः कीदृशः कीदृ-ग्विधः न युक्त इत्यर्थः । अवकाशाभावादिति भावः । गृहदाहवेलायां कूप-खननप्रयत्न इव अवसानकाले श्रेयःप्राप्त्यर्थोद्यमोऽपि न युज्यत इति भावः । तस्मात्स्वस्थावस्थायामेव श्रेयःसाधनसम्पादनतत्परेण भवितव्यमवश्यं बुद्धि-मतेति तात्पर्यम् ॥ ७५ ॥

जबतक शरीर अपना पुष्ट और नीरोग है और वृद्धावस्था दूर है जबलों इन्द्रियोंकी शक्ति न्यून न हुई और आयुष्यभी क्षीण नहीं हुई

---

१ कलेवरमिदं । २ प्रोद्दीप्ते इति च पाठान्तरम् ।

हैं तबतक बुद्धिमान् पुरुषको उचित है कि अपने कल्याणका यत्न अच्छी भांतिसे कर ले, जब घर जलने लगा तब कूप खोदनेके उद्योगसे क्या होता है ॥ ७९ ॥

अथ तपश्चरणादीन् बहून् कर्तव्यतया विकल्प्यानन्तरमवश्यं तप एव सम्पादनीयमिति केषांचिन्निश्चयमनुसन्धायाह तपस्यन्त इति द्वाभ्याम्—

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान् दारानुतपरिचरामः सविनयम् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ७६ ॥

तपस्यन्त इति ॥ तपस्यन्तस्तपश्चरन्तः सन्तः के वयमिति शेषः । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यप्प्रत्ययः । सुरनदीं मन्दाकिनीमधिनिवसामः किमधितिष्ठामो वा वैराग्येणेति भावः । किंशब्द उत्तरत्राप्यनुवर्तनीयः । "उपान्वध्याङ्वसः" इति सुरनद्याः कर्मत्वम् । उत अथवा विनयेनानुकूल्येन सहितं यस्मिन् कर्मणि तद्यथा तथा गुणैः सौभाग्यसौशील्यादिभिरुदारान् रम्यान् दारान् जायाः परिचरामः किमनुसरामो वा सांसारिकधर्मेणेति भावः । "भार्या जायाऽथ पुंभूम्नि दाराः" इत्यभिधानात् दारशब्दस्य पुस्त्वं बहुत्वं च । तथा शास्त्रौघान् शास्त्रकलापान् पिबामः किम् । अत्रैव कीर्तिप्रतिष्ठाविज्ञानार्थमित्यर्थः । "पाघ्राध्मा०" इत्यादिना पातेः पिबादेशः । उत यद्वा विविधानि काव्यानि काव्यनाटकालङ्कारा एवामृतरसाः सुधाद्रवाः अथवा विविधेषु काव्येषु ये अमृतरसास्तान् पिबामः । सकलकलाकौशलार्थमित्यर्थः । जनशब्देनात्र तत्समुदायो विवक्षितः । तथा च जने जनसमुदाये कतिपये कियन्तः ये निमेषास्तावन्मात्रकालपरिच्छिन्नमायुर्यस्य तस्मिन् सतीत्यर्थः । जात्येकवचनविवक्षायां तु जनेष्वस्मासु कतिपयनिमेषायुःषु सत्स्वित्यर्थः । किमुक्ततपश्चरणादिषु किंवा कुर्मः । सर्वेषामाचरणे अवकाशाभावादिति भावः । न विद्मः न जानीमः । निश्चयाभावादिति भावः ॥७६॥

तप करते हुए गंगातटपर वसें अथवा गुणवान् स्त्रियोंके संगप्रेमसहित विचरें, वेदान्तशास्त्रसमूहको सुनें वा अनेक काव्यामृतरस पियें।

१ गुणोदर्कान् । २ द्रुत इति च पाठान्तरम् ।

भावार्थ इस निमेषमात्र आयुष्यवाले देहको देखकर हम नहीं जान सकते कि क्या करें ॥ ७६ ॥

ततः किमित्याशंक्य ततो निश्चयमाह—

दुराराध्याश्चामी तुरगचलचित्ताः क्षितिभुजो
वयं तु स्थूलेच्छाः सुमहति फले बद्धमनसः।
जरा देहं मृत्युर्हरति दयितं जीवितमिदं
सखे नान्यच्छ्रेयो जगति विदुषोऽन्यत्र तपसः ॥ ७७ ॥

दुराराध्या इति ॥ तुरगाः उत्तमाश्वास्तद्वच्चलानि चित्तानि येषां ते अस्थिरहृदया इत्यर्थः। अमी परिदृश्यमानाः क्षितिभुजो राजानः दुराराध्या आराधयितुं प्रसादयितुमशक्याः प्रसादोन्मुखीकरणाशक्या इत्यर्थः। तथा स्थूलेच्छाः अधिकाशात्तत्परा वयं च सुमहति बहुले फले धने बद्धं मनो येषां ते तथोक्ताः बहुधनाकांक्षिण इत्यर्थः। आकांक्षामात्रमेवास्माकं न तु ते दास्यन्तीतिं भावः। तथा जरा वार्धकदशा देहं हरति क्षिणोति। मृत्युरन्तकश्च दयितं प्रियतममिदं जीवितमिमान् प्राणानित्यर्थः। हरति। अतः हे सखे! जगत्यस्मिन् लोके विदुषस्तत्त्वज्ञस्य पुंसस्तपसोऽन्यत्रान्यत् इतरदित्यर्थः। अन्यद्साधारणमुत्तमं श्रेयः मोक्षसाधनं नास्ति ततोऽन्यत्परमं श्रेयोऽन्तरं नास्ति अतः सर्वदा तदेव सम्पादनीयमिति भावः ॥ ७७ ॥

राजा घोडेके समान चञ्चलचित्त हैं, इससे इनकी सेवा करनी बडी कठिन है, हम तो मोटी इच्छावाले हैं, बडे फलमें हमारा मन बंधा (लगा) हुआ है और देहकी वृद्ध अवस्था है और जीवितको मृत्यु हर लेती है इससे हे मित्र! ज्ञानवान्‌को तपसे अन्य कल्याण कहीं नहीं है ॥ ७७ ॥

अथ तपसः श्रेयोहेतुत्वे तदाचरणस्य किंवा योग्यस्थानमित्याशङ्कायामाह—

माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने।

---

१ दुराराध्यः स्वामी। २ सकलं इति च पाठान्तरम्।

युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरतटीकुञ्जे निवासः क्वचित् ॥ ७८ ॥

मान इति ॥ अभिमाने म्लायिनि भग्ने सति । तथा वसुनि धने च खण्डिते विनष्टे सति । "दैवभेदेऽनले रश्मौ वसू रत्ने धने वसु ।" इति विश्वः । अत एवार्थिनि याचके व्यर्थे अलब्धमनोरथत्वान्निरर्थके प्रयाते सति वाञ्छितार्थालाभाद्वैमुख्यं गते सतीत्यर्थः । बन्धुजने पुत्रमित्रादिबन्धुजनसमूहे क्षीणे अन्नाद्यलाभात्कृशपरिजने भृत्यवर्गे गते वेतनदानाभावादन्यत्रगते सति । तथा शनैर्मन्दं यौवने तारुण्ये नष्टे गलिते सति । अनित्यत्वस्वाभाव्यात्सर्वस्मिन् विपन्ने सतीत्यर्थः । सुधियां बुद्धिसम्पन्नानामेतदेव इदमेवैकं केवलमत्यन्तं युक्तमुचितम् । किमेतदित्यत आह । क्वचित् कस्मिंश्चित् जह्नुकन्यापयःपूताः गङ्गाजलपवित्राः ग्रावाणः पाषाणाः यस्मिन् स तथोक्तो यो गिरीन्द्रस्तस्य कन्दरतट्यां हिमवद्रेर्विहारस्थल्यां निकुञ्जो लतामण्डपस्तस्मिन्निवास इति यत् तदेतद्युक्तमिति सम्बन्धः । तस्यैव श्रेयःसाधनभूततपोयोगस्थलत्वादिति भावः । "निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ।" इत्यमरः ॥ ७८ ॥

जब प्रतिष्ठा भंग हुई, द्रव्य नष्ट हो गया, याचक लोग आय २ विमुख फिर जाने लगे, भ्राता स्त्री पुत्र और सम्बन्धी आदि भ्रष्ट होगये उस समय बुद्धिमान पुरुषोंको उचित है कि जिस पर्वतके पाषाण गंगाजलसे पवित्र हैं उसकी कंदराके समीप तटी और कुंजमें कहीं निवास करें ॥ ७८ ॥

अथ चित्तस्य नित्यानित्यवस्तुविवेके सति रम्यमपि सर्वमरम्यमेव प्रतिभातीत्याह द्वाभ्याम्—

रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसमागमागतसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितबाष्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामुपगते चित्ते न किंचित्पुनः ॥ ७९ ॥

रम्या इति ॥ चन्द्रमरीचयश्चन्द्रकिरणाः रम्याः रमणीया उद्दीपकत्वादिति

१ दरी । २ समागमः शमसु० इति च पाठान्तरम् ।

भावः। तथा तृणवती शाद्वलप्राया वनान्तस्थली वनमध्यभूमिः रम्या रन्तुं योग्या। "जानपद०" इत्यादिना अकृत्रिमार्थे ङीप्। तथा साधुसमागमात् सज्जनसहवासादागतं प्राप्तं यत्सुखं तदपि रम्यम्। कवयते वर्णयतीति कविस्तस्य कर्म काव्यम्। ब्राह्मणादित्वात् ष्यञ्। तस्य पङ्कजादिवद्गूढत्वाद्रसोल्लसितशब्दार्थसंघटनार्थकमेव न कर्ममात्रं तथा च काव्येपूक्तप्रकारेषु काव्यनाटकादिषु कथाः श्रव्यवाचः उपाख्यानानि वा रम्या मनोहराः तथा कोपोपहिताः प्रणयकलहादिषु क्रोधवशादुत्पन्ना ये बाष्पबिन्दवः अश्रुकणास्तैस्तरलमाविलं प्रियाया मुखं रम्यम्। अतः सर्वमपि रम्यमुक्तरीत्या सकलमपि मनोहरमेव। किन्तु चित्ते मनसि अनित्यतां नित्यानित्यवस्तुविचारतत्परतामित्यर्थः। उपगते सति किंचित्पुनः किञ्चिदपि रम्यं न भवति ब्रह्मानन्दं विनेति शेषः ७९

चन्द्रमाकी किरणें भली लगती थीं, हरिततृणवाली वनभूमि सुहावनी देख पडती थी, मित्रोंके समागमसे अच्छा सुख होता था, शृंगाररसवाली काव्यकथा प्यारी जान पडती थी, क्रोधके आंसुओंके बून्दसे चंचल और मनभावन प्यारीका मुख सुंदर लगता था पर जब संसारकी अनित्यता चित्तमें निश्चित हुई तब सब रमणीयता जाती रही ७९

उक्तमेवार्थं विवृण्वन्निगमयति—

रम्यं हर्म्यतलं न किं वसतये श्रव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये।
किं तु भ्रान्तपतङ्गपक्षपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः॥८०॥

रम्यमिति॥ हर्म्यतलं प्रासादोपरिप्रदेशः वसतये निवासाय न रम्यं किम्। रम्यमेवेत्यर्थः। तथा गेयं गानम्। "भव्यगेय०" इत्यादिना कर्तरि निपातः। तद्गादि यस्य तत्तथोक्तम्। आदिशब्देन वीणानादादिकमपि संगृह्यते। "शेपाद्विभाषा" इति कप्प्रत्ययः। न श्रव्यं किं श्रोत्रसुखावहं न किं श्रव्यमेवेत्यर्थः। तथा प्राणसमायाः प्राणप्रियनायिकायाः समागमेन सम्भोगेन यत्सुखं तच्च अधिकप्रीतये अत्यन्तसन्तोषाय नैव भवति किम् भवत्येवेत्यर्थः। किन्तु सन्तः वस्तुविचारतत्परपुरुषाः सकलमशेषं हर्म्यतलनिवासादिकमपि भ्रान्तः पतनेच्छया

१ पतत्पतंगपव० इति पाठान्तरम्।

परिभ्रमन् यः पतङ्गः शलभः । " पतङ्गः शलभे भानौ " इति विश्वः । तस्य पक्षयोः पवनेन गरुतोः वायुना व्यालोलोऽतिचञ्चलो यो दीपांकुरो दीपकलिका तस्य च्छाया कान्तिस्तद्वच्चञ्चलं तरलं नश्वरमित्यर्थः । आकलय्यालोच्य वनान्तं वनमध्यं गताः । शाश्वतब्रह्मानन्दसाधनतपश्चर्यार्थमिति भावः ॥ ८० ॥

संतजनोंके निवासके लिये क्या महल न था और सुननेके योग्य क्या उत्तम २ गाना न था और क्या अधिक प्रीति करनेवाली प्राण प्यारी स्त्रीका सुख न था अर्थात् यह सब था तौभी संत जन इस जीवलोक ( जगत् )को भ्रमते हुए मूर्ख पतंगके पक्षोंके पवनसे हिलते हुए दीपककी छायाके समान चंचल देखकर वनमें चले गये ॥ ८० ॥

ननु वस्तुविचारप्रसक्तानुप्रसक्त्या तपसोऽप्यन्तावश्यकत्वमुक्तम्, तत्किंविधमित्याशङ्कायां शिवार्चनव्यतिरेकेणान्यन्न किञ्चिदप्यस्तीति मनसि कृत्वेदानीं तावच्छिवार्चनं वर्णयति । तच्चार्चनं द्विविधं बाह्यमाभ्यन्तरं चेति । तत्राद्यं बहूपकरणसाध्यं बहिर्मुखविषयत्वादमुख्यं चेत्याभिप्रेत्यादौ तदुपेक्ष्य मुख्याभ्यन्तरपूजनप्रकारमेवानुभवमभिनीयाह–

आसंसारं त्रिभुवनमिदं चिन्वतां तात तादृङ्-
नैवास्माकं नयनपदवीं श्रोत्रमार्गं गतो वा ।
योऽयं धत्ते विषयकरिणीगाढगूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमानायलीलाम् ॥ ८१ ॥

आसंसारादिति ॥ अत्र तातेत्याश्चर्यश्रवणाभिमुखीकरणार्थमादरातिशयद्योतकं पृथग्जनं प्रति सम्बोधनवचनं हे तात जनक । " तातस्तु जनकः पिता " इत्यमरः । आसंसारादनादिसंसारमारभ्येत्यर्थः । पदद्वयमेतत् । विकल्पपदसमासः । इदं प्रसिद्धं त्रयाणां भुवनानां समाहारस्त्रिभुवनं भुवनत्रयमपि । "तद्धितार्थ० " इत्यादिना समाहारसमासे पात्राद्यदन्तत्वान्न स्त्रीत्वम् । चिन्वतां मार्गमाणानां कर्मवशात्तत्र प्रवेशलाभादिति भावः । अथवा चिन्वतां परामृशतामस्माकं नयनपदवीं लोचनमार्गं वा श्रोत्रमार्गं श्रवणपथं वा तादृक् तथाविधः पुमान् न गतो न प्राप्त एव । तादृक् पुमान् न श्रुतो न दृष्टश्चेत्यर्थः । कोऽसावित्यत आह । योऽयं पुमान् प्रतीयमानतया भोगसाधनानि स्रक्चन्दन-

१ वर्त्मागतो वा । २ संयमालानलीलाम् इति च पाठान्तरम् ।

वनितादीनि विषयास्त एव करिण्यः इभ्यस्तासु गाढोऽतिदृढो गूढः अप्रकाशश्च योऽभिमानः अत्यन्तसाक्तित्वाग्रहस्तेन क्षीवस्य मत्तस्य । " मत्ते शौण्डोत्कट-क्षीवाः " इत्यमरः । " क्षिव मदे " इत्यस्य धातोरनुपसर्गात् " फुल्लक्षीवकृ-शोल्लाघाः " इति निष्ठातो निपातः । अन्तःकरणमेव करी तस्य चित्तमत्तेभस्य संयमे सम्यङ्नियमने आनायस्य रज्जुनिर्मितजालस्य लीलाम् " आनायः पुंसि जालं स्यात् " इत्यमरः । आलानेति पाठे आलानस्य बन्धनस्तम्भस्य लीलां धत्ते । दुर्दमनोनियमनसमर्थो भवतीत्यर्थः । तादृगिति सम्बन्धः । अत्रेदृक्पु-रुषस्य नयनश्रोत्रपथविषयसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धेऽसम्बन्धरूपाति-शयोक्तिस्तया च मनोनियमनस्यात्यन्ताशक्यत्वरूपं वस्तु व्यज्यत इत्यलंका-रेण वस्तुध्वनिः । तथा च केनचिद्योगेन मनो नियम्य तत्त्वब्रह्मानन्दसाधनभू-तान्तरङ्गशिवार्चनतपोऽवश्यं कर्तव्यमिति गूढोऽयमभिप्रायः । तथा अन्यधर्म-स्यान्यत्र सम्बन्धासम्भवादानायलीलामिव लीलाभित्यौपम्यपर्यवसानसम्भवद्व-स्तुसम्बन्धरूपो निदर्शनालंकारः । स चोक्तरूपकेणाङ्गाङ्गिभावेन संकीर्यते॥८१॥

जबसे यह संसार प्रवृत्त हुआ आजतक हे भैय्या ! हम त्रिभुवनमें खोजते फिरते हैं पर ऐसा पुरुष देखने और सुननेमें न आया जो विष-यरूपी हाथिनीमें पैदा हुआ है तथा जिसको अत्यंत अहंकार है ऐसे अन्तःकरणरूपी उन्मत्त हाथीको रोककर वशमें रक्खें अर्थात् विषयोंमें फँसा मन वशमें करें ॥ ८१ ॥

अथ तपःप्रवृत्तिप्रकारमेवाह—

यदेतत्स्वच्छन्दं विहरणमकार्पण्यमशनं
　　सहार्यैः संवासः श्रुतमुपशमैकव्रतफलम् ।
मनो मन्दस्पन्दं बहिरपि चिरस्यापि विमृशन्
　　न जाने कस्यैषा परिणतिरुदारस्य तपसः ॥८२॥

यदिति ॥ स्वच्छन्दं यथेच्छमपराधीनमिति यावत् । विहरणं विहारश्च । न विद्यते कार्पण्यं दैन्यं यस्मिंस्तत्तथोक्तमशनं भिक्षान्नभोजनं कन्दमूलाद्याहारो वा । तथा आर्यैर्विज्ञानसंपन्नैः सह संवासः समागमश्च । तथा उपशमो विषय-भोगाविरतिरेव एकं मुख्यं व्रतफलं यस्मिंस्तत्तथोक्तं शान्तिफलकतपश्चरणबोधक-मित्यर्थः । श्रुतं वेदान्तशास्त्रश्रवणं च । " श्रुतं शास्त्रावधृतयोः " इति विश्वः । मनोऽप्यन्तः-तथा बहिः बाह्यदेशे मन्दस्पन्दं मन्दप्रसारमन्तर्मुखत्वादिति भावः। 

करणं चेति यदेतत्सर्वं वर्तत इति शेषः । " नपुंसकमनपुंसकेनैकवच्च " इत्यादिना एकशेषः । एषेति विधेयप्राधान्या स्त्रीलिङ्गता । " शैत्ये हि यत्सा प्रकृतिर्जलस्य " इतिवत् । कस्योदारस्य महतस्तपसः परिणतिः परिपाको वा न जाने न वेद्मीत्यर्थः। यद्वा परिणतिः परिणामो वा न जाने । किंवा तप एवंरूपेण परिणतं तन्न जानामीत्यर्थः । कथम्भूतः सन्नपि चिरस्य चिरकालमित्यर्थः । विमृशन्परामृशन्नपि । " चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः । " इत्यमरः । विभक्तिप्रतिरूपकमव्ययम् । तच्च तपः शिवपूजनमेव कथमन्यथान्यस्येदृक्फलसाधने एवंविधपरिणमने वा सामर्थ्यं सम्भवेदिति भावः ॥ ८२ ॥

स्वाधीन विचरना, विना याचे भोजन करना, श्रेष्ठ पुरुषोंके संग रहना, ऐसा शास्त्र कहना वा सुनना कि जिसका उपशमरूपी व्रतही फल हो और यदि मन बाह्य पदार्थोंमें हो तो विचार करता- हुआ मन्द मन्द गमन करे; यह सब प्राप्त होना हम नहीं जानते कि किस प्राचीन और बडे तपका फल है ॥ ८२ ॥

अथ शिवचरणमेव शरणमिति स्मरणमभिनीयाह—

जीर्णा एव मनोरथाश्च हृदये यातं च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना ।
किं युक्तं सहसाभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
हा ज्ञातं मदनान्तकाङ्घ्रियुगलं मुक्त्वास्ति नान्या गतिः॥८३

जीर्णा इति ॥ मनोरथा विषयाभिलाषाश्च हृदयेऽन्तरङ्ग एव जीर्णा नष्टा- वांछामात्रेणानुभूता इत्यर्थः । तच्चाङ्गेष्ववयवेषु तत्तथाभूतं कामिनीसम्भोगोपयुक्तमित्यर्थः । यौवनं यातं गलितम् । हन्तेति विषादे । तथा गुणज्ञा गुणग्राहिणः सहृदया इति यावत् । तैर्विना । "पृथग्विना" इत्यादिना तृतीया । गुणा विद्या- विनयादयश्च वन्ध्यफलतां निष्फलतां याता गताः । अनुभावकाभावान्निरर्थका जाता इत्यर्थः । तथा बलवान् बलिष्ठः दुर्जय इत्यर्थः । कालः कालस्वरूपः अपरावर्त इति यावत् । अक्षमी असहनश्च, कृतान्तो यमः सहसाभ्युपैति अभियुङ्क्ते प्राणापहरणार्थमिति भावः । " कृतान्तो यमसिद्धान्त० " इत्यमरः । अतः किं युक्तमुचितमीदृग्दशायां किं कर्तव्यमित्यर्थः । हा कष्टं तथापीदमेकं

१ जरा यौवनं । २ ध्याज्ञातं स्मरशासनाङ्घ्रि० इति च पाठान्तरम् ।

तरणसाधनमस्तीति स्मरणमभिनीयाह। ज्ञातमवगतं किम्। ज्ञावमित्यत आह। मदनान्तकस्य शम्भोरंघ्रियुगलं पादयुग्मं मुक्त्वा विहायान्या गतिः शरणं नास्ति अतस्तदेव शरणमिति भावः ॥ ८३ ॥

सब मनोरथ हृदयहीमें जीर्ण हो गये, कोईभी सिद्ध न हुए, युवावस्था भी व्यतीत हुई और गुणग्राहकोंके विना सब गुण निष्फल हो गये, अब सर्वनाशक बलवान् काल सहसा निकट चला आता है इससे अब यह जाना कि कामनाशक शिवजीके दोनों चरण छोड और कोई दूसरी गति नहीं ॥ ८३ ॥

ननु "यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्। ध्यातुर्मनःशमलशैलविसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविन्दम्॥" इत्यादिना शिवाद्यशेषदेवताकल्याणप्रदे अखिललोकाराध्ये संसारार्णवतरणयानपात्रे भगवतश्चरणाविन्दे जाग्रति कथं शिवांघ्रियुगलं विनान्या गतिर्नास्तीति प्रलपति स इत्याशंक्याह—

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि।
नं वस्तुभेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ८४ ॥

महेश्वर इति ॥ जगतां चतुर्दशभुवनानामधीश्वरे स्वामिनि महेश्वरे शिवे वा। तथा जगतामन्तरात्मनि अन्तःकरणसाक्षिणि अन्तर्यामिणीति वा। अथवा अन्तर्भूतात्मनि जीवात्मस्वरूपे अविद्याप्रतिविम्बचैतन्यत्वेन तथाभूतत्वादिति भावः। यद्वा जगन्त्यन्तरात्मनि यस्य तस्मिन् तथोक्ते कुक्षिस्थाखिलभुवन इत्यर्थः। जनानर्दयतीति जनार्दने विष्णौ वा। मे मम वस्तुभेदप्रतिपत्तिः अयं महेश्वरः अयं जनार्दन इति वस्तुगोचरभेदबुद्धिर्नास्ति। "शिवाय विष्णुरूपाय" इत्यादिना तयोर्वस्तुतो भेदाभावादिति भावः। तथापि भेदप्रतिपत्त्यभावेऽपि तरुणेन्दुः शेखरः शिरोभूषणं यस्य तस्मिन् शिवे भक्तिर्भजनानुरागोऽस्तीति शेषः। अत एव नान्या गतिरित्युक्तमिति भावः। इदं च "स्वभावो दुरतिक्रमः" इति न्यायादित्यवगन्तव्यम्। वंशस्थवृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ ८४ ॥

१ तयोर्न इति पाठान्तरम्।

जगदीश्वर महेश्वर अर्थात् शिव और जगदात्मा जनार्दन अर्थात् विष्णु इन दोनोंमें मुझे यह शंकर यह विष्णु इस प्रकार वस्तुभेदबुद्धि नहीं तथापि जिनके भालमें चंद्र विराजमान है उन्हींमें हमारी प्रीति है ८४

अथ स्थायिनः शमस्योदयवशाच्छान्तरसाभिव्यञ्जकवाक्यान्याह पंचभिः—

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीना शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिवशिवशिवेत्युच्चवचसः
कदा यास्यामोऽन्तर्गतबहुलबाष्पाकुलदशाम् ॥ ८५ ॥

स्फुरदिति ॥ शान्ता उपरता ध्वनयः पक्षिमृगादिरुतानि यासु तासु तथोक्तासु । एतेन चित्तविक्षेपहेतुराहित्यं सूच्यते । रजनीषु रात्रिषु स्फुरन्ती प्रकाशमाना स्फारा वृद्धा च या ज्योत्स्ना चन्द्रिका तया धवलितं पाण्डुरीकृतं तलं प्रदेशो यस्य तस्मिन् क्वापि कस्मिंश्चित् द्युसरितो गङ्गायाः सम्बन्धिनि पुलिने सैकते सुखं यथा तथा आसीनाः उपविष्टाः सन्तः भवाभोगात्संसारविस्ताराद्‌द्विग्नाः विह्वलाः दुःखजनकत्वादिति भावः । वयमिति शेषः । अतः शिवेत्यादित्रिवारमुच्चानि ताराणि वचांसि आक्रन्दवचनानि येषां ते तथोक्ताः। आर्तवचसः इति पाठे दैन्यवचनाः सन्तः । कदा कस्मिन् वा समये अन्तरभ्यन्तरे गता नियमनवशादन्तर्लीना इति यावत् । बहुलाश्च ये बाष्पा आनन्दाश्रूणि तैराकुला व्याकुला या दशा अवस्था तां यास्यामः । अन्तर्नियमितानन्दबाष्पपर्याकुलावस्थां कदा गमिष्याम इत्यर्थः।दशमिति पाठे बाष्पाकुला या दृग्दृष्टिस्तां यास्याम इत्यन्वयः । कदा स्यामानन्दोद्गतबहुलबाष्पाकुलदृशः इति पाठे आनन्दादुद्गता उत्पन्ना ये बहुलबाष्पास्तैराकुला दृशो येषां ते तथोक्ताः कदा स्याम भवेम । तदानीं खलु वयं कृतकृत्या इति भावः ॥ ८५ ॥

जहां प्रकाशित फैली चांदनीसे निर्मल स्थल है ऐसे गंगातटमें सुखसे बैठे रहें जब सब ध्वनि बन्द हो तब रात्रिमें शिव शिव शिव ऐसे ऊंचे स्वरसे कहते हुए संसारके दुःखसे व्याकुल हो अभ्यंतरमें लीन हुए आनन्दाश्रुओंसे व्याकुल हुई ऐसी अवस्थाको हम कब प्राप्त होंगे ? ॥ ८५ ॥

---

१ स्यार्तवचसः । २ स्यामानन्दोद्गतबहुलबाष्पप्लुतदृशः इति च पाठान्तरम् ।

वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः
स्मरन्तः संसारे विगुणपरिणामां विधिगतिम् ।
वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणा-
स्त्रियामा नेष्यामो हरचरणचिन्तैकशरणाः ॥ ८६ ॥

वितीर्ण इति ॥ सर्वस्वे निखिलधनधने वितीर्णे दत्ते अर्थिसात्कृते सति । " स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने " इत्यमरः । ततस्तरुणा प्रत्यग्रा या करुणा भूतदया तया पूर्णानि पूरितानि हृदयानि येषां ते तथोक्ताः । तथा संसारे विधिगतिं दैवप्रवृत्तिं विगुणपरिणामां विषमपरिपाकामकुशलपर्यवसायिनीमिति यावत् । स्मरन्तः मनस्यनुसन्दधानाः सन्तः वयं पुण्यारण्ये तपोवने हरचरणचिन्ता शिवपादारविन्दध्यानमेवैकं मुख्यं शरणं रक्षणं येषां ते तथोक्ताः सन्तः परिणताः परितो व्याप्ताः शरच्चन्द्रकिरणाः शारदेन्दुमयूखाः यासु तास्तथोक्तास्त्रियामाः रात्रीः नेष्यामो गमयिष्यामः । कदेति शेषः । " द्वयोः प्रथमचरमयामार्धयोर्दिनव्यवहारत्त्रयो यामा यस्याः सा त्रियामा " इति स्वामी ॥ ८६ ॥

सर्वस्व नष्ट होनेपर बडी करुणासे पूर्ण हृदयवाले, संसारमें विषम परिपाकवाली दैवगतिका स्मरण करते हुए और शिवके चरणके ध्यान अपना रक्षक समझनेवाले ऐसे हम किसी पवित्र वनमें बैठके शरदृतुकी चांदनीसे युक्त ऐसी रात्रियोंको कब व्यतीत करेंगे ? अर्थात् कब हमारा यह संसार छूटेगा ॥ ८६ ॥

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८७ ॥

कदेति ॥ कदा कस्मिन् वा काले वाराणस्यां काश्याममरतटिनीरोधसि गङ्गातीरे वसन् तिष्ठन् तथा कौपीनं गुह्याच्छादनचेलखण्डं वसानः आच्छादयन् लोकविरोधपरिहारार्थं तावन्मात्रपरिग्रह एव न तु परिग्रहान्तरापेक्ष

इत्यर्थः । " वस आच्छादने "इति धातोः शानच् । शिरस्यञ्जलिपुटं करसम्पुटं निदधानः सन् अये भो गौरीनाथ पार्वतीपते । त्रयाणां पुराणां समाहारस्त्रिपुरम् । पात्रादित्वान्न ङीप् । तस्य हरतीति हरः । हे त्रिपुरहर हे त्रिपुरान्तक शं सुखमस्माद्भवतीति शम्भो त्रिनयन हे त्र्यम्बक । क्षुभ्नादित्वान्न णत्वम् । एतदामन्त्रणचतुष्टयं परमेश्वरस्य लोकसंग्रहकारणत्वाशक्यकार्यकरणसामर्थ्यत्वभक्तजनसुखसन्धायकत्वासाधारणमहिमास्पदत्वद्योतनार्थमित्यवगन्तव्यम् । प्रसीद प्रसन्नो भवेति क्रोशन्नुच्चै रटन् दिवसाननेकान् निमिषमिव क्षणमिव नेष्यामि । अत्र भावितीव्रनरकयातनानुचिन्तनादिभिर्विभावैर्जनितः कौपीनधारणशिरोऽञ्जलिपुटसंघटनादिभिरनुभावैरभिव्यक्तः कदेतिपदसूचितेन चिंताख्येन सञ्चारिभावेन च परिपुष्टः स्वात्मावमानलक्षणो निर्वेदस्थायी शांतरसः परिस्फुरतीत्यवगन्तव्यम् । एवमुत्तरत्रापि योज्यम् ॥ ८७ ॥

काशीजीमें गंगाके तटपर खडा हुआ, कौपीनमात्र पहिरा हुआ, शिरपर अंजलिपुट धरा हुआ तथा हे गौरीनाथ! हे त्रिपुरहर! हे शंभो! हे त्रिनयन! मुझपर प्रसन्न हो इस प्रकार पुकारता हुआ मैं अनेक दिनोंको निमिषके समान कब व्यतीत करूंगा ॥ ८७ ॥

स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो त्वां
ध्येये ध्यानं निवेश्यं[1] क्षितिधरकुहरग्रावपर्यङ्कमूले ।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात्स्मरारे
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥ ८८ ॥

स्नात्वेति ॥ गंगाया इमानि गाङ्गानि । "तस्येदम्" इत्यण् । तैः पयोभिर्गंगाजलैरित्यर्थः । स्नात्वा शुद्धो भूत्वा हे विभो शंभो, शुचिभिः शुद्धैः शास्त्रसंमतैरिति यावत् । कुसुमैः फलैश्च त्वामर्चयित्वा समाराध्य । एतेन बाह्यपूजाया अप्यंशतः प्राधान्यमस्तीति सूचितम् । ध्येये ध्यातुं योग्ये वस्तुनि त्वच्चरणारविन्द एवेत्यर्थः । ध्यानं निवेश्य एकाग्रचित्तो भूत्वेत्यर्थः । तथा क्षितिधरकुहरे यो ग्रावा पाषाणः स एव पर्यङ्कः सुखशय्या तस्य मूले निषण्णः सन्निति शेषः । समाधिव्युत्थानानन्तरं सुखसंवेशयोग्यताद्योतनार्थं ग्राव्णि पर्यङ्कत्वरूपणम् ।

1 नियोज्य । २ तव चरणरतो ध्यानमार्गैकप्रसन्नः इति च पाठान्तरम् ।

आत्मन्येवारमत इत्यात्मारामो विषयान्तरासक्तिशून्यः सन्नित्यर्थः । " रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि । " इति स्मृतेः । तथा फलाहारः शरीरधारणार्थमिति भावः । गुरुवचनात् आचार्योपदिष्टकर्माचरणतत्परः सन्नहम् । इत्थंभूतताया एव श्रेयोहेतुत्वादिति भावः । हे स्मरारे मदनान्तक, शंभो त्वत्प्रसादात्त्वदनुग्रहात् मकरेण मकराकाररेखया सह वर्तत इति समकरश्चरणो यस्य तस्मिन् तथोक्ते पुंसि महाभाग्यसंपन्ने पुरुषे विषये राज्ञीत्यर्थः । सेवासमुत्थं परिचर्यासमुत्पन्नं दुःखं कदा मोक्ष्ये तथा मामनुगृहाणेत्यर्थः । परमेश्वरानुग्रहं विना श्रेयोलाभाभावादिति भावः । समकरचरणस्य महाभाग्यसंपन्नत्वमुक्तं सामुद्रिके । " मकरो मत्स्यरेखा च पद्मशंखाकृतिः पदे । महाधनी महाभोगी दाता दीर्घायुरेव च ॥ " इति ॥ ८८ ॥

हे स्वामी कामदेवके शत्रु शिव ! मैं गंगाजलसे स्नान कर सुन्दर पवित्र फूल फलोंसे तुझे पूज पर्वतकी कंदरामें पत्थरकी चट्टानकी शय्यापर बैठ ध्यानयोग्य तुम्हारी मूर्तिमें ध्यानावस्थित हो गुरुके वचन मान आत्माराम फलाहारी होके तुम्हारी कृपासे कब मैं मकररेखासे युक्त चरणवाले अर्थात् महाभाग्यवाले पुरुष ( राजा ) की सेवासे उत्पन्न हुए दुःखसे छूटूंगा ॥ ८८ ॥

एकाकी निःस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ८९ ॥

एकाकीति ॥ एकाकी असहायः संगरहित इति यावत् । " संगात्संजायते कामः " इत्यादिसंगजनितकामादिपरंपराया अनर्थहेतुत्वादिति भावः । " एकादाकिनिच्चासहाये " इत्याकिन्प्रत्ययः । कुतः निःस्पृहः विषयाभिलाषशून्य अत एव शान्तः रागाद्यनुपहतचित्तः शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा अतः पाणिरेव पात्रं भिक्षापात्रं यस्य सः तथोक्तः । तथा दिश एवाम्बराणि यस्य स तथोक्तः सन्नहमिति शेषः । हे शम्भो कर्मणां सञ्चितप्रारब्धानां निर्मूलने समूलविध्वंसने क्षमः समर्थः कदा भविष्यामि कर्मबन्धात् कदा मोक्ष्यामीत्यर्थः । " भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ " इति ईश्वरसाक्षात्कारमन्तरा कर्मक्षयाभावात्तदर्थं त्वं प्रत्यक्षो भवेति भावः ॥ ८९ ॥

असंग इच्छारहित और शान्तरूप हाथहीका पात्र बनाये दिगम्बर और कर्मोंकी जड उखाडनेमें समर्थ हे शिव ! ऐसे हम कब होंगे ८९

अथैवंभूतानां शिवप्रसादान्मोक्षमार्गोऽविलम्बेनैव सुलभो भवतीति निगमयति–

पाणिं पात्रयतां निसर्गशुचिना भैक्षेण सन्तुष्यतां
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।
अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशा-
मध्वा कोऽपि शिवप्रसादसुलभः सम्पत्स्यते योगिनाम्॥ ९०

पाणिमिति ॥ पाणिं करतलमेव पात्रं भोजनभाजनं कुर्वतां पात्रयताम् । पात्रशब्दात् " तत्करोति ० " इति ण्यन्ताल्लटः शत्रादेशः । निसर्गशुचिना स्वभावपरिपूतेन भैक्षेण भिक्षाकदम्बकेन सन्तुष्यतां सन्तोषं प्राप्नुवताम् । " भिक्षादिभ्योऽण्" । " भैक्षं भिक्षाकदम्बकम् ". इत्यमरः।यत्र क्वापि यस्मिन् कस्मिन् प्रदेशे श्मशाने वने वेत्यर्थः। निषीदतामुपविशताम् । मुहुः पौनःपुन्येन विश्वं प्रपञ्चं बहुतृणमीषदसमाप्तं तृणं तृणकल्पमित्यर्थः।' विभाषा सुपो बहुच्पुरस्तात् " इति बहुच्प्रत्ययः । प्रकृतेः पूर्वं भवति । " स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गकः । " इति प्रकृतिवचनात्प्रकृतिलिंगता । पश्यतामाकलयताम् । तथा तनोरत्यागेऽपि देहसम्बन्धशून्यत्वाभावेऽपि अखण्डोऽपरिच्छिन्नो यः परमानन्दो ब्रह्मानन्दस्तस्यावबोधमनुभवं स्पृशन्तीति तथोक्तानां जीवन्मुक्तत्वादिति भावः। " स्पृशोऽनुदके क्विन् " इति क्विन्प्रत्ययः । योगिनां ध्याननिष्ठानां शिवप्रसादेन सुलभः सुलभ्यः कोऽप्यनिर्वाच्यः अध्वा मोक्षमार्ग इत्यर्थः। सम्पत्स्यते सम्पन्नो भवति ॥ ९० ॥

जो हाथकोही भोजनोचित पात्र बनाते हैं, जो स्वाभाविक पवित्र भिक्षाहारसेही सन्तुष्ट रहते हैं, जो विश्वको तृणके समान देखते हैं और जो शरीरसंबन्धके न छूटनेपरभी अखण्ड परमानन्दका अनुभव लेते हैं ऐसे योगियोंकोही शिवजीके प्रसादसे सुलभ ऐसे मोक्षमार्गकी प्राप्ति होती है ॥ ९० ॥

## अथावधूतचर्या ।

शिवार्चनस्य मोक्षोपयोग्यावधूतभावफलकत्वात् " अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशाम् " इत्युपक्रान्तत्वाच्चेदानीं तावदवधूतचर्यामाह–अथाव-

धूतचर्येति । अवधूतो नाम ब्रह्मात्मैक्यानुसन्धानतत्परो विस्मृतबहिःप्रपञ्चो जीवन्मुक्तशब्दवाच्योऽमलिनो योगपुरुषस्तस्य चर्या आचार उच्यत इति शेषः । उपक्रान्तामवधूतचर्यां दशभिर्वर्णयति—

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्षभैक्षमशनं निद्रा श्मशाने वने ।
स्वातन्त्र्येण निरङ्कुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम् ९१

कौपीनमिति ॥ शतखण्डैरनेकशकलैर्जर्जरतरमतिविशीर्णं कौपीनं गुह्याच्छादनचीरखण्डं यदि अस्ति चेदित्यर्थः । एवमुत्तरत्रापि । " कौपीने स्यादकार्ये च गुह्यचीरप्रदेशयोः । " इति विश्वः । तादृशी तथाभूतशतखण्डजर्जरतरैवेत्यर्थः । कन्था पुनः कन्था चास्ति यदि । नैश्चिन्त्यं विषयचिन्तारााहित्यं च यदि तथा निरपेक्षमन्नानुवर्तनापेक्षारहितं भैक्षमशनं भोजनं यदि । श्मशाने प्रेतभूमौ वने महारण्ये वा निद्रा च यदि । स्वातन्त्र्येण स्वच्छन्देन निरंकुशमप्रतिबन्धं विहरणं विहारश्च यदि । सदा प्रशान्तं प्रसन्नम् । "वा दान्त० " इत्यादिना निपातः । स्वान्तं चित्तं यदि । योगे महोत्सवे योगः समाधिरेव महोत्सवस्तस्मिन् स्थैर्यं च यदि अस्ति चेत्तर्हि त्रैलोक्यराज्येन त्रिलोकाधिपत्येन किं न किमपीत्यर्थः। तस्यैव परमसौख्यावहत्वादिति भावः । त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्प्रत्ययः ॥ ९१ ॥

जिनकी कौपीन और कन्था सैकडों जगह खंडित होनेसे महाजर्जर हो गई है, जो विषयचिन्तासे रहित हैं, जो विना किसीकी अपेक्षा प्राप्त हुआ अन्न खाते हैं, जो श्मशान या महारण्यमें सोते हैं, जिनका मन सदा शांत है और जो योगमहोत्सवमें स्थिर हैं ऐसे अवधूतोंके लिये त्रैलोक्यका आधिपत्यभी क्या है कुछभी नहीं है याने तुच्छ है ॥ ९१ ॥

नन्वत्यन्तसौख्यावहत्वेन प्रसिद्धं त्रैलोक्यराज्यं निषिध्य कौपीनादिसम्पत्तेरेवोत्तमत्वं प्रतिपादितं तदसत् यतस्तस्यैवात्यन्तप्रलोभकत्वादित्याशंक्य मन-

१ निश्चिन्तं सुखसाध्यभै० । २ शय्या । ३ मित्रामित्रसमानतातिविमलाचिन्तातिशून्यालये वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति । इति च पाठान्तरम् ।

स्विनस्तावदेतावदेवाप्रलोभकं किन्तु ब्रह्माण्डमपि तत्राकिञ्चित्करमेवेति सदृष्टान्तमाह——

**ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः ।**
**शफरीस्फुरितेनाब्धिः क्षुब्धो न खलु जायते ॥ ९२ ॥**

ब्रह्माण्डमिति ॥ मण्डलीमात्रं विम्बमात्रं घटादिवदियत्तया परिच्छिन्नमित्यर्थः । मण्डलीभूतमिति वा पाठः । तदा अमण्डलं मण्डलं सम्पद्यमानं मण्डलीभूतम् । अभूततद्भावे च्विः । "ऊर्यादिच्विडाचश्च" इति गतिसंज्ञायां "कुगतिप्रादयः" इति समासः । "विम्बोऽस्त्री मण्डलं त्रिषु" इत्यमरः । ब्रह्माण्डं चतुर्दशभुवनगर्भितब्रह्माण्डकटाहः मनस्विनो धीरस्य योगिन इत्यर्थः । प्रशंसायामिनिः । लोभाय चित्तप्रलोभनाय किं भवतीति शेषः । न भवत्येव । किमु तदेककोणे निलीनं त्रैलोक्यराज्यमिति भावः । तत्र दृष्टान्तमाह । अब्धिः समुद्रः शफरीस्फुरितेन मत्स्यविशेषोल्लुण्ठनेन क्षुब्धः क्षोभितः मथित इति यावत् । "क्षुब्धस्वान्त०" इत्यादिना निपातः । न जायते खलु । न भवति खलु । "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। मत्स्योल्लुण्ठनेनाब्धिक्षोभणमिव त्रैलोक्यराज्ये मनस्विनः प्रलोभनमित्यर्थः। अतस्तदेवातिसौख्यावहमिति भावः९२॥

मनस्वी अर्थात् ब्रह्मविचारवान्के लुभानेको ब्रह्माण्डमण्डल तुच्छ है, मछलीके उछलनेसे समुद्र नहीं उमगता तात्पर्य यह है कि ब्रह्मज्ञानीका चित्त समुद्रवत् गंभीर है, त्रैलोक्यकी संपत्ति उसके आगे छोटी मछली है ॥ ९२ ॥

अथ वैराग्यप्रकारमाह——

**मातर्लक्ष्मि भजस्व कञ्चिदपरं मत्कांक्षिणी मा स्म भू-**
**र्भोगेषु स्पृहयालयस्तव वशे का निःस्पृहाणामसि ।**
**सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृतै-**
**र्भिक्षावस्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥ ९३ ॥**

मातरिति ॥ मातर्जननि हे लक्ष्मि । "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वः । अत्र मातृग्रहणमेतावन्तं कालं त्वया रक्षिता वयमिति भक्त्यतिशयसूचनार्थमि-

१ अब्धेः क्षुब्धता जातु जायते । २ भोगेभ्यः स्पृहयालवो न हि वयं । ३ पूत । ४ सक्तुभि० । इति च पाठांतरम् ।

त्यवगन्तव्यम् । अपरमन्यं कश्चिद्भाग्यवन्तं पुरुषं भजस्व सेवस्व मत्कांक्षिणी मद्विषयाभिलाषिणी मा स्म भूर्न भवेत्यर्थः । "स्मोत्तरे लङ् च" इति चकारादाशीरर्थे लङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः । नन्विदानीं कुतः एतद्वैराग्यमित्यत आहुः । भोगेषु स्रक्चन्दनादिविषयानुभवेषु स्पृहावन्तः पुमांसः । "स्पृहि०" इत्यादिना चुरादीदन्ताण्ण्यन्तादालुच्प्रत्ययः । तव वशे त्वदायत्ततायां वर्तन्त इति शेषः । त्वदधीना भवन्तीत्यर्थः । "वश आयत्ततायां च" इत्यमरः । तर्हि यूयं के इत्याशङ्कायामाहुः । निःस्पृहाणां भोगाभिलाषशून्यानां कासि कीदृग्विधासि न कासीत्यर्थः । वयं निःस्पृहा इति भावः । अतोऽस्मान् विहाय अन्यत्र गच्छेति संबंधः । नत्वेवं चेद्युष्माकं कथं जीविकेत्याशङ्कायामाहुः । वयं सम्प्रतीदानीं सद्यस्तत्काल एव "सद्यःपरुत्परः०" इत्यादिना निपातनात्साधुः । स्यूता विरचिता । कर्मणि क्तः । "छ्वोः शूडनुनासिके च" इति ऊठि यणादेशः । पलाशपत्रपुटिका किंशुकपर्णपुटिकेव पात्रं भिक्षाहरणोचितभाजनं तस्मिन् पवित्रीकृतैः पावनीभूतैरित्यर्थः । अभूततद्भावे च्विः । "अस्य च्वौ" इतीकारः । भिक्षावस्तुभिरन्नकवलरोपितशाकादिभिक्षाद्रव्यैरेव । भिक्षासक्तुभिरिति पाठेऽपि भिक्षासक्तुविशेषैरित्यर्थः । वृत्तिं जीविकां समीहामहे अभिलाषामहे । विरक्ता भवाम इत्यर्थः । अतः किमर्थं त्वमस्माकमिति भावः । अत्र पलाशपत्रपुटिकायाः सद्यःस्यूतत्वकथनं विशदत्वद्योतनार्थमन्यथा भिक्षाहरणानुपयुक्ता स्यादिति वेदितव्यम् । तथा "पलाशं पद्मपत्रं च" इत्यादिवचनात्पवित्रीकरणयोगेषु पलाशपत्रेषु निक्षिप्तसाधारणान्नादीनामपि पवित्रत्वं किमुत निसर्गशुचिभिक्षावस्तूनामिति चावमन्तव्यम् ९३

हे लक्ष्मी माता ! अब तू अन्य किसी पुरुषका सेवन कर, हमारी आकांक्षा मत कर, विषयभोगके इच्छुक तेरे वशमें रहते हैं, निस्पृही विरक्तोंके समीप तू तुच्छ है क्योंकि अब हम तत्काल बनाये पलाशपत्रके पवित्र दोनेमें भिक्षाके वस्तुसेही अपने जीवनवृत्तिकी इच्छा रखते हैं ॥ ९३ ॥

अथ योगिनः सार्वभौमसाम्यमाह—

महाशय्या पृथ्वी विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।

---

१ मही रम्या शय्या । इति पाठान्तरम् ।

शरच्चंन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ९४ ॥

महाशय्येति ॥ पृथ्वी भूमिः महाशय्या विशङ्कटपर्यङ्कः । मही शय्या पृथ्वीति पाठे पृथ्वी पृथुः । "वोतो गुणवचनात्" इति ङीप् । मही शय्या । "गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही" इत्यमरः । भुजलता बाहुवल्ली विपुलं विस्तीर्णमुपधानम् । "उपधानं तूपवर्हम् ।" इत्यमरः । आकाशं च वितानमुल्लोचम् । "अस्त्री वितानमुल्लोचः" इत्यमरः । अयं प्रवर्तमानोऽनुकूलोऽनिलः पवनः व्यजनं तालवृन्तमित्यर्थः । "व्यजनं तालवृन्तकम्" इत्यमरः । शरच्चन्द्रो दीपः । शरद्ग्रहणं चन्द्रस्य प्रकाशातिशयद्योतनार्थम् । इत्येतत्सर्वमयत्नसिद्धमपरिच्छिन्नं चेत्यर्थः । प्रसिद्धं तु नैवम्भूतमिति भावः । स्वयं विरतिः विरक्तिरेव वनिता तस्याः सङ्गेन मुदितः सन्तुष्टः अतः सुखी आनन्दपूर्णः शान्तः शमशीलो मुनिः । "निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः । ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥" इत्युक्तलक्षणः कश्चिद्योगीश्वरः अतनुभूतिरखण्डितैश्वर्यसम्पन्नो नृपः सार्वभौम इव शेते स्वपिति निरातङ्कं निद्रातीत्यर्थः । रूपकसङ्कीर्णोऽयमुपमालङ्कारः । तथा उपमानान्नृपादुपमेयस्य मुनेरपरिच्छिन्नशय्यादिसम्पन्नत्वेनाधिक्यप्रतीतेर्व्यतिरेको व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ९४ ॥

भूमिही जिसकी सुन्दर शय्या है, भुजाही सिरहानी ( तकिया ), आकाशही चंदोवा, अनुकूल वायुही पंखा और शरच्चंद्रमाही प्रकाशमान दीपक है इन सामाग्रियोंसे विरक्तारूपी स्त्रीके संग आनंदसे शांत सुखी मुनि बडे ऐश्वर्यवान् राजाओंके समान सुखसे शयन करता है ॥

अथ योगिस्वरूपं निरूपयति--

भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
हानादानविरक्तमार्गनिरतः कश्चित्तपस्वी स्थितः ।
रथ्याक्षीणविशीर्णजीर्णवसनः सम्प्राप्तकन्थासनो
निर्मानो निरहंकृतिः शमसुखाभोगैकबद्धस्पृहः ॥ ९५ ॥

---

१ स्फुरद्दीपश्चन्द्रो । २ सुखं । ३ दानादा० । ४ कन्थाधरो । इति च पाठांतरम् ।

भिक्षेति ॥ भिक्षामश्नातीति भिक्षाशी भिक्षान्नपात्रभोजनेन शरीरधारणतत्पर इत्यर्थः । जनमध्ये सङ्गरहित आसक्तिविहीनः । "सङ्गात्सञ्जायते कामः" इत्यादिस्मृतेस्तस्य निदानत्वादिति भावः। किन्तु सदा स्वायत्ता स्वाधीना चेष्टा व्यापारो यस्य स तथोक्तः । स्वच्छंदविहारनिरत इत्यर्थः । स्वाधीनात्मीयव्यापारो वा । "अधीनो निघ्न आयत्तः" इत्यमरः । हानादानयोस्त्यागस्वीकारयोर्विरक्तः असंकीर्णः यो मार्गस्तत्र निरत आसक्तः । नियमेन हेयवस्तुहानोपादेयोपादानतत्पर इत्यर्थः । यद्वा हानमिदं हेयमिति त्यागः। आदानमिदमुपादेयमिति स्वीकारस्ताभ्यां विरक्तः विरहितः यो मार्गस्तत्र निरत आसक्तः । नियमेन हेयवस्तुहानोपादेयोपादानतत्पर इत्यर्थः । यद्वा हानमिदं हेयमिति त्यागः आदानमिदमुपादेयमिति स्वीकारः । हेयोपादेयबुद्धिशून्य इत्यथः । "निस्त्रैगुण्ये पथि विहरतां को विधिः को निषेधः ।" इत्यादिवचनात्तस्य विधिनिषेधातीतत्वादिति भावः । रथ्यायां वीथ्यामाकीर्णं अनुपयुक्तत्वाज्जनैर्विक्षिप्तः । कीर्णं विशीर्णं विशकलितं तत्कुतो जीर्णं पुरातनं तथाभूतं वसनमाच्छादनं यस्य स रथ्याकीर्णविशीर्णजीर्णवसनः। "चीराणि किं पथि न संति दिशंति भिक्षाम् । " इत्यादिना तस्य तथाविधवसनधारणस्वाभाव्यादिति भावः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । अर्शआदिराकृतिगणः । यद्वा रथ्यायां कीर्णमनादरेण निक्षिप्तं विशीर्णं जीर्णं च वसनं निजाच्छादनं येन स तथोक्तः । संप्राप्तं समधिष्ठितं कंथैवासनं येन स तथोक्तः । चतुर्गुणितकंथोपर्युपविष्ट इत्यर्थः । अत एव निर्मानोऽभिमानशून्यः संसाराध्यासरहित इत्यर्थः। निरहंकृतिरहंकारशून्यस्तदात्माध्यासरहित इत्यर्थः। शमो नाम वैराग्येण निर्विकारचित्तत्वम्, तेन यः सुखाभोगः आनन्दातिशयस्तत्र एकं मुख्यं यथा तथा बद्धा स्पृहा येन स तथोक्तः । ब्रह्मध्याननिष्ठ इत्यर्थः । कश्चित्कोऽपि तपस्वी महातपाः योगीश्वरः । प्रशंसायां विनिः । स्थितः निरातङ्कं वर्तत इत्यर्थः । रथ्याकीर्णेति संप्राप्तेति च विशेषणद्वयेन बाह्यवैराग्यमित्यवगन्तव्यम् । स्वभावोक्तिरलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥ ९५ ॥

भीख मांगके खाना, लोगोंके मध्यमें असंग रहना, स्वाधीन चेष्टा करना, देने और लेनेसे निवृत्त मार्गमें रत रहना, मार्गमें पडे फटे पुराने वस्त्रके टुकडेकी गुदडी ओढना. मान और अहंकारसे रहित होना, शमसुख अर्थात् ब्रह्मानन्दहीमें इच्छा रखना इस प्रकारसे कोई तपस्वी स्थिर रहता है ॥ ९५ ॥

अथ योगिनां मानावमानतुल्यतामाह—

चण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः
किं वा तत्त्वनिवेशपेशलमतिर्योगीश्वरः कोऽपि किम् ।
इत्युत्पन्नविकल्पजल्पमुखरैराभाष्यमाणा जनै-
र्न क्रुद्धाः पथि नैव तुष्टमनसो यान्ति स्वयं योगिनः ॥ ९६॥

चण्डाल इति ॥ अयं परिदृश्यमानश्चण्डालः किमन्त्यजो वा । अथ वेति पक्षान्तरे । द्वे जाती शूद्रत्वब्राह्मण्यरूपे यस्य स तथोक्तः । किं ब्राह्मणो वा । "जन्मना जायते शूद्रः कर्मणा जायते द्विजः" इति वचनादिति भावः । यद्वा द्वे जाती जन्मनी गर्भनिर्गमसंस्काराभ्यां यस्य स द्विजातिः किमथ । यद्वा शूद्रः किं वृषलो वा किंवा यद्वा तापसः किं तपोनिष्ठो वा किंवा । तत्त्वनिवेशपेशला परमार्थपर्यालोचनतत्परा मतिर्यस्य सः तथोक्तः कश्चित्कोऽपि योगीश्वरः किं ध्याननिष्ठो वा इत्यनेन प्रकारेणोत्पन्नैरुदितैर्विकल्पजल्पैर्विकल्पवाक्यैर्मुखरा वाचालास्तैरित्थंभूतवाक्यानि वदद्भिरित्यर्थः । जनैः पथि मार्गे आभाष्यमाणा अधिक्षिप्यमाणा अपि न क्रुद्धा न कोपिताः चण्डालत्वाद्याक्षेपेणेति भावः । नैव तुष्टमनसः न सन्तुष्टान्तःकरणाश्च द्विजातित्वाद्याक्षेपेणेति भावः । योगिनो योगारूढाः स्वयं यान्ति तूष्णीं गच्छन्ति ब्रह्मनिष्ठत्वादिति भावः । तथा च गीतावचनम्—" न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् । स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ शीतोष्णसुखदुःखेषु तथा मानापमानयोः । ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ॥ युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः । " इत्यादि ॥ ९६ ॥

यह चंडाल है वा ब्राह्मण है, शूद्र है वा तपस्वी है अथवा तत्त्वविवेकमें चतुर बुद्धिमान् कोई योगीश्वर है ऐसे संदिग्ध अनेक प्रकारके वक्ताजनोंके विकल्पोंकरके मार्गमें संभाषण करनेपरभी योगी लोग न क्रुद्ध होते हैं न हर्षित होते हैं किन्तु स्वच्छन्द अपने मार्गमें चले जाते हैं ॥ ९६ ॥

अथ हिंसादिराहित्यवृत्तिमाह—

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं

व्यालानां पशवस्तृणाङ्कुरभुजस्तुष्टाः स्थलीशायिनः।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
तामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥९७॥

हिंसेति ॥ हिंसया अन्योपतापकवधादिभिः शून्यं रहितमयत्नेन यत्नं विना लभ्यं प्राप्यमशनमन्नम् "भिःसा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः। धात्रा ब्रह्मणा व्यालानां सर्पाणाम्। "व्यालो दुष्टगजे सर्पे" इति विश्वः। मरुता वायुना कल्पितं निर्मितम्। पशवः गोप्रभृतयस्तृणांकुरान् बालतृणानि भुञ्जन्तः सन्तः स्थलीशायिनः अकृत्रिमप्रदेशे शयनवन्तस्तुष्टाः सन्तुष्टाः। संसारः पुत्रमित्रकलत्रादिधारावाहिरूपा संसृतिः स एव अर्णवस्तस्य लंघने अतिक्रमणे क्षमा धीर्येषां तेषां नृणां जनानाम्। यथा तरणिद्वारा समुद्रं तरन्ति तथा ज्ञानद्वारा संसारं तरन्तीत्यर्थः। सा वृत्तिः पूर्वोक्तप्रसिद्धजीवनं कृता निर्मिता ब्रह्मणेत्यर्थः। तां वृत्तिमन्वेषयतां मार्गमाणानां निरस्तरजस्तमोजनितदोषाणां सर्वे गुणाः सततं सर्वदा समाप्तिं नाशं प्रयान्ति प्राप्नुवन्ति। "यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः। शेषवृत्तिविधानाय सुप्तः किं नु मृतोऽपि वा॥" इति वचनरीत्या वृत्तिकल्पने जागरूकः सन् भगवान् वर्तत इति मत्वा हिंसादिराहित्येन वृत्तिं कुर्वन् यदृच्छया सम्प्राप्तद्रव्येन तुष्टः सन् यत्र कुत्र वा वसन् रजस्तमोदोषैरलिप्तः सन् योगी सर्वदा आत्मानुसंधानं कुर्वन् स्थातव्य इत्याशयः॥९७

विधाताने हिंसारहित विना प्रयत्न घर बैठे वायु भोजन सर्पोंके लिये जीविका बनाई और पशु ऐसे बनाये जो सदा संतोषपूर्वक तृणोंको खाते हैं और भूमिपर सोते हैं और जिनकी बुद्धि संसाररूपी समुद्र लांघनेको समर्थ है उन मनुष्योंकी वृत्ति ऐसी बनाई कि जिसके खोजमें सब गुण समाप्त हो जाँय पर वह सिद्ध न होय ॥ ९७ ॥

अथ निवृत्तिप्रकारमाह—

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।

---

१ स्पष्टाः। इति पाठान्तरम्।

किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्गे मदीये ॥९८॥

गंगेति । गङ्गायाः सुरनद्यास्तीरे कूले । "कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ।" इत्यमरः । तीरग्रहणं तद्गतशीतत्वपावित्र्यादिसिद्ध्यर्थम् । हिमगिरेः शीतनगस्य शिलाया पाषाणस्य उपरि बद्धं पद्मासनं येन तस्य किं च ब्रह्मणः ध्यानमुपासनं तस्य अभ्यसनमभ्यासस्तस्य विधिः विधानं तेन ।"विधिर्विधाने दैवेऽपि" इत्यमरः । योगनिद्रां गतस्य प्राप्तस्य योगिनः मम तैः सुदिवसैः पुण्यदिनैर्भाव्यं किम् । यत्र ते जरठहरिणाः वृद्धकुरङ्गा निर्विशङ्काःनिर्भीताः सन्तः स्वाङ्गं स्वशरीरं मदीये अङ्के शरीरे कण्डूयन्ते तैर्भाव्यमित्यभिप्रायः । एवं च ग्रामनिवासं त्यक्त्वा गङ्गातीरे हिमवत्पर्वतपाषाणोपरि पद्मासनासनवर्ती ब्रह्मज्ञानाभ्यासविधानेन योगनिद्रां गतः सन्नहं निर्विशंकैः जरठहरिणैः साकं यदा स्थास्ये तदा मे सुदिवसा जायन्त इत्यभिप्रायः ॥ ९८ ॥

जिस समय हम गंगाके तट हिमाचलकी शिलापर आसन लगा पद्मासन बांधे बैठेंगे और ब्रह्मज्ञानके अभ्यासमें विधिपूर्वक आंख मूंद योगनिद्रामें प्राप्त होंगे, देखें हमारे ऐसे सुदिन कब होते हैं जहां निःशंक हो बूढे २ हरिण हमारे देहमें अपना अंग रगडके खुजलाहट मिटावेंगे ॥ ९८ ॥

अथ केवलं सर्वसङ्गपरित्यागमाह–

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं
विस्तीर्णं वस्त्रमाशादशकमचपलं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिणतस्वात्मसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति॥९९॥

पाणिरिति ॥ पवित्रं परिशुद्धं पाणिः हस्त एव पात्रं भाजनम् । "योग्यभाजनयोः पात्रम्" इत्यमरः । भ्रमणेन सञ्चारेण परितं प्राप्तं भैक्ष्यं भिक्षाकदम्बकमक्षय्यं नाशरहितमन्नमशनम् । आशानां दिशां दशकं दश विस्तीर्णं विशालं वस्त्रं वासः । उर्वी भूमिरस्वल्पं महत् अचपलमचञ्चलं तल्पं

१ संप्राप्स्यन्ते । २ शृङ्गकण्डूविनोद । ३ मुदशकममलं । ४ परिणति । इति च पाठान्तरम् ।

शय्या। येषां निःसङ्गतायाः सङ्गराहित्यस्य अङ्गीकरणे परिणतं परिपकं गतं यत् स्वान्तं तेन सन्तोषिणः सन्तुष्टास्ते धन्याः। संन्यस्ताः त्यक्ताः दैन्यस्य व्यतिकरनिकराः यैस्ते तथोक्ताः सन्तः कर्म निर्मूलयन्ति नाशयन्ति। एवं च यत्र कुत्र वा वसन् पाणिपात्रेण भैक्षान्नं भुक्त्वा दिगम्बरः उर्वीशयनो निःसङ्ग-परिणतचित्तेन सन्तुष्टः सन् त्यक्तदैन्यव्यतिकरनिकरो धन्यः कर्मधारावाहिक-जन्मपरम्पराप्रदं कर्म निर्मूलयतीत्यभिप्रायः॥ ९९॥

अपने आत्मामें सन्तोषवाले उन पुरुषोंको धन्य है कि, जिनका हाथही पात्र है, जो भ्रमण करके भिक्षाका अन्न खाते हैं जिनका निर्मल दिशारूपी दशावाला आकाश वस्त्र है, जिनकी छोटीसी पृथिवी शय्या है, जो परिणाममें असंग (इकले) रहने स्वीकार करते हैं और जिन्होंने दीनताके समूहको भली प्रकार छोड दिया है और जो कर्मकी जडको उखाड देते हैं॥ ९९॥

अथ पञ्चभूतानि सम्बोध्याह–

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एव भवतामन्त्यः प्रणामाञ्जलिः।
युष्मत्सङ्गवशोपजातसुकृतस्फारस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि॥ १००॥

मातरिति॥ हे मातः जननि मेदिनि वसुमति, हे तात जनक मारुत वायो, हे सखे सुहृत् तेजः, हे जल उदक सुबन्धो शोभनबन्धो, हे भ्रातः सहोदर व्योम अम्बर, भवतां युष्माकमन्त्यश्चरमः प्रणामाञ्जलिः नमस्कारपूर्वकाञ्जलिः निबद्ध एव। "पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्" इत्यमरः। युष्माकं सङ्गस्य योगस्य वशेन अधीनेन उपजातं यत्सुकृतं तेन स्फारं विस्तारं स्फुरत् निर्मलं च यज्ज्ञानं तेन अपास्तो दूरतस्त्यक्तः समस्तमोहमहिमा पुत्रमित्रकलत्राद्याभिनिवेशाज्ञानातिशयः सन् अहं परे ब्रह्मणि सच्चिदानन्दस्वरूपिणि निर्विकारे निष्कलंके निरञ्जने ब्रह्मणि लीये। एवं च दारैषणावित्तैषणापुत्रैषणादित्रयरहितः सन् चिदानन्दस्वरूपः सन् विदेहकैवल्यपर्यन्तं जीवन्मुक्तः सन् अहं वर्त्ते इत्यभिप्रायः॥ १००॥

१ मेघ। २ तोद्रेक० इति च पाठान्तरम्।

हे माता पृथ्वी ! हे पिता वायु ! हे सखा तेज ! हे बन्धु जल ! हे भाई आकाश ! तुम्हें हाथ जोड अन्तसमय प्रणाम करते हैं, तुम्हारे संगसे पुण्य बना, पुण्य उदय होनेसे ज्ञान निर्मल हुआ और ज्ञान निर्मल होनेसे मोहमहिमा दूर हुई, अब हम परब्रह्ममें लय होते हैं अर्थात् पृथ्वी आदि पंचतत्त्वरचित देहको ब्रह्मज्ञानमें सहायक समझ प्रणाम करते हैं क्योंकि फिर तुमसे भेंट न होगी ॥ १०० ॥

विवेकव्याकोशे विदधति शमे शाम्यति तृषा
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः।
जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपण-
स्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १०१ ॥

विवेकेति ॥ तृषा तृष्णा शमे उपशमे सति शाम्यति उपशमं गच्छति। क सति विवेकस्य व्याकोशे विकाशे सति सा परिणतिः तृष्णापरिणामः तुङ्गे परिष्वङ्गे आश्लेषे सति प्रसरति युक्तोऽयमर्थः। अपरापि या विलासिनी भवति सा तुंगे परिष्वंगे सति प्रसरतितरां न तु व्याप्तिं भजेत लब्धावकाशत्वात्। तथा सा तृष्णापि मरुतां देवानामप्यधिपतिः इन्द्रः यस्यां तृष्णायां तृषापात्रं भवति तुङ्गे परिष्वङ्गे छेत्तुमशक्तो भवति इत्यर्थः। मनुजानां तु का कथा। किंविशिष्टो मरुतामाधिपतिः जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणो जराजीर्णं ऐश्वर्यं तस्य ग्रसनेन यद्गहनं तस्य आक्षेपे कृपणः विध्वंसे असमर्थः अतः कारणात् तृष्णा गरीयसी ॥ १०१ ॥

जब विवेकके प्रकाशसे शान्तिका उदय होता है तब तृष्णाभी शान्त हो जाती है और ऊंचे विषयके संसर्गसे वही तृष्णा ऐसी फैल जाती है जिसके होते जरासे जीर्ण ऐश्वर्यके कठोर त्यागनेमें इन्द्रभी असमर्थ होता है अर्थात् महान् पदवीवाला इन्द्रभी तृष्णाको नहीं त्याग सकता ॥ १०१ ॥

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम्।

इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति ॥ १०२ ॥

पुरेति ॥ पुरा पूर्वं उपशमवतां विद्वत्ता वैदुष्यं क्लेशहतये. संसारनिवारणार्थासीत्। असौ विद्वत्ता कालेन गता विषयिणां विषयसुखसिद्ध्यै गता। अहो इति खेदे। कष्टं विलोक्य इदानीं सापि विद्वत्ता प्रतिदिनं दिनं प्रति अधोऽधः प्रविशति। किं कृत्वा शास्त्रविमुखान् क्षितितलभुजः प्रेक्ष्य निरीक्ष्य ॥ १०२ ॥

पहिले जो विद्या पण्डितोंके चित्तके क्लेश दूर करनेके निमित्त थी, फिर कुछ दिन परे वह विषयी लोगोंके विषयसुखके सिद्ध होनेके लिये भई अर्थात् विद्यासे राजाओंको प्रसन्न करके धन आदि ले सुखभोग करना इस कामकी हुई, इस समयमें राजाओंको शास्त्र सुननेसे विमुख देखकर प्रतिदिन वह विद्या अधोगतिको प्राप्त होती जाती है यह बडा कष्ट है ॥ १०२ ॥

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ १०३ ॥

अतीति ॥ हे वाले! लटभललनाभोगसुभगः कालोऽतिक्रान्तः अतिचक्राम सम्पूर्णीकृतः। लटभाः आप्तलावण्या या ललनास्तासां भोगेन सुभगो मनोज्ञः लटभललनाभोगसुभगः। इहास्मिन् मर्त्यलोके संसारसरणौ सुचिरं भ्रमन्तः श्रान्ताः स्मः। इदानीं स्वःसिन्धोः स्वर्गङ्गायास्तटभुवि कच्छस्थलीषु शिव शिव शिवेति प्रतनुमः विस्तारयामः। कथम्भूता वयं सुतारैः फूत्कारैः समाक्रन्दनगिरः। रे वाले त्वं कासि तव मुखं न विलोकयामः ॥ १०३ ॥

भूषण आदिसे शोभित जो स्त्री उनके भोगनेमें सुभग (योग्य) यौवन (समय) तो बीत गया और चिरकालतक इस संसारके मार्गमें भ्रमते २ हम थक गये, अब तो श्रीगंगाजीके तटकी भूमिपर उक्त स्त्रियोंकी निंदा करते हुए हम शिव शिव शिव यह जप करेंगे॥१०३॥

महादेवो देवः सरिदपि च सैषा सुरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः।

सुहृद्वा कालोऽयं व्रतमिदमदैन्यव्रतमिदं
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ १०४ ॥

महादेव इति ॥ देवो महादेवो नान्यः । सरिदपि नद्यपि सुरसरित्सुरनदी । अगारं गृहं गुहा एव । वसनमपि वस्त्रमपि ता एव हरितो दिशः । अथवा सुहृन्मित्रमयं कालः । इदमदैन्यव्रतं इदं व्रतं कियद्वक्ष्यामः । दयिता कलत्रं वटविटप एवास्तु ॥ १०४ ॥

महादेवही एक देव, गंगाही नदी, एक गुहाही घर, दिशाही वस्त्र, कालही मित्र, किसीसे दीन न होना यही व्रत और कहांतक कहें वटका वृक्षही हमारी वल्लभा हो ॥ १०४ ॥

सखे धन्याः केचित् त्रुटितभवबन्धव्यतिकरा
वनान्ते चित्तान्तर्विषमविषयाशीविषगताः ।
शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां
नयन्ते ये रात्रिं सुकृतचयचित्तैकशरणाः ॥ १०५ ॥

सखे इति ॥ हे सखे मित्र ! त एव धन्याः ये एवंप्रकारेण रात्रिं नयन्ते । किम्भूतास्ते सुकृतचयचित्तैकशरणाः सुकृतानां चयः सुकृतचयश्चित्ते एकं शरणं येषां ते सुकृतचयचित्तैकशरणाः । पुनः किम्भूताः त्रुटितभवबन्धव्यतिकराः त्रुटितो भवबन्धस्य व्यतिकरो येषां ते । वनान्ते वनमध्ये चित्तान्तर्विषमाविषयाशीविषगताः चित्तान्तर्मानसमध्ये विषमो यो विषय एव आशीविषः दृष्टिविषोरगो गतो येषां ते । वा विषमविषयाशीर्विगलिताः इति पाठः । किम्भूतां रात्रिं शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगां शरच्चन्द्रस्य ज्योत्स्नया शरत्कालीनचन्द्रमसः कान्त्या धवलेन गगनाभोगेन विस्तारेण सुभगा मनोज्ञा सा शरच्चन्द्रज्योत्स्नाधवलगगनाभोगसुभगा ताम् ॥ १०५ ॥

हे मित्र ! उन पुरुषोंको धन्य है जो वनमें बैठे हुए शरदृतुकी चान्दनीसे श्वेत, आकाशके विस्तारसे सुन्दर और मनोहर रात्रिको इस प्रकार बिताते हैं कि पुण्यका समूह जिनके मनमें शरण है और जिन्होंने भवबंधनके क्षोभको तोड दिया है और जिनके मनमेंसे भयानक कठोर सर्परूपी विषय निकल गया है ॥ १०५ ॥

यूयं वयं वयं यूयमित्यासीन्मतिरावयोः ।
किं जातमधुना मित्र येन यूयं वयं वयम् ॥ १०६ ॥

यूयमिति ॥ हे मित्र, पूर्वं आवयोः तव ममेति बुद्धिरासीत्। कथं यूयं भवंतः वयमेव वयं यूयमित्यभेदबुद्धिरासीत्। अधुना किं जातं निमित्तं येन यूयमेव वयं वयमेवेति भेदबुद्धिर्जाता ॥ १०६ ॥

जो तुम हो सो हम हैं और जो हम हैं सो तुम हो इस प्रकार परस्परमें कुछ भेद नहीं है ऐसीही बुद्धि हमारी प्रथम थी, अब क्या नई बात हुई कि जिससे तुम तुम्ही हो हम हमही हैं ॥ १०६ ॥

जीर्णा कन्था ततः किं सितममलपटं पट्टसूत्रं ततः किं
एका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किम्।
भक्तं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
व्यक्तज्योतिर्नवान्तर्मथितभवभयं वैभवं वा ततः किम् १०७॥

जीर्णेति ॥ जीर्णा कन्था लब्धा ततः किम्। सितं शुभ्रममलं स्वच्छं पटं वस्त्रं वा पट्टसूत्रं दुकूलादिकं ततः किम्। एका अद्वितीया भार्या ततः किम्। हया अश्वा करिणो गजाश्च तेषां शोभना गणाः समूहास्तैरावृतो व्याप्तो वा ततः किम्। भक्तमोदनं भुक्तं ततः किम्। अथवा वासरान्ते दिनान्ते कदशनं कुत्सितभोजनं ततः किम्। तथा व्यक्तं प्रत्यक्षं ज्योतिर्ब्रह्म यस्मिंस्तथाविधं मथितं भवभयं येन अन्तः हृदि वैभवमैश्वर्य न ततः किम् ॥ १०७ ॥

पुरानी गुदडी धारण की तो क्या, उज्ज्वल निर्मल वस्त्र वा पीताम्बर धारण किया तो क्या, एकही स्त्री पास रही तो क्या, अथवा घोडे हाथीसहित करोड स्त्रियां रहीं तो क्या, अच्छे व्यञ्जन भोजन किये तो क्या वा कुत्सित अन्न सायंकालको खायें तो क्या, जिससे भवभय नष्ट हो जाय ऐसी ब्रह्मकी ज्योति हृदयमें न जानी तो क्या बडा विभव पाया हो तो भी क्या ॥ १०७ ॥

*त्रैलोक्याधिपतित्वमेव विरसं यस्मिन्महाशासने
तल्लब्ध्वासनवस्त्रमानघटने भोगे रतिं मा कृथाः।
भोगः कोऽपि स एक एव परमो नित्योदितो जृम्भते
यत्स्वादाद्विरसा भवन्ति विषयास्त्रैलोक्यराज्यादयः १०८

* वैराग्यशतकस्य चत्वारिंशत्तमश्लोकस्य छायाभूतोऽयं श्लोक इति प्रतिभाति।

त्रैलोक्येति ॥ हे आत्मन् ! तत्परब्रह्म लब्ध्वा भोगे रतिं मा कृथाः. यस्मिन्परब्रह्मणि एव निश्चयेन त्रैलोक्याधिपतित्वं विरसं वर्तते किंभूते भोगे आसनवस्त्रमानघटने आसनं सिंहासनसुखासनादि वस्त्राणि चीरांशुकपट्टदुकूलादीनि मानं महत्त्वास्तित्वमानादि तेषां घटनं आसनवस्त्रमानघटनं तस्मिन् एवं विविधे भोगे का रतिः कोऽपि संभोगः एक एव परमब्रह्मनित्योदितः सन् जृंभते यत्स्वादात् यस्य ब्रह्मणः रसस्वादात् त्रैलोक्यराज्यादयो विषया विरसा भवन्ति मोक्षदायकत्वात् ॥ १०८ ॥

हे जीव ! जिस परब्रह्मज्ञानके आगे त्रैलोक्यका राज्य फीका होजाता है उसे प्राप्त होकर भोजन वस्त्र और मानके लिये भोगोंमें प्रीति मत कर वही एक भोग सबसे श्रेष्ठ और नित्य ' उदित ' प्रकाशित है जिसके स्वादके सन्मुख त्रैलोक्यराज्य आदि सब ऐश्वर्य निरस हो जाते हैं १०८

ज्ञानं सतां मानमदादिनाशनं
केषांचिदेतन्मदमानकारणम् ।
स्थानं विविक्तं यमिनां विमुक्तये
कामातुराणामतिकामकारणम् ॥ १०९ ॥

ज्ञानमिति ॥ सतां सत्पुरुषाणां ज्ञानं मानमदादिनाशनं भवति केषांचिद्धमानां एतज्ज्ञानं मदमानकारणं भवति । उक्तमेवार्थं कविर्दृष्टान्तेन द्रढयति । यमिनां मुनीनां विविक्तं स्थानं एकान्तप्रदेशः विमुक्तये भवति । संसारच्छेदनाय स्यात् । कामातुराणां पुरुषाणां विविक्तं जनरहितं स्थानं अतिकामकारणं भवति कामविकाराय स्यात् ॥ १०९ ॥

सत्पुरुषको, ज्ञान मान मद आदि नष्ट करनेके हेतु है और वही ज्ञान दुर्जनोंको मान मद उत्पन्न करता है । जैसे एकांतस्थान संयमी पुरुषोंको मुक्तिसाधनका हेतु होता है और कामातुरोंको कामसाधनका कारण होता है ॥ १०९ ॥

दैवसम्पद्रूपपरिवारवतः कुतोऽपि भयं नास्तीत्याह-

धैर्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं मित्रमिदं दया च भगिनी भ्राता मनःसंयमः ।

शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
ह्येते यस्य कुटुम्बिनो वद सखे कस्माद्भयं योगिनः ॥११०॥

धैर्यमिति ॥ हे सखे ! त्वं वद ब्रूहि । एते कुटुम्बिनो यस्य योगिनस्तस्य कस्माद्भयं न कुतोऽपीत्यर्थः । कुटुम्बिन एवाह—यस्य योगिनो धैर्यं पितास्ति । क्षमा च सहिष्णुता जननी मातापित्रोरिवोभयोः पालकत्वात् । यस्य शांतिश्चिरं गेहिनी भार्यास्ति । तथा सत्यं यथादृष्टश्रुतकथनरूपमिदं मित्रमस्ति । दया च सर्वभूतहितेच्छा भगिनी, मनःसंयमो मनोनिग्रहो भ्राता, भूमितलं शय्या, यस्य दिश एव वसनं वस्त्रम्, ज्ञानामृतं भोजनमित्येतादृशी संपदस्ति तस्य कुतोऽपि भयं नास्तीति भावः। "दैवी संपद्विमोक्षाय निवन्धायासुरी मता ।" इति भगवद्वचनात्तद्वतो न कुतो भयम् ॥ ११९ ॥

हे सखे! तूही बता कि, धैर्य्य जिनका पिता है,क्षमा जिसकी जननी है, शांति जिसकी भार्या है, सत्य जिसका मित्र है,दया जिसकी बहन है, मनोनिग्रह जिसका भाई है, भूमि जिसकी शय्या है, दशों दिशा जिसका वस्त्र है और ज्ञानामृत जिसका भोजन है ऐसा जिसका कुटुंब है उस योगीको किसका भय है ॥ ११० ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां निर्झरमम्बुपानमुचितं रत्येव विद्याङ्गना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥१११॥

शय्येति ॥ येषां पुरुषाणां एवंविधा स्थितिः तान् अहं एवं मन्ये । ते एव परमेश्वराः । सा का स्थितिः । शैलशिला शय्या गिरिगुहा गृहं, तरूणां त्वचः वस्त्रं, सुहृदः सारङ्गाः, ननु निश्चितं क्षितिरुहाणां वृक्षाणां कोमलैः फलैर्वृत्तिः निर्झरमम्बुपानम्, एवं निश्चयेन रत्येव सहोचिता अङ्गना इव विद्या येषामिति ते ईश्वराः यैः शिरसि सेवाञ्जलिर्न बद्धः ॥ १११ ॥

पर्वतकी चट्टान जिनकी शय्या है, कंदराही घर है, वृक्षोंके वल्कलही वस्त्र हैं, वनके हिरनही मित्र हैं, वृक्षोंके कोमल फलादि भोजनसे जीवन और झरनेका स्वच्छ जल पान है, विद्यारूपी स्त्रीसेहो जिनकी

प्रीति है उन पुरुषोंको हम परमेश्वर मानते हैं जिन्होंने सेवा करनेके हेतु औरोंको प्रणाम न किया ॥ १११ ॥

सत्यामेव त्रिलोकीसरिति हरशिरश्चुम्बिनीवच्छटायां
सद्वृत्तिं कल्पयन्त्यां वटविटपभवैर्वल्कलैः सत्फलैश्च ।
कोऽयं विद्वान् विपत्तिज्वरजनितरुजातीव दुःश्वासिकानां
वक्त्रं वीक्षेत दुःस्थे यदि हि न बिभृयात्स्वे कुटुम्बेऽनुकम्पाम् ॥

सत्यामिति ॥ हि निश्चितं यदि चेत् दुःस्थे स्वकीये कुटुंबे अनुकम्पां कृपां न बिभृयात् । यत्तदोर्नित्यसम्बन्धः इति न्यायात् । तदा कोऽयं विद्वान् अतीव दुःश्वासिकानां नारीणां वक्त्रं वीक्षेत अपि तु कोऽपि न । कया विपत्तिज्वरस्तेन जनिता रुक् तया । कस्यां सत्यां त्रिलोकीसरिति गङ्गायां सत्यामेव । किंभूतायां त्रिलोकीसरिति हराशिरश्चुम्बिनीवच्छटायां हराशिरश्चुम्बिनी ईश्वरमस्तकस्य रमणीव च्छटा वप्रदेशो यस्याः सा तस्याम् । पुनः किंभूतायां त्रिलोकीसरिति सद्वृत्तिं सदा वरं कल्पयन्त्याम् । कैः सत्फलैः किंभूतैः सत्फलैः वटविटपभवैर्वटवृक्षोद्भवैः ॥ ११२ ॥

महादेवका शिर जिसका तट है और जो गंगा वटकी डालियोंके वल्कल और उत्तम २ फलोंसे भली प्रकार निर्वाह कर सकती है ऐसी श्रीगंगाजीके विद्यमान रहते और यदि अपने कुटुंबपर दया न करे तो ऐसा कौन विद्वान् है जो ऐसी स्त्रियोंके मुखको देखे जो विपत्तिके ज्वरसे पैदा हुए लंबे २ श्वासोंको लेती है अर्थात् कुटुम्ब बढानेकी इच्छाही उक्त स्त्रियोंका मुख दिखाती है, नहीं तो गंगातटपरही सर्वानन्द है ॥ ११२ ॥

उद्यानेषु विचित्रभोजनविधिस्तीव्रातितीव्रं तपः
कौपीनावरणं सुवस्त्रममितं भिक्षाटनं मण्डनम् ।
आसन्नं मरणं च मङ्गलसमं यस्यां समुत्पद्यते
तां काशीं परिहृत्य हन्त विबुधैरन्यत्र किं स्थीयते ११३॥

उद्यानेष्विति ॥ तां काशीं परिहृत्य परित्यज्य हन्त इति खेदे । विबुधैः किं अन्यत्र स्थीयते । अपि तु न । यस्यां काश्यां उद्यानेषु विचित्रभोजनविधिः

चान्यत्तीव्रातितीव्रं तपः चान्यत्सुवस्त्रं कौपीनावरणं मण्डनं चान्यद्यस्यां अमितं भिक्षाटनं यस्यां काश्यां मंगलसमं आसन्नं मरणं समुत्पद्यते तां काशीं मुक्त्वा अन्यत्र कथं स्थीयते ॥ ११३ ॥

उपवनोंमें नाना प्रकारके भोजन बनायके खाना और जहां कठिनसे कठिन तप और लंगोटी पहिननाही परम सुन्दर वस्त्र और भीख मांगनाही जहां भूषण हैं और मृत्यु आनाही जहां परम मङ्गल उत्पन्न होता है ऐसी काशीको छोड पण्डित लोग अन्यत्र क्यों वसते हैं ११३

नायं ते समयो रहस्यमधुना निद्राति नाथो यदि
स्थित्वा द्रक्ष्यति कुप्यति प्रभुरिति द्वारेषु येषां वचः।
चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-
र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ११४ ॥

नायमिति ॥ नायं ते समयः प्रतिप्रस्तावो नास्ति यदि प्रभुः स्वामी द्रक्ष्यति तर्हि कुप्यति। अधुना रहस्यं मन्त्रालोचनं स्वामी करोति स्वामी निद्राति निमीलनं कुरुते। येषां धनोन्मदानां द्वारेषु इति वचः अस्थिरे चेतस्तान् प्रभूनपहाय विश्वेशितुः परमेश्वरस्य महेशस्य भवनं याहि। किंभूतं भवनम्? निर्दौवारिकनिर्दयोक्त्यपरुषं निर्गतो दौवारिको यस्मात् तत् निर्दौवारिकं प्रतीहाररहितं निर्दयोक्त्या कठोरोक्त्याऽपरुषाः यस्मिन् तन्निर्दयोक्त्यपरुषं निर्दौवारिकं च तत् निर्दयोक्त्यपरुषं च निर्दौवारिकनिर्दयोक्त्यपरुषं तत्पुनः किंभूतं निःसीमशर्मप्रदं सीमारहितं सर्वसौख्यं प्रददातीति अतिनिर्मलसौख्यदायकम् ॥ ११४ ॥

अभी समय नहीं, महाराज एकान्तमें बैठे कुछ विचार कर रहे हैं, अभी सोते हैं, ड्योढीपरसे उठो तुम्हें बैठे देखेंगे तो प्रभु हमपर क्रोध करेंगे ऐसे वचन जिनके द्वारपर द्वारपाल बोलते हैं उन्हें त्यागकर हे चित्त ! विश्वेश्वरकी शरणमें जा। जिसके द्वारपर कोई रोकनेवाला नहीं, वहां निर्दय और कठोर वाक्य नहीं सुननेमें आते और जो अनन्त सुखदाई है ॥ ११४ ॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा।

तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ ११५ ॥

इति भर्तृहरिकृतं वैराग्यशतकं सम्पूर्णम् ॥ ३ ॥

अहाविति ॥ अहौ सर्पे हारे मुक्ताफलहारे वा वलवति रिपौ शत्रौ सुहृदि हितकरे वा मणौ वा लोष्ठे मृत्पिण्डे पाषाणे वा कुसुमशयने पुष्पशय्यायां दृषदि पाषाणे वा तृणे स्त्रैणे अपत्ये वा इत्यादिषु वा मम समा दृष्टिर्यस्य समदृशः दिवसाः कदा यान्ति गच्छन्ति । किंभूतस्य मम; क्वचित् कुत्रचित् पुण्यारण्ये स्थित्वा शिवेति नामावलिं प्रलपतः उच्चैः आक्रोशेन वदतः ॥ ११५ ॥

इति श्रीपरमयोगीन्द्रवृन्दमानसामिलान्भिलिन्दसन्दोहामन्दानन्दलाभाभिनन्दित-रघुनन्दनचरणारविन्दमकरन्दास्वादनकंदलितसारसारस्वतेन अखण्डत-पःप्रचण्डमुनिप्रकाण्डमण्डलेश्वरशाण्डिल्यमहामुनिगोत्रावतंसस्या-पच्चान्वयसुधापारावारपारिजातस्य धन्वन्तर्यवतारान्तरस्या-युर्वेदप्रमुखनिखिलविद्यानवद्यगद्यपद्यनिर्माणचातुरीधुरी-णसकलकविकुलसार्वभौमस्य कोरिडोपण्डितवर्यस्य तनू-जेन गंगांविकागर्भरत्नाकरसुधाकरेण रामचन्द्र-बुधेन्द्रेण विरचिता सहृदयानंदिन्याख्या शतकत्रयव्याख्या समाप्ता ॥

सर्प वा हार, वलवान् शत्रु वा मित्र, मणि वा पाषाण, पुष्परचित शय्या वं पत्थरकी चट्टान, तृण वा स्त्रियोंके समूहमें समदर्शी होकर वनमें शिव शिव शिव जपते हमारे दिन कहीं व्यतीत होंगे हम यही चाहते हैं ॥ ११९ ॥ इति पं. मिहिरचंद्रकृत भाषाटीका समाप्ता ॥

शतकत्रयम् संपूर्णम् ।

---

पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण—बंबई.

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस,
खेतवाडी—बंबई.

